पा.शिवाभ्यां नमः

# द्राह्यायण श्रौतसूत्रम्

## ( धन्विभाष्यसनाथम् )

मन्त्रविनियोगसङ्ग्रहकारिकया, क्रतुसङ्ग्रहकारिकया,
क्रतुप्रायश्चित्तकारिकया रामनाथदीक्षितकृतप्रभाख्यटिप्पण्या
अनुमालया च सवलितम्


संपादकः

ब्रह्मश्री मायुरम् म. रामनाथ दीक्षितः
घनज्ञ, विद्यावाचस्पति, वेदान्तशिरोमणि, सामवेदलक्षण श्रौतस्मार्त विद्वान
(महीशूरराजकीय संस्थानम्) चेन्नपुरी संस्कृत कलाशाला प्राध्यापकचर
भारतीय राष्ट्रपति सम्मानितश्च



भारत राजकीय विद्याविभाग धनसाहाय्येन मुद्रापयित्वा

सर् सि. पि. रामस्वाम्यार्य धर्मनिधिना प्राकाश्यं नीतम्

विजयतेतराम्

१९८२

अस्य ग्रन्थस्य मुद्रणार्थे आदर्शतया उपात्ताः ग्रन्थाः

क. मायुरं श्री रामनाथदीक्षितानां, पूर्णं घन्विभाष्यसहितं ग्रन्थाक्षरमयं हस्तलिखितं ।

ख. कल्लिकुडि श्री सुब्रह्मण्य शास्त्रिणां समग्रं घन्विभाष्य-सहितं ग्रन्थाक्षरतालपत्रमयम् ।

ग. मेलक्कावेरि मणिश्रौतिनां द्वितीयखण्डप्रभृति षष्ठपटल समाप्तिपर्यन्तं हस्तलिखित ग्रन्थाक्षरमयम् ।

घ. पालूर् श्री अप्पात्तुरै श्रौतिनां आदित आरभ्य षष्ठपटल-पर्यन्तं घन्विसहित ग्रन्थाक्षरमयं हस्तलिखितम् ।

ङ. मूलमात्रम् समग्रम् मरुदूर् R. सन्तानशास्त्रिणाम् ।

च. दशमपटलपर्यन्तं घन्विसहितं Edited by J.N. Reuter Ph. D., L. L. D., Lecturer of Sanskrit in the University of Helsingfors London.

क्रैस्तवाब्दं १९०४ (देवनागर्यां मुद्रितम्)

छ. एकादशपटलप्रभृति पञ्चदशपटलसमाप्तिपर्यन्तं, Edited by Raguveera (in devanagari script) लाहूर् ।

# FOREWORD

*by*

Justice V. Sethuraman, Judge,
Madras High Court (Retd)

From the discovery of Vinayaka idols in distant countries like Mexico and the evidence of the worship of the Sun in countries like Japan, it is clear that the Sanatana Dharma embraced the whole world, until it was displaced by the *Bhuddhist, Christian and other faiths in the several countries* of the world. The result is that the world wide religion is now confined in the Indian Sub-continent and there too, particularly only to Nepal and India. Vedas form the bed-rock of this religion.

The Vedas were divided into four, Rig, Yajur, Sama and Atharvana. Sama Veda alone had 1,000 Sakhas (branches) or versions. The extant Sakhas are only three Viz: Kowthuma, Jaiminiya and Ranayaneeya, prevalent in Tamil Nadu, Kerala and Maharastra respectively.

Sri Krishna declared that he was Sama Veda among the Vedas. That is also the Veda whose chanting is enjoyed by the Kailasapathy. The comparative or relative importance of this Veda is thus beyond dispute. The Vedas prescribe, or deal with the performance of, several yagnas or sacrifices. The puranas, the Itihasas, and the Agamas came into existence to explain the meaning of the Vedas. But for doing the acts or Karmas enjoyed by the Vedas, we have to look only to the Vedas and Vedangas.

The Vedas have six Angas or organs and they are as useful as the organs of the physical body. The Siksha is compared to the nose, Vyakarna to the face, Nirukta to the ear, Chandas to the feet, Jyothisha to the eyes and Kalpa Sutras to the arms. The Kalpa Sutras specify the mantras to be used and explain

assistance for easy location of any Sutra. The author has, by his efforts, placed the world of scholars under a deep debt of gratitude by taking steps to print the sutras, with the help of the Govt. of India. But for his efforts, there would be a risk of these Sutras also not being available to the future generations of Vedic scholars.

The author's previous publication in 1960 of Sama Veda Sarvaswam, khadira Grihya Sutram partly in Tamil and partly in Grantha characters has secured the appreciation of His Holiness of Sri Sankarachary of Kanchi Kamakoti Mutt, Sri Sankaracharya of SringeriSivagamga Samsthanam, Sri Acharya Swamigal of Ahobila Mutt and Sri Madhwacharya Swamigal of Vyasaraya Mutt and various scholars like Sarvasri P. S. Subramania Sastri, Dr. V. Raghavan, Y. Mahalinga Sastri and Sastra Ratnakara S. Ananthakrishna Sastri, T. V. Ramachandra Dikshitar, Pelagam Rama Sastrigal, and Veppatur subramanian Sastrigal and savants like Sir C. P. Ramaswami Iyer. The present book which is in Sanskrit is likely to have a wider circulation and is bound to be found useful by all who set a store by our traditional values and practices. It is but fitting that this publication is brought out under the auspices of the C. P R Foundations, a centre for the propagation of the thoughts, tradition and culture of India and which is doing so much of useful work. In particular Sri C. P. R. himself was a Samavedin.

I am grateful to Br. Sri. Dikshitar for having given me an opportunity of looking into the book at this stage and participating in its publication by writing this Foreword. I commend it to the world of Oriental scholars, traditional and modern.

Madras
18-8-82

V. SETHURAMAN

श्रीशिवाभ्यां नमः

## प्रस्तावना

कल्पकवल्लीजानि कपालिनामान कादिसुरसेव्यम् ।
कल्पाद्यगसनाथ वन्दे वेद च धीविलासाऽऽप्त्यै ॥
यस्येमेकल्पाद्या हस्ताद्यगानिरूपितास्सद्भि ।
तद्वेद कल्पाख्य श्रौत सूत्र विचार्यते किञ्चित् ॥

विदितमेवेद विद्वत्तल्लजानां ऐहिकामुष्मिकप्रेप्सितफल-दायी वेदाख्य. कल्पतरुरिति ।

यमधिकृत्य सर्वज्ञकल्पइतिभगवत्पादाभणन्ति भाष्येस्वीये। षड्दर्शनटीकाकृद्वाचस्पतिमिश्रा अपि परशिवसमतामुपपादयति ।

[1]षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि ।
शाश्वतायनमस्कुर्मो वेदाय च भवाय च ॥ इति ।

परमेश्वर सर्वज्ञत्वादिषड्गुणोपेत । वेदश्चशिक्षादि षडङ्गोपेत । ईश्वर ज्ञानविरागतैश्वर्यं इत्यादि अव्ययगुणदश-कोपेत, वेदश्च च-तु-अपि इत्यादि अव्ययबहुत्वोपेत । उभय-स्यापि शाश्वतत्व प्रसिद्धम् । एव शिवसाम्यम् ।

मनुरप्याह--

भूत भव्य भविष्यच्च सर्व वेदात्प्रसिद्ध्यति । इति ।

---

1. छन्द पादौतु वेदस्य हस्तौकल्पोऽथपठ्यते । ज्योतिषामयन चक्षु शिक्षाघ्राण तर्पणम । मुख व्याकरण प्रोक्त निरुक्तंश्रोत्रमुच्यते । इति ।

एदादृशोवेद, ऋग्यजुस्सामाथर्वभेदेन चतुर्धाभिन्न तत्र सामवेदमधिकृत्य भणति भगवान्पतञ्जलि "सहस्रवर्त्मासामवेद." इति ।

श्रीमद्भागवतेच--- सुकर्माचापितच्छिष्य. सामवेदतरोर्महान् ।
सहस्र संहिताभेद चक्रेसाम्ना ततस्तुतम् ॥

इति । चरणव्यूहपरिशिष्ट, "सामवेदस्यकिल सहस्र भेदा भवन्ति । एष्वनध्यायेष्वधीयानास्तेशतक्रतुवज्र णभिहता. शेषान् व्याख्यास्याम. इत्युक्तम् । तत्र इदानी द्राविड वग बीहार् प्रदेशेषु, कौथुमशाखैकैव प्रथमाना दृश्यते । केरले द्राविडेच-क्वचित् जैमिनीयशाखा कर्णाटक सिह्याचलप्रदेशेषु राणायनीय-शाखा वर्तते । गौतमशाखा क्वचिदस्तीति श्रूयते पर न दृश्यते। राणायनीये मन्त्रब्राह्मणश्रौतस्मार्तादिक द्राह्यायणतो भिन्न न दृश्यते

द्राह्यायणसूत तु कौथुमशाखीयब्राह्मणोक्तान् यागानेव अधिकृत्य सविस्तर बहून् विषयान् विवेचयति ।

सामवेदीयकौथुमशाखाया ब्राह्मणान्यष्टौ—

'अष्टौहिब्राह्मणग्रन्था प्रौढ ब्राह्मणमादिमम् ।
षड्विंशाख्यद्वितीयस्यात् ततस्सामविधिर्भवेत्" ।
आर्षेय देवताध्यायो भवेदुपनिषत्तत ।
संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिता. ॥ इति

श्रौतसूत्राणि च—

ब्राह्मायणमनुपदं निदानंकल्पमेवच ।
उपग्रन्थाश्चक्षुद्राश्च ताण्ड्य (तन्दा) लक्षणमेवच ।
सूत्रं पञ्चविधज्ञेयं कल्पानुपदमेव च ।
अनुस्तोत्र तु विज्ञेयं सूत्राणां दशकस्मृतम् ॥
इति सामवेदसर्वानुक्रमणिका ।

*द्राह्यायण सूत्रंतावत् आदिमप्रौढब्राह्मणोक्तान् विषयान्* सविस्तर प्रतिपादयति । क्वचित् षड्विंशोक्तानपि—

प्रौढब्राह्मणस्य ब्राह्मणान्तरापेक्षयाबृहत्वात् प्रौढमिति, ताण्डिमहर्षिणा दृष्टत्वात्ताण्ड्यमितिपंचविंशत्यध्यायात्मकत्वात्-पंचविंशब्राह्मणमिति च व्यपदेश । तत्र एकाहस्साध्या-ऽग्निष्टोमाख्य ज्योतिष्टोमप्रभृति सहस्रसंवत्सरसाध्यविश्वसृजा-मयनपर्यन्ताना अशीत्युत्तरशतसङ्ख्याकानायागानां विधि., तेषां अह क्लृप्ति. स्तोत्रक्लृप्ति, साम्नां प्रवृत्तिनिमित्तम्, यागानां-नित्यनैमित्तिककाम्यभेदा., काम्येषु पुत्रपश्वन्नराज्यादि ऐहिक फलका, स्वर्गादि सुख, प्रजापतित्वादिस्थान प्राप्तिरूपामुष्मिक-फलकाश्चयागा, प्रस्तोतृउद्गातृप्रतिहर्तृ कर्तव्यकार्याणि, अन्ये च विषया प्रतिपादिताः ॥ एतत्सर्वं अनुक्रमेण द्राह्यायणसूत्रे सविस्तर प्रतिपाद्यते । अपि च कात्यायनापस्तम्बश्रौतसूत्रयोः ताण्ड्योक्तक्रमएवानुसृतप्रायशः ।

आपस्तम्बश्रौतसूत्रे ताण्ड्यब्राह्मणोक्तवाक्यानितथैवाव-धृतानि, तानियथा—

ताण्डये-अध्या-१-ख १-ब्रा-१ महन्मेवोच: इत्यादि एंष ब्राह्मणवाक्यानि-आप-श्रौतसूत्रे-प्र १०-क-१-सू-४-तथैवावधृतानि। एवमुभयत्र समानवाक्यानि आप-२२-२३-प्रश्नयो. ताण्ड्योक्त-२२-२३-२४-२५ अध्यायस्थानि-समानानि दृश्यन्ते। किंच इति छन्दोग ब्राह्मणं, इति-१०-१-३, १० २ ५ इत्यादौ वदति इति ताण्ड्यक इतिचान्यत्र।

कात्यायनश्रौतसूत्रे-ताण्ड्योक्ताविषया:क्रमेणप्रायश: अनूद्यन्ते। आपस्तम्बेनच अग्निष्टोम व्यूढद्वादशाह गवामयना-द्या. क्रतव विश्वसृजामयन पर्यन्ताः ताण्ड्योक्तक्रमेण विधीयन्ते। एतत्सर्वं ब्रह्मश्री चिन्नस्वामिशास्त्रिवर्दैः वाराणस्यां १९३५ क्रैस्तववर्षे मुद्रित ताण्ड्यब्राह्मण भाष्योपोद्घाते विस्तरश पट्टिका प्रदर्शन मुखेन प्रदर्शितम्।

* अतः ताण्ड्यब्राह्मणं बहुत्र प्रमाणतया गृहीतमिति ब्राह्मणान्तरापेक्षया वैशिष्ट्य प्रतीयते। ताण्ड्योनामर्षिः तेन दृष्ट ब्राह्मणम्। सामवेदीय उपाकर्मणि तर्पणसमये शटिभाल्लबिकालबवि ताण्ड्या. इत्युल्लिख्यते। वंशब्राह्मणे विचक्षणस्ताण्ड्य इत्यत्र तण्डस्यगोत्रापत्य-विचक्षणोनामतः इति सायणभाष्यम्। एव द्राह्यायणसूत्र षड्विंशब्राह्मणोक्ताभिचारक्रतून् सदशवर्गेषु प्रभृतीन्, सुब्रह्मण्याह्वानयूपोदुम्बरीविषयान्, प्रायश्चित्तविधिं च सम्यक् प्रतिपादयति।

### द्राह्यायणसूत्रम्

द्राह्यायणो नामर्षि - वंशब्राह्मणे - रुद्रभूतिर्द्राह्यायणः-- इत्युक्तः। तत्र द्रहस्य अपत्य -- द्रह्यन्दात् - गर्गादिभ्यः इति

यञिकृते यञिञोश्च (पा. ४-१-१०१) इति फक्। रुद्रभूतिः नामतः-- इति सायणाचार्येणविवृतम्-- सच वंशब्राह्मणोक्त- प्रथमर्षेः शर्वदत्तस्य आचार्यः। सच श्रौतसूत्रकर्ता अत एव छन्दोगा द्राह्यायणसूत्रिण इति वदन्ति। आश्वलायनसूत्रिणः बोधायनसूत्रिणः, आपस्तंबसूत्रिण इत्यादौ श्रौतसूत्रकारानेव व्य- पदिशन्ति । आश्वलायनसूत्रादौ श्रौतगृह्यसूत्रयोरेकएवकर्ता उपलभ्यते, सामवेदे परं, श्रौतसूत्रकारः द्राह्यायण गृह्यसूत्र- कारः खादिर इति वैलक्षण्यं दृश्यते । वंशब्राह्मणे अनेके ऋषयः प्रतीयन्ते तत्र खादिरः न दृश्यते । अन्यत्र कुत्रापि खादिर नाम न श्रूयते, अतोऽनुमीयते द्राह्यायणस्यैव नामान्तरं खादिर इति स्यादिति । तत्र लिङ्गं च, एवं दृश्यते ।

श्रौतसूत्रं गृह्यसूत्रं

१. तूष्णीमङ्गेदक्षिणा ५-४-३०, एवमङ्गेकुर्वतेतियज्ञे ४-४-२२ २३

२. पाकयज्ञइत्याचक्षते एकाग्नौ यतान् १२-१-४

पाकयज्ञ इत्याख्या यःकश्चै-

३. उदगायन पूर्वपक्षपुण्याह्न काग्नौ १-१-१७

सन्निपाते यज्ञकालोऽनादेशे उदगयनपूर्वपक्षपुण्याहेषु प्रा-

२२-१-१ गावर्तनादह्नः कालोनादेशे १,

१-२

अनयोरुभयत्र अयज्ञ शब्दः, पाकयज्ञ, एकाग्नि, उदगयनादि. शब्दाः एकरूपेण दृश्यन्ते ।

एतदधिकृत्य साधुत्वासाधुत्वविषये, अनूचानाः प्रमाणम् एतदधिकृत्य अस्मदीय सामसारसर्वस्वग्रन्थे विवेचितं १६८ पृष्टे सामवेदसर्वस्वग्रन्थे च १३० पृष्टे

सूत्रंचेदं एकत्रिंशात्पटलात्मक। एकैकस्मिन् पटले चत्वारः खण्डाविद्यन्ते। दशकरूपेणापिविभागोविद्यत इति ज्ञायते

इति छन्दोग सूत्रस्यदीपे धन्विविनिर्मिते।
तृतीयेदशकेषष्ठः पटलोव्याकृतोऽधुना॥ इत्यादि श्लोकेन

अस्य धन्विकृतभाष्य आमूलचूडमुपलभ्यते। सचधन्वी काश्यपगोत्रः वैष्णवःइति ज्ञायते "इतिकाश्यपगोत्रेण धन्विना-प्रीतयेहरेः" इति अनेकत्र श्रूयमाणत्वात्। कस्यपुत्रः कुत्रत्यइति न ज्ञायते। भाष्यतावत् पदार्थविवेचन पूर्वकं श्रोतसूत्रान्तरोपष्टंभपूर्वकं असंगतव्याख्यान्तरनिरसनपूर्वकं तत्रतत्र आक्षेपानुद्भाव्य सयुक्तिकं तत्समाधान पूर्वकं च सुगमार्थबोधक विलसति। बहुत्र आश्वलायनापस्तंबकात्यायनादिसूत्राणां उदाहरणानि दृश्यन्ते। तानि सर्वाणि अध्याय खण्ड वाक्यसंख्या निर्देश सनाथप्रदर्शितानि मदीयप्रभाख्यटिप्पण्याम्। रुद्रस्कन्द कृतव्याख्यापिविद्यत इति श्रूयते परं, न दृश्यते तदेव खण्डयत इति केषांचिदभिप्रायः। एतदपिटिप्पण्यां ज्ञापितम् विद्यते तदेवखण्डयत इति केचित् मखस्वामि भाष्यं इति द्राह्यायणसूत्रे प्रतिपटलं प्रतिखण्डंच प्रतिपाद्यमानविषयाः विषयानुक्रमण्यां प्रदर्शिताः। निदान सूत्र ग्रन्थोपोद्घाते पेट्टणास्तीति विश्रुता-

"प्रधानसूत्रादिकारान् मुनीन्द्राह्यायणादिकान् ।
राणायनादिकान् सामगाचार्यान् प्रणमाम्यहम् ॥ इत्याह"

आपस्तम्ब श्रौत सूत्रवृत्तिकार रुद्रदत्त एवमाह । अन्यूनातिरिक्तांगा इत्याश्वलायनद्राह्यायणौ-इति । आप-श्रौ-१०-१-१

वेदान्तवागीश इति प्रसिद्ध द्राह्यायणसूत्रमधिकृत्य ।
टिप्पणीचकारेति श्रूयते। परं नोपलभ्यते ॥

अस्य भरतस्वामिभाष्य-वर्तते तदनुसारेण धन्वी व्याख्यात् इति ज्ञायते । तद्भाष्य च खण्डयतेऽनेनेति केचन । रुद्रस्कन्दकृते औद्गात्रसारसङ्ग्रहाख्येग्रन्थे । "इति भगवता भाष्यकारेणमखस्वामिना द्राह्यायणसूत्रे प्रथमाध्यायस्य प्रथम खण्डादारभ्य उक्तार्थमात्रमेव स्वमतेन प्रयोगक्रमोदर्शित इति वर्तते । आण्डपिल्लै प्रयोगे बहुत्रप्रमाणत्वेन गृह्यन्तेद्राह्यायण-सूत्राणि ।

सायणाचार्याअपि व्याख्यातवन्तइति श्रूयते, परनोप लभ्यते । धन्विनः व्याख्यानमेव उपलभ्यते, प्रमाणत्वेनगृह्यते च । धन्विन काल-कि पि १०–१२ । सायणस्य-१४ । रुद्रस्कन्दस्य १५ आण्डपिल्लै-१६ मखस्वामी ५ । एवमभिप्रयन्ति-विमर्शकाः ।

सप्रदशपटले पर्याय विष्टवनाधिकृत्यविवेच न पूर्वक कुशाविधान मम्यगीरितम् । तत्र स्तोमा नवप्रकाराएव । स्तोमो नाम उद्गात्रादिभि क्रियमाणानास्तोत्राणांसख्या । सा च नव-

प्रकाराः । अवान्तर भेदाश्चविद्यन्ते । तत्र एकैकस्यविभागस्य पर्यायइति नाम पर्यायविभागस्यविष्टुतिरिति नाम । कुशानाम औदुंवरदारुणा निर्मिताः सङ्ख्यागणनार्थमुपादीयन्ते । कुशाविन्यासप्रकारः पट्टिकया प्रदर्श्यते ॥

त्रिवृत्



पंचदशः



सप्तदशः



एकविंशः



त्रिणवः



त्रयस्त्रिंशः



चतुर्विंशः



चतुश्चत्वारिंशः



अष्टाचत्वारिंशः



ग्रन्थि भाष्यसनाथंद्राह्यायणसूत्रं पूर्णतया नैतावत्पर्यन्तम् मुद्रापित । आदितआरभ्यदशमपटलपर्यन्तं J. N. Reuter Ph. D. L. L. D. प्रभुणा लेण्डन् नगरे १९०४ क्रैस्तवाब्दे मुद्रापितम् । नेदानीमुपलभ्यते कोशागारं विना ।

एकादशप्रभृति पञ्चदशपटलपर्यन्तं रघुवीरमहाशयेन लाहूर् नगरे मुद्रापितम् । उभयमपि देवनागरीमयम् (तदपि-दुर्लभम्) तत पर मुद्रापितं वर्तते इति न श्रूयते । अतः इद प्रथमतया मुद्रणाप्राप्ता.ग्रन्थिभाष्यसमेताः एकविंशतिपटलाः इदानीप्रकाशय्न्ते अपेक्षित पूरणपूर्वकं, प्रामाणिकग्रन्थान्तर प्रदर्शन पूर्वक च रचित मदीय टिप्पण्या सनाथाइति निवेद्यते श्रौततत्त्वबुभुत्सूना सविधे ।

श्रौतसूत्रकाराः

बोधायना,श्वलायना, पस्तंब द्राह्यायणलाट्यायन जैमिनि हिरण्यकेशि याज्ञायन मानव वाराह कौशिक वैखानस कात्यायन भरद्वाजादय श्रौतसूत्रकारा. । तत्र बोधायनः कण्वपुत्रः वेदव्याससमकालिकः तच्छ्रौतसूत्रस्य भाष्यकारः भवस्वामी ।

आश्वलायन श्रौतसूत्रस्य द्वादशाध्यायात्मकस्य भाष्यकर्ता देवस्वामी । तस्यवृत्तिः गार्ग्यनारायणकृता । गृह्यसूत्रस्य हरदत्तकृता अनाविला वृत्ति । आपस्तंबः बोधायनशिष्यः शाखाप्रवर्तकः वेदव्यास समनन्तरकालिकः, तस्य कालः पाणिनेः पूर्वं भिस्तोः पूर्वं अष्टमाब्दीत पूर्वं इति, देशः उत्तरदेशः यमुनातीर-

वासी इतिच विमर्शकाराः। तच्छ्रौतसूत्रस्य भाष्यकर्ता धूर्तस्वामी-कपर्दिस्वामीच। रामाण्डार, रुद्रदत्त इति द्वौवृत्तिकारौ। आपस्तम्ब धर्मसूत्रस्य वृत्तिः उज्वला, वृत्तिकार हरदत्त.। गृह्यसूत्रस्य सुदर्शनः मन्त्रप्रश्नस्य हरदत्तः, सच प्राचीनः सुदर्शन अर्वाचीनः, रुद्रदत्तः भाष्यकारधूर्तस्वामिनां अर्वाचीनः इति ज्ञायते। यत.

अस्यापस्तम्ब सूत्रस्य दुर्ज्ञानाशनसंशयात्।

सूत्रदीपिकयावृत्त्या रुद्रदत्तः परास्यति॥ इति प्रतिज्ञाय-धूर्तस्वामिभाष्यं खण्ड्यते रुद्रदत्तेन स्ववृत्तौ अधोनिर्दिष्टस्थले आप-श्रौ सू-६-२२-६, ६-३१-४, ७ १-१८, ८ २२-१३.। आप-श्रौ-११-९-२ सूत्रे - भाष्यकृत् धूर्तस्वामी अनुपदकारस्यतु ऊर्ध्ववाहुना - इति तद्ग्रन्थमनुवदति। तत्र रामाण्डारवृत्तौ-अनुपदकारः छान्दोग्य उद्‌विंशब्राह्मण व्याख्याता इति वर्तते। तादृशव्याख्या नोपलभ्यते। अनुपदइतिश्रौतसूत्रकिंचिद्वर्तते दश-सूत्रमध्ये। तस्यकर्ता कः इति नज्ञायते, अत विचारणीयं एतत्।

त्रिंशत्प्रश्नात्मक सूत्र आपस्तम्बमुनीरितम्।

श्रौतगार्ह्यस्मार्तकर्म बोधकं तत्र पञ्चभिः॥ इत्यारभ्य-

पञ्चविंशेऽथषड्विंशे गार्ह्यमन्त्राः प्रदर्शिताः। (प्रपंचिताः)

प्रश्नेऽथसप्तविंशेस्यात् गार्ह्यतन्त्र विधिक्रमः।

अष्टाविंशकोनत्रिंशप्रश्नयोः स्मार्तसत्क्रियाः॥

सामान्यतो विशेषेण त्रिंशे शुल्वविनिर्णयः। इति

अस्मिन्ग्रन्थे आपस्तम्ब सूत्राणि बहुषु स्थलेषु उदाहृतानि तानिसर्वाणि पटलखण्डसूत्रसंख्यानिर्देशपुरस्सरं टिप्पण्या निर्दिष्टानि । कात्यायनश्रौतसूत्र - कर्कभाष्यसहितं षड्विंशत्यध्यायरूपं अन्ते शुल्वसूत्रविशिष्टम् विस्तृत भाष्य, टिप्पणीच विद्यते मुद्रित बंबाई नगरे ॥

द्राह्यायणादिश्रौतसूत्रेषु दशसु द्वितीयम्—

अनुपदसूत्रम्— अत्र दशप्रपाठकाः - एकैकस्मिन् प्रपाठके पञ्चदशखण्डास्सन्ति प्रायशः । "यजुषा कर्मसु लिङ्गतो विधान, इत्यारभ्य । मह्ये" एवमुपक्रम्यायां स्वरविरामयोर्नियमः । तस्या आर्षमादित्य' इन्द्रोदेवता-सपाछन्द'-सर्वेषां छन्दसां रूपं यत्प्रथमद्वितीये चतुरक्षरे तेन गायत्री-यत्पञ्चमसप्त, तेन ककुप् यत्प्रथम त्रिपदत नेन जगती-यदन्त्य पुनरभ्यासेन पञ्चवशा तेनातिछन्दा - एवमेषा सर्वाणि रूपाणि सर्वाणि छन्दासि सर्वादेवता । यएनामेव सर्वं छन्दस्यां वेद, सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् अपहतपाप्माविशोकश्च भवति, सपत्नाश्च जयति" । इत्यादि अवश्यविज्ञेयोऽनन्यलभ्यश्चविषयः प्रदृश्यते । ग्रन्थसंख्या १४९४ वाराणसेयसंस्कृतविश्वविद्यालये गोपीनाथसुतपुरुषोत्तमेन लिखित वर्तते । जर्मन् देशे मुद्रितमिति श्रूयते । अस्मद्देशे अनुपलभात उपाकर्मणि वेदारम्भे द्राह्यायणसूत्रपाठानन्तरं अनुपद हित्वा निदानमारभ्यते । अस्मदीयोपाकर्मप्रयोगे योजितंतत् ।

निदानं तृतीयं– पतञ्जलि महर्षिणाप्रणीतं दशप्रपाठकात्मकम् प्रतिपाठकं त्रयोदशखण्डावर्तन्ते । प्रथमतः सप्तखण्डाः छन्दोविचितिसूत्रमयाः । ऋग्वेदे सामवेदे च मन्त्राणां बाहुल्यात् छन्दोविज्ञानाय छन्दश्शास्त्रं प्रवर्तितम्—

या षट्पिङ्गलनागाद्यैः छन्दोविचितयः कृता ।
तासां पिङ्गलनागीया सर्वसाधारणी भवेत् ॥
सर्वानुक्रमणीकाचित् छन्दोनुक्रमणीपरा ।
शौनकीया तृतीयेमा तिस्रऋग्वेदिना मता ।
यजुर्वेदविदामन्या सर्वानुक्रमणी भवेत् ।
सामगानानिदामस्या पतञ्जलिकृताहि सा ॥ इत्यभियुक्तोक्तिः ।

अत्र छन्दोविचितिसूत्रे-चतुर्विंशत्यक्षरा गायत्री, इत्यारभ्य सप्तछन्दांसि, ऊर्ध्वं जगत्या इत्यारभ्याऽति छन्दांसि, देवासुरार्षच्छन्दांसि, तेषां अवान्तरभेदाः - इत्यादि सर्वं विशदतयोक्तम् । छन्दः पादौ तु विज्ञेय इति वेदपुरुषस्य पादत्वेन रूपितम् ।

अवशिष्टे भागः ऋतुप्रयुक्तविषया प्रतिपाद्यन्ते । द्राह्यायणेन असकृत् निदानसूत्र प्रमाणतयाधियते । तस्य तत्र तत्र टिप्पण्यां स्थलनिर्देशः कृतोमयाऽस्मिन् ग्रन्थे ।

## कल्पसूत्रम्

दशसु श्रौतसूत्रेषु चतुर्थमिदं । गार्ग्यमशकप्रणीतम् । श्रौतसूत्राणां सर्वेषां कल्पसूत्रत्वेपि अस्यासाधारणं कल्पसूत्रमिति नाम-बोधायनाप स्तंबादिभिः, श्रौतसूत्रकारैः, मीमांसा भाष्यकार शबरस्वामिभिः ताण्ड्यब्राह्मणभाष्यकारसायणाचार्यैश्च असकृत् प्रमाणतयास्वग्रन्थे इदं सूत्रं ध्रियते, अतः अतिप्राचीनत्वमस्यानुमातुं शक्यते । आण्डपिल्लैश्रौतप्रयोगे बहुलप्रमाणतया गृहीतम् —अत्र एकादशाध्यायाः पंचदशोत्तरशतं खण्डाश्च सन्ति । श्रौतप्रयोगे अन्यत्राविद्यमानाबहवोविषया अत्रविलसन्ति । तिरुप्पति केन्द्रीय विद्यालये मुद्रापितम् । अस्यभाष्यकारः वरदराजइति प्रतीयते ॥

## उपग्रन्थसूत्रम्

श्रौतसूत्रेषु पंचमं-अस्यप्रणेताकात्यायनमुनिः, यमधिकृत्याभियुक्तावदन्ति—

> "याजिनां सूत्रकृत् साम्नामुपग्रन्थस्यकारकः ।
> स्मृतिं श्लोकात्मिकां सम्यक् भ्राजमानांचकारह ।
> महा वार्तिककारः पाणिनीय महार्णवे ।
> मत्प्रणीतानिवाक्यानि भगवांस्तु पतंजलिः ॥
> व्याख्याच्छान्तनवीयेन महावाक्येनहर्षितः ।
> योगाचार्यः स्वयंकर्ता योग शास्त्र निदानयोः ।
> एवंगुण गणैर्युक्तः कात्यायनमहामुनिः । इति

अत्र प्रपाठकाः चत्वारः द्वापंचाशत् खण्डाश्चसन्ति। अत्र क्रतुप्रसंभावितदोषप्रायश्चित्तानि, तत्र साम्नां गानप्रकारः, निधनभेदाः, इत्यादिकमुक्त्वा अन्ते प्रतिहार भक्तिमधिकृत्यविभवतया प्रपंचितम्। अस्यवृत्ति माधवाचार्यकृता, प्रतिहार भागस्य वरदराजेनकृता, इति ज्ञायते—

उपग्रन्थस्य वृत्तिस्तु माधवाचार्येणयाकृता।
तस्या वरद राजेन शेषस्तत्प्रतिपूरित.॥ इति प्रतिहार भाष्ये श्रवणात्

क्षुद्रकल्पसूत्रं

कल्प सूत्र शेषं-ताण्डयशेषस्य यथा षड्विंश इति पृथक्-व्यवहारः तद्वत कल्पसूत्रेएकादशाध्यायाः-अत्र षट्-आहृत्य सप्तदश। अत्रकामनाभेदेन क्रतु नामधिकारिभेदः सामविधिः इत्यादिकं प्रतिपादितम्।

शिष्टाः ताण्यलक्षण, पंचविधसूत्र, कल्पानुपद; अनुस्तोत्राख्य ग्रन्था. प्रतिपाद्यविषये नातीवभिद्यन्ते, अतः नात्र विविच्यन्ते। निर्दिष्टकल्पसूत्राणां अन्येषांच लक्षणग्रन्थानां वरणं मदीय मापसार सर्वस्त्राख्ये १९७२ वर्षे मुद्रिते साम-• सर्वस्वाख्ये १९६० वर्षे मुद्रितेच विस्तरतया कृतमिति नात्र • ते।

द्राह्यायणसूत्रं दक्षिणभारतीया. कौथुमशाखिनः औद्गात्र प्रयोगे ब्रह्मत्वप्रयोगे च प्रमाणतयोपाददते । गृह्यसूत्र च खादिरीयम् ।

अत्र ग्रन्थे धन्विना प्रमाणत्वेन परिगृहीतानां ब्राह्मण, श्रौतसूत्रव्याख्यानां, अन्येषां च व्याकरणमीमांसादि सूत्राणां अध्याय खण्ड वाक्यसंख्यानिर्देशः अधोनिर्दिष्ट. टिप्पण्याम् ॥

## लाट्यायनसूत्रम्

लाट्यायनोनाममहर्षिः श्रौतसूत्र, द्राह्यायणसूत्रवदेव क्वचित् सूत्रभेदेन आमूलचूडं द्राह्यायणीयमनुसरन् सूत्रयामास ।

स च ऋषि. वंशब्राह्मणे नोपलभ्यते । तस्य भाष्यं अग्निस्वामिकृतं संपूर्णं कल्कत्तानगरे क्रैस्तव १८७२ वत्सरे, आनन्दचन्द्र-वेदान्तवागीश इत्युपपदयुजा,पण्डित प्रवरेण मुद्रापितम् ।

श्रीदामोदरसुत, रामकृष्णदीक्षितमहोदयेन लाट्यायनमनुसृत्य, ज्योतिष्टोमपद्धतिः इति ग्रन्थोरचित इति श्रूयते । स च रामकृष्णदीक्षितः नानाभाइ-इति फुल्लसूत्रव्याख्यायाःकर्ता । १९३२ क्रैस्तववर्षे वाराणसीय संस्कृतसीरीस् पुस्तकमालायाः कर्मकाण्डविभागे दशमपुष्पत्वेन चौकम्बामुद्रणालये, सरलार्थव्याख्यासनाथ लाट्यायनसूत्रं पण्डितवरमुकुन्दशर्मणा ज्योतिष्टोमान्तं प्रपाठकद्वयं मुद्रापितम् । तच्चमदुपकारायाभूत् । मद्रिस्वामी कि. पि. ६ रामकृष्णदीक्षितः - १७-इति वदन्ति ।

इदच लाटचायनसूत्रम् उत्तरभारतीयाः राणायनशाखीया श्रौतप्रयोगे उपयोजयन्ति । गृह्यकर्मसु गोभिलीयम् - द्राह्यायण-लाट्यायन श्रौतसूत्रद्वयमधिकृत्य बहुप्रपचः कृत -- आङ्गिलभाषायाम्

The Srauta Sutras of Latyayana and Drahyayana and their commentaries By Ashok Parpola, 1968 इति कोशे

॥ कल्पकारिका ॥

तत्तत्कर्मसु इतिकर्तव्यताबोधकानां - सूत्राणां, कारिकाणां, प्रयोगानाञ्च सत्त्वेऽपि अनवधानात्, आलस्यात् अयथावत् ज्ञानाद्वा मन्त्रतन्त्रादिषु भ्रेष जायते । भ्रेषच वैगुण्य,तेनच निष्फलत्व विपरीतफलत्वंवाकर्मणः स्यात् । अत तत्तत्र प्रायश्चित्तेष्टते निर्दुष्ट भवति । कल्पकारिकायां प्रवर्ग्यसामप्रभृति यज्ञपुच्छान्त मन्त्रतन्त्रभ्रेषेप्रायश्चित्तकथिनम् । नैतावत्पर्यन्त मुद्रिता आवश्यकत्वात् अत्रयोजिता ।

मन्त्रसंग्रहकारिका

सूत्रेषु प्रयोगेषु सत्स्वपि, कर्मणोऽनवबोधिका कारिकाऽपेक्ष्यते । यथा वामनकारिका लाट्यायनकारिका इत्यादिगृह्यकर्मक्रमबोधिका तथाऽनुसंग्रहकारिकेयं । श्रौतकर्मावबोधिका कारिका वर्तते । ताण्ड्यभाष्ये सायणादृता । याचावलम्बयिता प्रयोगाविस्मरणाय ॥

## मन्त्रविनियोगसंग्रहकारिका

ताण्ड्यब्राह्मणोक्तानां "मह्न्मेऽवोचः" इत्यादिमन्त्राणां विनियोग परिज्ञानं श्लोकात्मककारिकया झटिति जायते। नैवं सूत्रप्रयोगवाक्यैः तेषांस्मृतेः दुष्करत्वात्। अत्रकारिकायां प्रतिमन्त्रंविनियोगः क्रमेणसुलभतयाज्ञातुं शक्यते। अतः अग्निष्टोमान्तभागः दक्षिणाप्रतिग्रहभागश्चात्रयोजितः। अवशिष्टभागः ताण्ड्यभाष्ये सायणाचार्यैः तत्र तत्र निर्दिष्टः सुबोधश्च बुभुत्सूनां ॥

### "क्रतुमाला"

ताण्ड्येनिर्दिष्टाः यागाः अशीत्युत्तरशतसंख्याका वर्तन्ते। तेषामेवक्रमेणप्रयोगक्रमः द्राह्यायणसूत्रेकथितः। कल्पभाष्ये-अन्यत्रश्रौतसूत्रेच तानेवाधिकृत्यप्रपंच. कृतः। तेषु एकाहसाख्याः, कति-अहीनाः,सत्राश्च कति इति नामनिर्देशपूर्वकं विशदतया-निर्दिष्टं क्रतुमालायाम्।

ग्रन्थान्ते सूत्रस्यवाक्यानां झटितिग्रहणाय अकाराद्यनुक्रमणी-योजिता ॥

एतादृशग्रन्थसंपादनविषये पुस्तकदानेन, विषयदानेन च उपकृतवतां महनीयानां, पूर्णतयामूलमात्रं परिशोध्यरक्षितस्य द्राह्यायणसूत्रस्य, अनुक्रमणी ग्रन्थस्य च दानेन सहायकृतां मस्दूर् श्रीसन्तानशास्त्रिणामस्मत्सुहृदां, तालपत्रमयस्य ग्रन्थस्य

स्फुटलेखनेन, प्रतिलिपि (Proof) दर्शनेन च समीकृतवतो वेदान्तवेदविदुष श्री श्रीकान्तशर्मण अस्मत्प्रियसुहृदश्च कृतज्ञता-परम्परा निवेद्यते ।

एतादृशप्रौढग्रन्थस्य सपादन धनसाहाय्येनोपकृतवता भारतीयसर्वंकाराणा सि पि रामस्वामिअय्यर् धर्मनिधि अधि-कारिणां च कार्तज्ञ्यनिवेदनमन्तरा किमन्यत् कर्तुं शक्यते ।

गैर्वाण्यावाण्यामुद्रापणे क्लेशबाहुल्ये सत्यपि तदविगणय्य सश्रद्ध ग्रन्थ मुद्रितवत इळङ्गो मुद्रणालयाधिकारिण एम् एस् मणियवन् नाम्न एतादृशग्रन्थसपादने आदरातिशयोऽभिवर्धता-मिति आशी प्रयुज्यते ।

इत्य विदुपा विधेय
म. रामनाथदीक्षितः
(मायूरम्)

38, नाट्टु मुत्तु कुमरप्पवीथी
मद्रास - ४

श्रीशिवाभ्यां नमः

## द्राह्यायणसूत्रभाष्यस्य विषयानुक्रमणिका

लोकवेदयोः दृष्टं, यथा वाक्यसमाप्तौ इतिशब्द.। तद्यथा, अथातोऽनन्ता द्वादशाहा इति प्रतिदिशन्ति। अथात. [1]*सामान्तानां। [2]अथात. संहिताया उपनिषदं व्याख्यास्याम. इत्यादि। आनन्तर्यं हेत्वर्थता तु वाक्यस्य परिभाषापरत्वात् न संभवति। 'विधानं' विधिः, विशेषकथनं व्यपदेशः, तदभावः अव्यपदेशः। तदयमर्थः - विधौ विशेषाकथने सर्वक्रतूना तत्र अधिकार इति। वक्ष्यतिहि - [3]'ऋत्विगार्षेयोऽनूचान' इत्यादि [4]तत् सर्वक्रतुसाधारणमिति॥

---

तस्यात्मजोऽहं यज्ञेशः रामनाथाभिधा गतः।
दीक्षितेन्द्रात् द्वादशोऽयं मायूरक्षेत्र सङ्गतः॥ ५॥
आशान्तविलसत्कीर्ति ब्रह्मविद्या विचक्षणम्।
आत्मविद्या गुरुं वन्दे *रामशास्त्रीति विश्रुतम्॥ ६॥

* पोलक रामशास्त्रिण·

कामकोटिमठाधीश योगिवर्यान्नमाम्यहम्।
यत्कृपालेशमालम्ब्य टिप्पणी रच्यते मया॥ ७॥
द्राह्यायणस्य सूत्रस्य वोपे धन्विविनिर्मिते।
प्रभाख्या टिप्पणी काचित् सुखबोधाय तन्यते॥ ८॥

अत्र भाष्यं, अथात इति पदद्वयं वाक्योपक्रमे लोकवेदयोः दृष्टम्। यथा वाक्यसमाप्तौ इति शब्दः। आनन्तर्यहेत्वर्थतातु वाक्यस्य परिभाषापरत्वान्न संभवतीत्युक्तम्।

*'अथात· सामान्वाना चत्वारोभागाः समस्ताः स्वरो निधनं इडा वाक् तद्यानि स्वराण्याग्नेयानि' इत्यादिना निधनानां चातुर्विध्यमुक्त्वा तत्तन्निधनानुसारेण तत्तद्देवताकत्वं प्रतिपाद्यते निदानसूत्रे। (प्रपाठकः १-खण्ड-१२ सूत्रं-१)

1. ड गा सामान्तानां। 2. ड अथात संहितोपनिषदः (सं-ब्रा-१-१-१) 3 द्रा-१-१-७ 4. ड तत्।

[1]केचित्त्वाहुः – अनारभ्याधीतानां महन्मेवोच इत्यादि यजुषां, तिसृभ्यो हिंकरोतीत्यादि विष्टुतीनां, सुब्रह्मण्यायाः [2]तत्प्रायश्चित्तानाञ्च सर्वक्रत्वर्थता अनेन सूत्रेण उच्यते इति ॥

तदयुक्तं, यद्युपदेशादेव [3]सर्वक्रत्वर्थता उच्यते; तर्हि *न्यायविरुद्धं; "प्रकृतौ वा द्विरुक्तत्वात्" इति हि न्यायविदः ।* किञ्च उपदेशादेव सर्वार्थत्वे सति ऊहो न स्यात् । [4]अतिदेशपूर्व-

---

अथशब्दस्य, "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोअथ" इति कोशात् बहवोऽर्थाः प्रतीयन्ते ॥

"अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः" इत्याश्वलायनश्रौतसूत्रस्य प्रथमं सूत्रम् । अत्र नारायणकृत वृत्तिः– "लोके यानि प्रत्याम्नायं प्रयोगशास्त्राणि स्मर्यन्ते तान्यनुष्ठानोपयुक्ततयाऽध्ययनविध्याक्षिप्तत्वात् प्रत्याम्नाय-मङ्गत्वं प्रतिपन्नानि । तत्राङ्गाङ्गिनोरनुष्ठानकृतमानन्तर्यं, अथ-शब्दो द्योतयतीति ॥

"अथातोऽधिकारः" इति कात्यायनश्रौतसूत्रे प्रथमं सूत्रम् । अत्र कर्कभाष्यम् :—तत्राथशब्दः पूर्ववृत्तवेदाध्ययनानन्तर्य-प्रज्ञप्त्यर्थः । पूर्ववृत्ते हि वेदाध्ययने उत्तरो विचार उपपद्यते । *वेदवाक्यार्थनिरूपणं ह्यत्र भवति । अतः शब्दः तदेव वेदाध्ययनं* हेतुत्वेन प्रकरोति । यस्मादधीतो वेदः तत उत्तरं विचारस्या-वसर इति ॥

---

1. ग. केचित्त्वाहुः । 2. ङ. प्रायश्चित्तानाञ्च । 3. ङ. पा. क्रत्वर्थमुच्यते । 4. ङ. पा. अतिदेशाधूपणत्वा ।

कत्वादूहस्य । तत को दोषः? "यजमानशब्द सर्वत्र यथार्थं कुर्युः" इत्याद्यूहव्यवहार न स्यात् । तस्मात् उपदेशत सर्वार्थत्वमित्ययुक्तम् । अथोच्येत प्रकृतौ उपदेशाद्भवति विकृतावतिदेशादित्येव सर्वार्थत्वमितिः । तर्हि यजुर्विप्रुषि सुब्रह्मण्याप्रायश्चित्ताना विशेषस्य [1]तनवस्तनय, अन्येषामप्युपास्मैगायतानर[1] इत्यादि स्तोत्रीयाणा रौरवयौधाजयादि साम्ना च तेनैव न्यायेन सर्वार्थत्वात् । तस्मात सूत्रकारः [2]सुव्यवहाराय परिभाषा करोतीति मन्तव्यम् ॥ १ ॥

---

द्राह्यायणश्रौतसूत्रसमानाकार कौथुमशाखीयमन्त्रब्राह्मणविनियोजकम् लाट्यायनश्रौतसूत्र उत्तरदेशीयैं प्रमाणत्वेन परिगृहीतमस्ति । तत्रैव प्रथम सूत्रम् । "अथ विध्यव्यपदेशे सर्वं स्वधिकार" इति । अत्राग्निस्वामिभाष्यम् अथेत्ययनिपात आनन्तर्यविशेषो मङ्गलार्थं । पूर्वप्रकृतापेक्षोऽधिकारार्थश्चेति । अथोच्येत यान्यस्य पूर्वप्रकृतानीति? ब्राह्मण, ऋग्यजुस्साम समाम्नाय, आर्षेयकल्प, गृह्यार्षेय, धर्मशास्त्राणि, अङ्गानि लोकश्चेति ॥

"अथातो दर्शपूर्णमासौ व्याख्यास्याम" इति आपस्तम्ब श्रौतसूत्रस्य आदिम सूत्रम् । अत्र रुद्रदत्तप्रणीतव्याख्या–अथात इति - अथात शब्दोऽय प्रकरणारम्भे प्राय प्रयुज्यते वृद्धैः । क्वचिदानन्तर्येऽपि । न पुनरिहानन्तर्यार्थ । वृत्तस्य कस्यचिदनन्तरस्यानुपलम्भात् इति ॥ एव श्रौतसूत्र व्याख्यातार क्वचित्

---

1. इ सनकसचस्व न पराध्य । 2 पाभे सव्यवहाराय ।

'मन्त्रविधिश्चादिग्रहणेन ॥ २ ॥

चकार परिभाषासमुच्चयार्थं । आदिग्रहणेन कृत्स्नस्य मन्त्रस्य विधि, न पुन उपात्तमात्रस्य । (एतच्च [1]बोद्धव्यमिति) ॥ २ ॥

यद्येव, मन्त्रावसान वक्तव्यमिति, अत आह—

[2] *उत्तरादिः पूर्वान्तलक्षणम् ॥ ३ ॥

उत्तरमन्त्रस्य आदिग्रहण पूर्वमन्त्रावसानस्य लक्षण वेदितव्यम् ॥ ३ ॥

एकश्रुति विधानान्मन्त्रान् कर्माणि च उद्गातैव कुर्यादनादेशे ॥ ४ ॥

---

आनन्तर्यं, क्वचित् अर्थान्तर च अथशब्दस्य वर्णयन्ति । कल्पसूत्रत्वात् वेदाग, अङ्गस्य अङ्ग्यपेक्षत्वात् अङ्गिभूत वेदाध्ययनानन्तर्यं यत्तु यद्यपियुज्यते, तथापि महन्मेऽवोचः इति करिष्यन् प्रतिमन्त्रयेत, इत्यारभ्यैव मन्त्रविनियोगात्, तत्प्रभृत्येव विनियोज्यमन्त्रणा परिज्ञानस्य आवश्यकत्वात्, परिभाषाया, उपयोगाभावात् तथोऽत्रमितिमन्तव्यम् ।

अनारभ्याधीताना मन्त्राणा प्रकृतिगामित्वमेव । विकृतौ तु अतिदेशेनैवप्राप्ति । उभयगामित्वे द्विरुक्तत्वदोष स्यात् । सकृदुक्त शब्द सकृदेवार्थ गमयति इतिहिन्याय । अत "प्रकृतौ वा, प्रकृतावेव श्रुतः - अद्विरुक्तत्वात् - द्विरुक्तत्वदोषपरिहाराय इत्यर्थ - जै सू-३-६-१-६ (इद तृतीयपृष्ठस्थ प्रकृतौ वा द्विरुक्तत्वादित्यस्य विवरणम्)

*मन्त्रान्तमव्यक्त परस्यादिग्रहणेन विद्यात् - खादिरगृह्यसूत्रम् १ १-१८ ॥

---

1 ट इत्येतच्च बोद्धव्यमिति । 2 ट पा उत्तरादि ।

महत्त्मेवोच इत्यादि मन्त्रान्, कर्माणिच सामवेदोक्तानि-उद्गातैव अनादेशे कुर्यात्। एकश्रुतिविधानादिति, एकवचन [1]निर्देशेन विधाने सतीत्यर्थः। *केचित्तु एकश्रुतिविधानान् मन्त्रानिति सूत्रं विभज्य मन्त्राणामैकश्रुत्यं विधत्ते इत्याहुः। एकश्रुतिविधानान् - एकश्रुतियुक्तविधानान् मन्त्रान् कुर्यादिति। तदयुक्तं, जपादिष्वतिप्रसङ्गेन सूत्रस्यापूर्णत्वात्। ** "यज्ञकर्मण्यजपन्यूङ्खसाम"स्विति पाणिनिस्मृत्या सिद्धत्वाच्चेति ॥ ४॥

यावद्यजुरनादिष्टान्तान् मन्त्रान् ॥ ५॥

उत्तरादि.पूर्वान्तलक्षणमित्युक्तम्, येषु तल्लक्षणं न संभवति उत्तरमन्त्राभावात्, केवलमुत्तरेण ब्राह्मणेन सह प्रश्लेषपठितत्वात्, तान् अनादिष्टान्तान्मन्त्रान् यावद्यजुः प्रतीयात्,

---

सूत्रं-४-आनादेशे इति - आदेशश्च–"प्रस्तोता हविर्धान गच्छेत् माध्यन्दिने; हुत आदित्यग्रहे प्रतिहर्ता भवे" इति ॥

*द्राह्यायणसूत्रस्य औद्गात्रसारसङ्ग्रह इति रुद्रस्कन्द-कृता व्याख्या अस्ति, सा खण्डयते तत्रतत्र धन्विना ॥

** यज्ञकर्मण्यजपन्यूङ्खसामसु (पा. १-२-३४) यज्ञक्रियाया मन्त्रे एकश्रुति स्याज्जपादीन्वर्जयित्वा। अग्निर्मूर्धादिव. ककुत्'। यज्ञ-इति किम्। स्वाध्यायकाले त्रैस्वर्यमेव। अजप-इति किम्? ममाग्ने वर्चोविहवेष्वस्तु'। जपोनाम उपांशुप्रयोगः यथा जले निमग्नस्य। न्यूङ्खो नाम षोडश ओकाराः। गीतिषु सामाख्या ॥ इति कौमुद्याम्।

---

1. ट निर्देशे

यावदेकार्थप्रतिपादकं पदजातं तावत्परिमाणान् प्रतीयादित्यर्थः। किमुदाहरणं?, औदुम्बर्युच्छ्रयणे सूत्रं, अध्वर्युणा सहोच्छ्रये-द्दक्षिणोत्तरोत्तानाभ्यां पाणिभ्यां द्युतानस्त्वेति। अत्र दृंहपृथिवींतामन्वारभते इति मन्त्रान्तः। ब्राह्मणं च *प्रश्लेषपठितम्। तत्र ब्राह्मणेन एकवाक्यताऽयोगात् दृंहपृथिवीमिति मन्त्रान्त इति। यथा काम्यासीत्यनुमन्त्र्य दक्षिणेवास्या. कर्णे [1]जपित्वेति च उदाहरणमिति ॥ ५ ॥

ऋचश्चादिग्रहणेन ॥ ६ ॥

अनादिष्टान्तासु ऋक्षु यद्यपि क्वचिन्मध्ये वाक्यसमाप्तिः स्यात्, तथापि आदिग्रहणेन कृत्स्ना एवर्चः प्रतीयात्। यथा शन्नोदेवी-रित्यप उपस्पृश्येत्यादौ। अत्र शन्नोदेवीरभिष्टय इति [2]प्रतिपादं अवान्तरवाक्यसमाप्तिर्भवति। तत्र प्रथमपादमात्रस्य ग्रहणं प्राप्तं अनेन सूत्रेणापोद्यत इति ॥ ६ ॥

एवं परिभाषा कृता

॥ अथेदानीं ऋत्विग्लक्षणमाह ॥

ऋत्विगार्षेयोऽनूचानस्साधुचरणो वाग्म्यन्यूनाङ्गोऽनति-रिक्ताङ्गोद्वयसतश्चानतिकृष्णोऽनतिश्वेतः ॥ ७ ॥

* तामुच्छ्रयति द्युतानस्त्वामारुतउच्छ्रयतु उद्दिवंऽस्तभानान्तरिक्षंपृणदृंहपृथिवीतामन्वारभतआयोष्ट्वासदनेसादयामि ॥ ताण्ड्य ब्रा. (६-४-२) इति प्रश्लेषपाठः ॥

1. ड. जपित्वा गोनामानि 2. ड. प्रतिपादकं

ऋषिर्बहुश्रुतः । "[1]एषवै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवानिति' तैत्तिरीयकब्राह्मणम् ॥ तेन, ऋषेः-बहुश्रुतस्यापत्यमार्षेयः । *अनूचानः कल्पसूत्राध्यायीति [2]बोधायनः । साधुचरणः-साधुवृत्तः । वाग्मी-वाचाल-प्रशस्तवाक् । अन्यूनाङ्ग.-चतुरङ्गुल्यादिप्रतिषेध. । द्वयसतश्चेति, द्वयसं-परिमाण "[3]प्रमाणेद्वयस"ज्जिति पाणिनिस्मृतेः । द्वयसत इति पञ्चम्यास्तसिलप्रत्यय. । तेन [4]अयमर्थः । पुरुपलक्षणं शास्त्रमिदं यदङ्गप्रत्यङ्गपरिमाणं ततोप्यन्यूनाङ्गोऽनतिरिक्ताङ्ग इति ।

---

*"अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु य."इत्यमरकोशे । अनूक्तवान्-अनूचानः, शिष्येभ्यः विद्याप्रदान यः कृतवान् इत्यग्निस्वामिभाष्यम् । "वाचोयुक्तिपटुर्वाग्मी"त्यमर । अनति कृष्णोऽनतिश्वेत इत्यनेन वालवृद्धयो. प्रतिषेधः

तत्रर्त्विक् ग्रहा - द्रा गृ-(१-१-२१) ऋत्विगिति आर्षेयोनूचानइति ऋत्विग्गुणनियमार्थम् इति रुद्रस्कन्द. ॥

ऋतौयजतीति ऋत्विक् - वसन्ते ब्राह्मणोयजेत इतिश्रुतेः इति क्वचित् । यद्येवं क्षत्रियादेरपिग्रहणस्यात्ग्रीष्मेराजन्यइति श्रुतेः । तत्रेष्ट याजनानधिकारात् तेषां । अतः याजनाधिकारयुक्ते विप्रएव वर्तते योगरूढ्या ऋत्विगिति पदम् ॥

---

1. तै.ब्रा ६-६-१-४ 2. बो गृ २६-२-८ । 3. पाणिनि. स्मृ ५-२-३७. 4. ग्र. पा. तेनपरिमाणमयमर्थः ।

ननु च, 'प्रत्यय. पर'श्चेति [1]पाणिनि स्मृते [2]केवलस्य द्वयसच् प्रत्ययस्य प्रयोगोऽनुपपन्न ॥

नैव, परश्चेति सूत्रमधिकृत्य *महावार्तिककारेणोक्तम् । 'द्वयसजादीना केवलप्रयोगस्य दृष्टत्वात्तद्वदेवान्येषामपि प्रत्ययाना केवलप्रत्ययप्रयोगप्रसगे प्रयोगनियमार्थंपरश्चेति सूत्र"-मिति । तेन द्वयसजादीना केवलप्रयोग कण्ठेनैव शब्दविद्भिः साधुत्वेनोक्त इति न कश्चिद्दोष ॥

केचित्तु अद्वयसत इति नञ् प्रश्लेषेण पदविच्छेद कृत्वा षण्डनिषेधोऽयमित्याहु । तदयुक्त – द्वयसतइति षण्डेप्रयोगाभावात् । अन्यूनाङ्ग इत्यनेनैवच षण्डनिवृत्तिसिद्धेः । चकारोपि तत्पक्षे निरर्थक इति ॥ ७ ॥

८ याज्यश्च प्रथमैस्त्रिभिर्गुणैः व्याख्यातः ॥ ८ ॥

प्रथमैरार्षेयादिभि त्रिभिर्गुणैर्युक्तएव याज्य स्यात् । नान्य । तावन्मात्रमेव तस्यापेक्षित, न [3]वाग्मीत्यादिकमिति ॥ ८ ॥

९ सोमप्रयाकमकरिष्यन्नमस्सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत ॥९॥

असौसोमेनयजते सत्वा[4]मृत्विजमभ्यर्थयते, इति यो वधित स सोमप्रयाक, तेनैवमुक्त यद्यार्त्विज्यमकरिष्यन् स्यात् तदा सोम नमस्कृत्य सोमप्रयाक प्रत्याचक्षीत । नास्ति मे श्रद्धा, अन्यो वरणीय इति । प्रत्याख्यानदोष[5]निवृत्त्यर्थो नमस्कार ।

*महावार्तिककार कात्यायनएव "महावार्तिकनोकार पाणिनीयमहार्णवे" इति उपग्रन्थसूत्रारम्भे दर्शनात् ।

1 पाणि स्मृ ३-१-१-२ 2 ब केवलस्य द्वयसच 3. ब वाग्मित्वादिक । 4. ब मामृत्विज 5 ब शान्त्यर्थो

श्रूयतेहिप्रत्याख्यानेदोष - "[1]यशसावाएषोऽभ्येति य आर्त्विज्येन चरति, तत् य [2]प्रतिरून्धे यश स प्रतिरुन्धे" इति ॥ ९ ॥

१० महन्मेवोच इति करिष्यन् प्रतिमन्त्रयेत॥ १० ॥

आर्त्विज्यकरिष्य"न्महन्मेवोच"इति सोमप्रवाकमभि- मन्त्रयेतेति ॥ १० ॥

११ तमजह्यात् अप्रोक्तेऽपि करिष्यामीति विदित्वा ॥ ११ ॥

सोमप्रवाकेणाऽप्रोक्तेऽपिसोमे, करिष्याम्यार्त्विज्यमिति निश्चित्य, महन्मेवोच इति मन्त्र न जह्यात्-ब्रूयादेवेत्यर्थं । ननु च सोम पवन् आगत सोमप्रवाक कथमनुक्त्वा तिष्ठेत् ? उच्यते, पूर्वमेवोद्गाताज्ञातमितिकृत्वा स्मरणायकेवल तिष्ठे- दपीति न दोष । ननु च सोमप्रवाकेणानुक्तेसोमे, मन्त्र- स्याग एव युक्त, महन्मे वोच इति मन्त्रार्थाभावात् । नैव, सोमप्रवाकस्यागमनादेव सोमःप्रोक्तोभवतीति महन्मेवोच इत्यु- पपन्नमेव (भवति) मन्त्रलिंगमिति मन्यते ॥ ११ ॥

१२ *आवसथ सोमप्रवाकाय **लवणमन्नं दध्नाऽऽहारयेत् ॥ १२ ॥

यत्र अतिथीन् वासयति स आवसथ, त प्रति सोमप्रवा- काय लवणसंसृष्टमन्न दधियुक्तमाहारयेदिति ॥ १२ ॥

---

*आवसथ - "वेश्ममावसथ पुमान्" इति कोश । आव- राथ- इति लाट्या-सू ।

**लवणमन्न - अत्र संसृष्टार्थस्यठक लवणाल्लुक् (पा-४-४-२४) इति लुक् ।

---

1- एतरेय ब्रा ६-२४ ४ 2 य प्रतिरुन्धेत् यश स प्रतिरुन्धेत् ।

१३. प्रह्निणुयात्प्रस्तोतृसुब्रह्मण्यौ पुरस्तात्कर्मभ्यः* ॥ १३ ॥

औदुम्बरी सम्मानादेः स्वकर्मणः पुरस्तात् यानि यानि-कर्माणि सुब्रह्मण्याह्वानादीनि, तदर्थं प्रस्तोतृसुब्रह्मण्यौ यजमानाय प्रह्निणुयादिति ॥ १३ ॥

अथोद्गातुः देवयजनं प्रति गमनकालं विधास्यन् देव-यजनलक्षणमाह

१४. **प्रागुदक्प्रवणं देवयजनं लोमशं समम्+ ॥ १४ ॥

उत्तरपूर्वादिशा प्रवण-निम्नः यस्य तत्-प्रागुदक्प्रवणम् लोमशं-वह्व्योषधियुक्तं; अनूपरमित्यर्थः। ननु च अध्वर्युप्रत्ययं देवयजनं [1]किमिहोच्यते—उच्यते ब्राह्मणेतावदध्वर्युप्रत्ययमपि देवयजनं प्रसंगाद्विहितम्। [2]तत्तु, दुर्विज्ञानमिति व्याख्यानाय सूत्रकारः प्रवर्तत इति न दोष इति ॥ १४ ॥

१५. पुरस्ताद्यापाः स्युः ॥ १५ ॥

---

*तादर्थ्येचतुर्थी · यानि पुरस्तात् कर्माणि-तादर्थ्यसामादीनि तदर्थं-इति अग्निस्वामी—

**प्रागुदक्प्रवणं देवयजनम्। पश्चाद्दक्षिणाप्रवणं श्मशान-करणम्। षड्विंशब्राह्मणं अ-३ ख-३ सूत्रं २०, २१॥

+लोमशमवृक्षं समम् इतिलाट्या—सू

1. ड. किमत्रविधीयते। 2 ड. तच्च, तत

अस्य-देवयजनस्य पुरस्तादापश्च भवेयुः । नदी वा [1]तटाको वा ॥ १५ ॥

तत्र प्रमाणमाह—

१६. *त्रिशुक्रियमितिह्याह ॥ १६ ॥

**"यस्य पुरस्तात्त्रीणि ज्योतींषि दृश्येरन् अग्निराप आदित्यस्तद्देवयजनं तत् त्रिशुक्रिय"मिति ब्राह्मणम् । तच्चापामेव विधायकम् । अग्न्यादित्ययोः विधिमन्तरेणापि सिद्धेः । अग्निराहवनीयः आदित्यश्च द्वावपि नित्यमेव देवयजनस्य पुरस्तात् स्थितावेव । तेन प्राप्ताप्राप्तविवेकेन अपामेवायं विधिरिति सूत्रकारेण व्याख्यातमित्यनुसंधेयमिति ॥ १६ ॥

१७. तदभावे महावृक्षउदपानो महापथो वा ॥ १७ ॥

अपामभावे पुरस्तान्महावृक्षः न्यग्रोधादिः भवेत् । तथा च श्रुतिः — +'पुरस्ताच्चित्रं देवयजन'मिति । चित्रःचित्र्यो वनस्पतिरुक्तः । ***उदपानः-कूपः । +महापथः प्रसिद्ध इति ॥ १७॥

---

*"त्रिशुक्रियमितिह्याह" — एतत्सूत्रं लाट्यायने नास्ति ।

**षड्विं.ब्रा. । अ. ३ । ख. ३ सू.१७ । +षड्विं. ब्रा अ.३ । ख-३ । सू.१८ ॥

***उदपानः - पुंस्येवान्धुः प्रहिः कूपः उदपानन्तु पुंसि वा । इत्यमरः

+महापथः - देशान्तरगामीमार्गः इति अग्निस्वामी ॥

---

1. ड. तटाको ।

१८. न चास्यस्थलतरमदूरे स्यात् ॥ १८ ॥

अस्य देवयजनस्य अदूरे-समीपे स्थलतरमत्युन्नतप्रदेशो न स्यात्, किन्तु देवयजनमेव समीपप्रदेशादुन्नतं स्यादित्यर्थः। तथा च श्रुतिः –"*यदुन्नतं भूम्या अनूपर"मिति ॥ १८ ॥

१९. देवयजनमात्रस्य पुरस्तात् ॥ १९ ॥

अदूरे नस्यादित्यनुवर्तते - अस्य देवयजनस्य पुरस्तादद्दूरे-समीपे, शम्यानिपातनादर्वाक् देवयजनाय पर्याप्तो-योग्यः प्रदेशो न भवेदित्यर्थः। तथा च श्रुतिः—"**तस्य न पुरस्ताद्देवयजन-मात्रमतिशिष्याद्याबाञ्छम्याप्रास" इति ॥ १९ ॥

२०. विपर्यस्याभिचरणीयेषु ॥ २० ॥

[1]अभिचरार्थेषु क्रतुषु यथोक्तं देवयजनलक्षणं ×विपर्यस्य कुर्यादिति ॥ २० ॥

किं सर्वमेव विपर्यस्येत् ? नेत्याह—

२१. +स्थलादन्यद्देवयजनमात्राच्च ॥ २१ ॥

---

*यदुन्नतं भूम्या अनूपरं यत्र बहुला ओषधयश्चात्वाल-सारिण्यः यत्रापस्स्युः तस्यन(नु)पुरः ॥ षड्विंशब्राह्मणं-अ-३ ख-३-सू-११ ॥

**षड्विंश-३-३-१२

×विपर्यासः प्रातिलोम्यम्

+सूत्रं-२०, २१ इदं द्वयमपि एकं सूत्रं लाट्यायने ॥

---

1. क. अभिचरार्थक्रतुषु

बद्वानामासीति देवयजनस्यासाधारण पन्थानमा[1]पद्योत्तर-महादेदिपार्श्वं आक्रम्य तत्रैव स्थित्वा, दक्षिण वेद्यन्तमीक्षमाण [2]पितरोभूरित्युपतिष्ठेतेति ॥ २५ ॥

२६ [3]यजुस्त्तर*येऽन्याहारं धानञ्जय्यः ॥ २६ ॥

सर्वत्र यजुपो-मन्त्रस्य, प्रमादादन्तरये–भ्रेप सति यदा पश्चात स्मरति तदा तस्य पुन प्रयोग कुर्यात् । मन्त्रोच्चारण-जन्यादृष्टसिद्धयर्थमिति धानञ्जय्य ॥ २६ ॥

२७ उपेक्षणं शाण्डिल्यः ॥ २७ ॥

उपेक्षणमेव कार्यं, न पुन प्रयोग, मन्त्रस्यानुष्ठेयार्थं प्रकाशनार्थत्वात्, कृतेकर्मणि तत्प्रकाशनस्यानपेक्षितत्वादिति शाण्डिल्य । **करणमन्त्रविषयमेतत्सूत्रद्वयम् । ये पुनरनुष्ठिते-कृतेकर्मणि तत्फलप्रार्थनारूपा, स्तुतस्यस्तुतम''सीत्यादयो मन्त्रा तेषा पुन. प्रयोगो भवत्येवेत्याहु+रिति ॥ २७ ॥

इति प्रथमपटले प्रथम खण्ड

---

*एते भावे अच्प्रत्यये । (पा॰३ ३॰५६) अयइति अन्त-मध्ये॰अय॰विच्छेद –

** अनुष्ठानकाले उच्चारणीया मन्त्रा –

+केचिदिति अध्याहर्तव्यम् ।

1. ब, आसाद्य । 2. ता ब्रा. १-१-४ । 3 ब पा यजुषा-न्तराये ।

अथ द्वितीयः खण्डः

(मधुपर्कः)

२८. *अर्हयिष्यन्त आहरन्ति विष्टरौ पाद्यमर्घ्यमाचमनीयं मधुपर्कमिति ॥ १ ॥

अर्हणा-पूजा । उद्गातुरागतस्य पूजांकरिष्यन्तो यजमानपुरुषाः, विष्टरद्वयं पाद्यादिकञ्चा[1]हरेयुरिति ॥ १ ॥

२९. तेषामेकैकशस्त्रिर्वचनम् ॥ २ ॥

तेषां विष्टरादीनामाहृतानां प्रत्येकं त्रिस्त्रिर्वचनं आवेदनाय कार्यं, यजमानेन । विष्टरो विष्टरो विष्टराविति । एवं पाद्यादेरपीति ॥ २ ॥

३० गोश्च ॥ ३ ॥

मधुपर्काङ्गभूतायाः गोरपि त्रिर्वचनंकार्यम् गौर्गौर्गौरिति । अत एव विधेर्गौरप्याहरणीया मधुपर्कार्थेति गम्यते । तदाहरणञ्च मधुपर्कोत्तरकालमेव न विष्टराद्याहरण [2]समकालं, एतैस्सहपाठाभावात्, गोश्चेति पृथक् सूत्रकरणाच्चेति मन्तव्यमिति ॥ ३ ॥

---

*अर्हयिष्यन्तः आहरन्तीत्यादि सूत्रचतुष्टयं लाट्यायने नास्ति । "तस्मैतदाहरन्ति विष्टरं, पादप्रक्षालनमर्घ्यमाचमनीयं मधुपर्क"मिति तत्र सूत्रम् ॥

1. अन्वाहरेयुः 2. समकाले ।

३१. विष्टरयोरेकमध्यास्ते धौतौ पादावितरस्मिन् ॥ ४ ॥

विष्टरयो-पीठयोरेकस्मिन्नुद्गानाऽ[1]ध्यास्ते । इतरस्मिन् पीठे स्वस्य पादौ यजमानेन धौतौ प्रक्षालितौ निदध्यात् । अत्र धौतौ पादाविति पाद्यविनियोग उक्त । अर्घ्यस्य विनियोगा भावेप्याहरणविधानादेव विनियोग कल्प्य । स चाञ्जलाविक देशमा (नि) नयेदिति शास्त्रान्तरानुसारेण द्रष्टव्य इति ॥ ४ ।

३२. पृथक्सावित्रीपादैर्मधुपर्कस्यापिबेत् ॥ ५ ॥

निवेदितस्य मधुपर्कस्य एकदेश सावित्र्या त्रिभि पादै पृथगेव प्रतिपाद पिबेदिति ॥ ५ ।

३३ इदमन्नमय रस इमागावस्तद्भियेति तु पुरस्तादेकैकस्य ॥ ६ ॥

एकैकस्य सावित्रीपादस्य पुरस्तादिदमन्नमयरस इति मन्त्र-मधुपर्काभिमन्त्रण जपेत् । तुशब्दोविशेषद्योतनार्थ । कथ? वक्ष्यमाणा प्रतिपादमुपरिष्टान्मन्त्रा पृथगेवस्यु । अयं[2] त्वभि-मन्त्रणमन्त्रस्सर्वसाधारण इति ॥ ६ ॥

३४. वाग्महद्वेहुर्मेभूयादिति प्रथमस्योपरिष्टात् ॥ ७ ॥

प्रथमस्य सावित्रीपादस्य उपरिष्टाद्वाक् महद्वेहुर्मेभूयादिति मन्त्र प्रक्षिपेदिति ॥ ७ ॥

३५ प्राणो वै वाचोभूयान्वहुर्मेभूयो भूयादिति द्वितीयस्य ॥ ८ ॥

द्वितीयस्य सावित्री पादस्योपरिष्टात् प्राण इत्यादि मन्त्र प्रक्षिपेदिति ॥ ८ ॥

1. द आस्ते । 2. ड अयत्व भिमन्त्रण सर्वसाधारण ।

३६. *मनो वाव सर्वं सर्वमे भूयादिति तृतीयस्य ॥ ९ ॥

तृतीयस्य सावित्रीपादस्य उपरिष्टान्मनोवावेति मन्त्रं प्रक्षिपेदिति । तदेव त्रय. पानमन्त्राः ॥ ९ ॥

प्रति मन्त्रमन्ते स्वाहाकारः कार्यं इत्याह—

३७. सर्वे स्वाहाकारान्ताः ॥ १० ॥

अयमत्र प्रथमोमन्त्रः-इदमन्नमयं रस इमा गावः सहश्रिया तत्सवितुर्वरेण्यं वाग्बहुर्यहुर्मेंभूयात्स्वाहेति । एवमुत्तरावपि मन्त्रौ द्रष्टव्यौ । प्रतिमन्त्रं भक्षण । अन्ते आचमनंकार्यम्, तदाहरणविधानात् । अत्र गृह्योक्तो मधुपर्कप्रकारो नादरणीयः, सूत्रकारेण कृत्वङ्गत्[1]यात्र पृथग्विधानात् । केचित्तु **गृह्योक्त-

*वाग्बहु-इत्यादि सूत्रत्रयं एकमेवलाट्यायने

**गृह्योक्तमधुपर्कप्रकार· एवं खादिरगृह्यसूत्रे, प-४-ख ४- "मधुपर्कप्रतिगृह्णीष्वत्रिदमहमिमामितिप्रतितिष्ठन् जपेत्" ॥ ५ ॥ अर्हयत्सुवा ॥ ६ ॥ 'विष्टरपाद्यार्घ्याच-मनीयमधुपर्काणामेकैक त्रिर्वेदयन्ते ॥ ७ ॥ गाश्च ॥ ८ ॥ उदञ्चं विष्टरमास्तीर्य याओषधीरिति अध्यासीत ॥ ९ ॥ पादयो द्वितीयया द्वोचेत् ॥१०॥ अपः पश्येत् यतोदेवीरिति ११ सव्यं पादमवसिञ्चेत्सव्यमिति ॥ १२ ॥ दक्षिणं दक्षिण-मिति ॥१३॥ उभौ शेषेण ॥ १४॥ अन्नस्य राष्ट्रिरसीति अर्घ्यं

1. क. नाप्यङ्गत्युा पृथग्विधानात् ।

मपि अत्राविरुद्धमुपसंहरन्ति । अत्र देवयजनमागतस्योद्गातुर्मधुपर्कविधानात् यजमानस्य गृहे मधुपर्कदान, पश्चाद्देवयजनगमनमिति वदन्तो निरस्ता इति ॥ १० ॥

अथ यदि मधुपर्को नस्यात्, तत्स्थाने मधुमन्थोदेयः । तस्य भक्षणमन्त्रमाह—

३८. रसोऽसि वानस्पत्यो रसं [1]मयिधेहीति मधुमन्थस्य पिबेदिति गौतमः ॥ ११ ॥

मधुनाऽऽलोडितास्सक्तवः मधुमन्था. ॥ ११ ॥

तस्य मधुपर्कस्यानापन्नत्वात् मधुपर्क इत्याद्येवमेवप्राप्ते विशेषमाह—

---

प्रतिगृह्णीयात् ॥ १५ ॥ यशोसीत्याचमनीयम् ॥ १६ ॥ यशसो यशोसीति मधुपर्कम् ॥ १७ ॥ त्रि. पिबेत् यशसो महस श्रिया इति ॥ १८ ॥ तूष्णी चतुर्थम् ॥ १९ ॥ . . . .एवमयज्ञे ॥२२॥ कुरुतेति यज्ञे ॥ २३ ॥

विष्टर, पञ्चविंशतिदर्भनिर्मित. कूर्चविशेष. विष्टर', तथा च छन्दोगपरिशिष्टम् - पञ्चाशद्भि. कुशैर्ब्रह्मा तदर्धेनतु विष्टर. । ऊर्ध्वकेशोभवेद्ब्रह्मा लंबकूर्चस्तु विष्टर. ॥ दक्षिणावर्तगो ब्रह्मा वामावर्तस्तु विष्टर. ॥ द्वौचेदित्यत्र चेच्छब्दात् पादयोरनित्योविष्टर. । तदा विष्टर. इति निर्वचनमिति रुद्रस्कन्द. ॥ दधिमधुघृतसंयुक्तो मधुपर्क', रुद्रस्कन्द. । दधिमधुयुक्तः - इति गोभिल-भाष्ये-कात्यायनः । दधिमधुयुक्तं मधुपर्कं - मध्वलाभेसर्पिर्वा आश्वलायनवचनात् - इति शाण्डिल्ये प्रयोगे ।

---

1 ह मेधेहि ।

३९. वानस्पत्य इति प्रवचनम् ॥ १२ ॥

वानस्पत्यो वानस्पत्यो वानस्पत्यइति [1]प्रवचनं कार्यं (इत्याह) ॥ १२ ॥

४०. *तथा दधिमन्थोदमन्थयोः ॥ १३ ॥

तथा दधिमिश्रास्सक्तवो दधिमन्थाः । उदकेन मिश्रिता उदमन्था. । तयोरपि मधुपर्कस्थानापन्नयोस्तथैव रसोसि वानस्पत्य इति भक्षणं कार्यम् ॥ १३ ॥

तत्र विशेषमाह—

४१. **पयस्योऽपयस्य इति तु रसादेशः ॥ १४ ॥

वानस्पत्य इति पदस्थाने पयस्योऽपयस्यइति पदद्वय क्रमेण प्रक्षिप्य तेन रसस्यादेशः कार्यः । रसोऽसि पयस्यो रसं मयिधेहीति दधिमन्थभक्षणम् , रसोस्यपयस्य इति उदमन्थभक्षण-मिति ॥ १४ ॥

४२. एत [2]एव प्रवचने कालिन्दस्सारस्वत इतिवा ॥ १५ ॥

दधिमन्थोदमन्थयोः पयस्योऽपयस्य इतिएते प्रवचने, कालिन्दस्सारस्वत इति वेति ॥ १५ ॥

---

*सूत्रं ४०,४१ एतद्वयमपि लाट्यायने एकं सूत्रम् ॥

**पयस्योपयस्य इति प्रश्लेषरहित पाठभेद , तथा रसोसि पयस्य इति च ।

---

1. ह. वचनं । 2. ह. एतेवेव, एतेषेव ।

४३. शेषं ब्राह्मणाय दद्यात् ॥ १६ ॥

भक्षितं शिष्टं मधुपर्कं ब्राह्मणाय दद्यादिति ॥ १६ ॥

४४. तदभावेऽद्भिःसंप्रोक्ष्याब्राह्मणाय ॥ १७ ॥

ब्राह्मणाभावे शेषमद्भिः प्रोक्ष्यक्षत्रियादिभ्यो दद्यादिति ॥ १७ ॥

४५ कुरुतेति गवि प्रोक्तायां ब्रूयात् ॥ १८ ॥

मधुपर्काङ्गभूतायामपि प्रोक्तायां *कुरुतेति प्रेष्येत् । सज्ञपनादि [1]श्रपणान्तोव्यापारं करणमभिप्रेतमिति ॥ १८ ॥

४६ **उत्सृज्यञोकृतो धर्मस्तृणान्यत्तु पिबतूदकमुत्सृजतेति ब्रूयात् ॥ १९ ॥

अथ यदिगामहिंसमुत्सृजेत् तदानीं, 'ओकृतोधर्मं' इति मन्त्रमुक्त्वाउत्सृजेदिति ॥ १९ ॥

४७ सर्वेषां यज्ञोपवीतोदकाचमने नित्ये ॥ २० ॥

सर्वेषामुद्गातृप्रभृतीनां चतुर्णामप्यार्त्विज्योपक्रमवेलायां

---

*संसर्गदोषं पापेषु मधुपर्के पशोर्वधः । दत्तौरसेतरेषान्तु पुत्रत्वेनपरिग्रह इति, कलिवर्ज्यप्रकरणे उक्तम् । अतः युगान्तरविषयमेतत् 'कुरुतेति' ॥

**४६ एतत सूत्रस्थाने "उत्सृजतगा तृणानिगौ अत्त्विति वा" इति लाट्यायने सूत्रम् ॥

[1] ग श्रपणान्तव्यापारकरणं ।

*यज्ञोपवीतमाचमनञ्च नित्यमेवकार्यमिति ॥ २० ॥

४८. [1]कर्मोण्यतामव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः ॥ २१ ॥

कर्म कुर्वता यज्ञाङ्गैस्सह **व्यवायो केनचिन्नकार्यः । व्यावृत्तिः-यज्ञाङ्गानां पृष्ठतः करणं, तच्च न कार्यमिति ॥ २१ ॥

४९. प्राङ्मुखकरणञ्चानादेशे ॥ २२ ॥

अनादेशे सर्वैरपि प्राङ्मुखैरेव कर्मकर्तव्यमिति ॥ २२ ॥

अथ सुब्रह्मण्यस्य कृत्यं वक्तुमारभते—

५०. क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवहनं गत्वाऽन्तरेषेपे-
शमीशाखां पलाशशाखां वा सपलाशां पाणौ
कृत्वाऽधितिष्ठेत ॥ २३ ॥

*उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् । आप-धर्म-१-५-१-१ । अत्र गुरूपासनादौ यज्ञोपवीतं विहितं, तच्च वस्त्र-यज्ञोपवीतं । तथा च हरदत्तमिश्रकृतोज्वलाया वृत्तौ, वासो विन्यासविशेषोयज्ञोपवीतमिति "दक्षिणं बाहुमुद्धरते" इत्यादि ब्राह्मणविहितं, एवंविधानात्कालान्तरे न अवश्य भावः इति विवरणं कृतम् । अतः एतत् न नित्ययज्ञोपवीतविषयम् ।

"सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखो व्युपवीतश्च यत्करोति न तत् कृतम् ॥"

इति कात्यायनसंहितायां (१-४) नित्ययज्ञोपवीतस्य सदा-धार्यत्वनियमात् ॥

**व्यवायः - अन्तरागमनं, व्यावृत्तिः - अनभिमुखता ॥

1. ग. कर्मोपेतानां ।

क्रीते सोमे, सोमवहनं-शकटं प्रागीपमवस्थितमुत्तरेण गत्वा द्वयोरीपयोर्मध्ये शाखां गृहीत्वा [1]तिष्ठेत् । अत्र सामर्थ्यात् उत्तरामीपामुत्क्रम्य प्रविश्य तिष्ठेदिति गम्यते । अन्यथोत्तरेणगत्वा मध्ये तिष्ठेदिति वचनाशक्तेः । किञ्च [2]तामेवेषामनूत्क्रम्येति वक्ष्यति, ततोऽप्यवगम्यते उत्तरामीषामुत्क्रम्य प्रविशेदिति ॥ २३ ॥

५१. अध्वर्युसंप्रैषे सर्वत्राकाङ्क्षेत्सुब्रह्मण्यायाम् ॥ २४ ॥

सर्वत्र सुब्रह्मण्याह्वाने अध्वर्युणा प्रैषमाकांक्षेत् । तत्प्रेषित एवाह्वयेत् । नान्यथेत्यर्थः । तेनातिथ्येष्टिसमाप्तौ अध्वर्युसंप्रैषाभावेऽस्माभिरु[4]क्तापि सुब्रह्मण्या न कार्या । तथा च जैमिनिरपि तत्र सुब्रह्मण्यां न विधत्ते । अध्वर्युप्रैषस्य तत्र वैकल्पिकत्वादिति ॥ २४ ॥

५२. रश्मी धारयन् शाखया प्रेष्येद्गावौ ॥ २५ ॥

अनडुहोर्बन्धनार्थे रज्जू सव्येन हस्तेन धारयन् पूर्वगृहीतया शाखया तावनड्वाहौ प्रेष्येत्; शाखया स्पृष्ट्वा गमयेत् । शाखया संस्पृशेदित्येव जैमिनिरिति ॥ २५ ॥

---

अव्यावृत्ति यज्ञाङ्गैः अव्यवायं चेच्छेत् । खा-गृ-१-१-२८-होमाङ्गैस्सह पराङ्मुखः न भवेत्, अन्तरा च नगच्छेत् । कुर्यादित्यध्याहारात्सिद्धे इच्छेदिति, यदिप्रमादात् व्यावृत्तिं व्यवायं-वा कुर्यात् तदा पुनः प्रतिमुखः स्यात्, प्रत्यागच्छेच्च इत्येवमर्थम् ॥ रुद्रस्कन्दः ॥

---

1. क. अर्थातिष्ठेत् 2. द्रा.सू.१.२.२९ । 3. क. संप्रैषे । 4. द्रा-१-३-२ ।

५३. दक्षिणं पूर्वम् ॥ २६ ॥

दक्षिणमनड्वाहं प्रथमं प्रेष्येदिति ॥ २६ ॥

५४. सुब्रह्मण्योमिति त्रिराह्वयेत् प्राचि वर्तमाने मध्यमया वाचा ॥ २७ ॥

सोमवहने शकटे प्राचि-प्राङ्मुखे वर्तमानेसति, मध्यमस्वरेण सुब्रह्मण्योमित्येतावन्मात्रं त्रिराह्वयेत् । केचित्तु प्रणवेषु विराममिच्छन्ति, उत्तरत्र सुब्रह्मण्याह्वाने, '[1]पूर्वयोः प्रणवान्तयोः विरमे'दिति दर्शनात् । [2]केचित्तु तत्रैव विधानादत्र नेच्छन्ति ॥ २७ ॥

५५. पट्कृत्वः प्रतीचि ॥ २८ ॥

प्रतीचि-प्रत्यङ्मुखे शकटे आवर्तमाने तेनैव स्वरेण पट्कृत्वः आह्वयेदिति ॥ २८ ॥

५६. पूर्वेण पत्नीशालां विमुक्ते, छदिषि शाखामव[3]गूह्य तामेवेषामनूत्क्रम्याव्यवयन्नग्नीषोमीयंयथार्थस्यात् ॥ २९ ॥

पूर्वेण प्राग्वंशं गत्वा, द्वयोरनडुहोरन्यतरस्मिन् विमुक्ते सति, शकटस्य छदिषि शाखामवगूह्य, तामेवेषामनूत्क्रामेत्, यामीषां पूर्वमुत्क्रम्य मध्ये प्रविष्टः । उत्क्रम्य चाग्नीषोमयोर्व्यवधानमकुर्वन्, यथार्थं सुब्रह्मण्यः स्यात्, यथाप्रयोजनं गच्छेद्वा तिष्ठेद्वेत्यर्थः ।

---

1. ग्रा १-३-६ । 2. केचित्-छात्रकान्दवृत्तौ । 3 ड अवगुह्य ।
4

अग्नीषोमाविति आहवनीयाग्निं क्रीतञ्च सोममाह ॥२९॥

इति प्रथमपटले द्वितीय खण्ड



अथ तृतीय खण्ड

५७. अथैतद्राजव[1]हन सुब्रह्मण्याय दद्याद् दक्षिणासंसु-
कर्मसंयोगात् ॥ १ ॥

अथ राजवहन शकट अनडुद्भ्यां सहैव सुब्रह्मण्याय दद्यात्। "अनोयुक्त सुब्रह्मण्या"येतिश्रुते । दक्षिणायुक्तेषुक्रतुषु सत्स्वप्यतिरिक्तेष्वित्यर्थ । अनडुद्प्रेषणेन कर्मणा सुब्रह्मण्यस्य सयोगात्, तत्कर्मान्वयादित्यर्थः । कर्मसयोगादिति हेतुकथनमन्यत्रापि तत्तत्कर्मान्वितस्य प्रस्तोत्रादे कुशास्तरणवस्त्रादिदानार्थमिति॥१॥

५८. आतिथ्याया सस्थितायां दक्षिणस्य द्वारबाहोः
पुरस्तात्तिष्ठन्नन्तर्वेदि देहेऽन्वारब्धे यजमाने पत्न्या च
सुब्रह्मण्योमिति त्रिरुक्त्वा निगद ब्रूयात् ॥ २ ॥

प्राग्वंशस्य [2]पुरस्ताद्यद्द्वार तस्य दक्षिणस्थूणाया पुरस्तात्सञ्चरदेशमतिक्रम्यान्तर्वेदि तिष्ठन् पत्नीयजमानयोरन्वारब्धयोस्सुब्रह्मण्योमिति त्रिरुक्त्वा निगद ब्रूयादिति ॥ २ ॥

तमेव निगद दर्शयति—

1 0 2 1 2 10 2 10 0 2 0 0 1 2 0 0
५९ इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने ।
10 0 2 1 2 0 0 0 2 0 10
गौरावस्कन्दिन्नहल्यायैजार कौशिकब्राह्मण गौतम
0
ब्रुवाण इति ॥ ३ ॥

1 क राजवाह्न। 2 क यत्पुरस्तात्।

इति शब्दस्सूत्रपठित स्वरप्रदर्शनार्थः। इति-अनेन स्वरेण ब्रूयादित्यर्थः। न पुर्नानिगदसमाप्त्यर्थः। एतावदहे सुत्यामित्यादेरपि निगदत्वात् ॥ ३ ॥

६०. *एतावदहे सुत्यामिति यावदहे स्यात् ॥ ४ ॥

एतावदहे सुत्यामिति शाखान्तरीयो मन्त्रपाठः। **[एतावदह्नः सुत्यामिति अस्माकं पाठः] [2]इत्यहे सुत्यामिति च; ***उभयोरेक एवार्थः ॥ सूत्रार्थस्तु यावन्त्यहानीति यावदहं, समाहारे +द्विगुसमासः। यावदहे-यावत्स्वहस्स्वतीतेषु सुत्या स्यात् तावन्त्यहान्येतावदह इति [3]संख्याय निर्दिशेत्। एतावच्छब्दः संख्योपलक्षणार्थः यथा त्र्यहे सुत्यां, द्वादशाहे सुत्यामित्यादि। द्वादशाहेऽतिक्रान्ते सुत्यामागच्छेत्यर्थः।

---

*५८, ५९, ६०, सूत्राणि एकमेव सूत्रं लाटयायने ॥

**एतावदह्नः सुत्यामिति अस्माकं पाठः इति क्वचित् पाठः।

***इत्यहे सुत्यामागच्छ मघवन्निति षड्विंशदायस्यापि अयमेवार्थः ॥

+यावदहमिति समाहारे द्विगुसमासः। "यस्य च भावेन भावलक्षणं" इति सप्तमी (पाणि-२-३-३७)। सुत्यामिति द्वितीया। अनुलक्षीकृत्य इत्यध्याहारः ॥

---

1. षड्विंश-१-१-२९। 2. द्र. संख्यया।

ननु च, एतावदहेऽतिक्रान्त इति न श्रूयते। तेन सुत्यादिवसमपि अन्तर्भाव्य सङ्ख्यानिर्देशं कार्यं। चतुरहे सुत्या, त्रयोदशाहे सुत्यामिति, नैतदेवम्—यद्येवमभविष्यत्त-दानीमेतावतिथे सुत्यामिति यावतिथे स्यादिति पूरणप्रत्ययेन निर्देशोऽभविष्यत्, न चैव। किञ्च तापश्चिते सत्रे संवत्सरोप-सत्के कथं परिमाणनिर्देश इत्यपेक्षायां प्रकृतौ द्वादशाहे दृष्ट-मिति प्रकारं दर्शयति सूत्रकारः॥ "[1]द्वादशाहे सुत्येति निविःत्वा परिमाणाह्वानं धानञ्जय्य' इति, तत्र यदि प्रकृतौ सुत्यादिवस अन्तर्भाव्यपरिमाणनिर्देशः स्यात्, तदा त्रयोदशाहे सुत्येति विविःत्वेति सूत्रप्रणयनं स्यात्। न चैवमस्ति, तस्मादेतावदहे अतिक्रान्त इत्येष्[2]वार्थःइति॥ ४॥

६१. अद्येति समानेऽहनि॥ ५॥

[3]सुत्याया समानेऽहनि, अद्य सुत्यामित्यादिशेत्। सुत्यायाः पूर्वदिवसे तु श्वःसुत्यामित्यादेशः कार्यं "[4]तस्यान्ते-श्वस्सुत्या गौतमइ"येति सिद्धवदनुवादात्। स्पष्टं [5]चाह जैमिनिः। '[6]श्व सुत्यामित्यौपवसथ्येऽहनि निर्दिशे'दिति॥ ५॥

६२ पूर्वयोः प्रणवान्तयो विरमेत्॥ ६॥

सुब्रह्मण्योमिति पूर्वयो प्रणवान्तयो विरम्य विरम्याह्वयेत्॥६॥

६३. मेने वृषाणेति च॥ ७॥

'वृषणश्वस्य मेने', 'गौतमब्रुवाणे'तिच द्वयोरपि विरमे-दिति॥ ७॥

---

1 द्रा १४२८ 2 क मवाय। 3 क सुयपा। 4 द्रा १४१७ 5 क स्याह्। 6 ज श्रा २८०।

६४. आग्नेय्यां पर्यो जारेति च ॥ ८ ॥

अग्निष्टुतस्त्वाग्नेयी सुब्रह्मण्यां वक्ष्यति । तत्र '[1]जातवेदो विचर्षण' इत्यत्र विरमेत् । '[2]उपसो जारेति च विरमेदिति ॥ ८ ॥

६५. *पृथग्यजति शब्देषु च ॥ ९ ॥

वक्ष्यमाणायां सामग्राहसुब्र[3]ह्मण्यायां यजतिशब्देषु पृथक् पृथक् विरमेदिति ॥ ९ ॥

अथ निगदशेषं दर्शयति—

10 20 1 20 10 2 10 2 10 2
६६. देवा ब्रह्माण आगच्छतागच्छतागच्छत इति गौतमः ॥ १० ॥

एतावदहे सुत्यामित्यस्यानन्तरं 'देवाब्रह्माणइति निगदशेषं ब्रूयात् । नान्यत्किञ्चिदिति गौतम इति ॥ १० ॥

६७. आगच्छतेति पूर्वं देवा[4]ह्वानं धानञ्जय्यः ॥ ११ ॥

देवाब्रह्माणइत्यस्मात्पूर्वं आगच्छतेति ब्रूयादिति धानञ्जय्यः इति ॥ ११ ॥

६८. आगच्छमघवन्नित्येके ॥ १२ ॥

देवाह्वानात्पूर्वमागच्छमघवन्निति पदद्वयं प्रयोज्यमित्येके । तथैव वय[5]मधीमह इति ॥ १२ ॥

---

*६२, ६३, ६४, ६५, एतत्सूत्र चतुष्टयं लाट्यायने ''आगच्छमघवान्नित्येक'' इति ६८ सूत्रात् परं विद्यते ।

1. ब्रा. १-४-५ 2 ब्रा-१-४-७ 3. ब्रा १-३-१८ 4. ड देवाह्वानात् --
5. षड्वि -१-१-२५ ।

७५. प्रत्येकं[1] नाम गृह्णीयाद्यजमाननामधेयानि यानिस्युः ॥ १९ ॥

सत्रेषु यावन्ति यजमाननामधेयानि, तानि प्रत्येकं पृथगेव गृह्णीयात्। न सा[2]मान्यतो निर्देशः कार्यः। तेन, नारायणो यजते, वासुदेवो यजत इति पृथक् पृथगेव ग्रहणमिति। अन्ये तु सत्र प्रसंगाभावात् सूत्रमन्यथा व्याचक्षते। कथं? यजमानस्य त्रीणिनामधेयानि; अभिवादनीयं, व्यावहारिकं, नक्षत्रनामेति च। तानि प्रत्येकं सर्वाण्यपि गृह्णीयात्। यथा, दर्शपूर्णमासयोः सूक्तवाकनिगदे आशास्तेऽयं यजमानोऽसावित्यत्र, यजमानस्य द्वयोर्नामधेययोर्ग्रहणं। *आश्वलायनोऽप्यभिधत्ते- 'असावसावित्य-स्याऽऽदिश्यन्नामनी' इति-तद्वदिति। तदेतद्वृद्धैर्विमृश्यमिति ॥१९॥

७६. **अमुष्यपुत्रः पौत्रो नप्तेति पूर्वेषाम् ॥ २० ॥

यजत इत्यनुवर्तते। स च पुत्रपौत्रनप्तृशब्दैः प्रत्येकं संबन्धनीयः। पृथग्यजति शब्देष्विति वि[1]रामविधान सूत्रे बहु-

---

* आश्वलायनोऽपि–आशास्ते अयं यजमानोऽसावसावित्य-स्याऽऽदिश्य नामनी उपांशु सन्निधौ गुरोः। सांव्यावहारिकं नाक्षत्रञ्चेति नारायणवृत्तिः॥ (आश्व॰श्रौ॰-१-९-५) [आनन्दा-श्रममुद्रणालयः, पुना-३१ पृष्टे (१९१७)]

**७४, ७५, ७६ एतत् सूत्रत्रयं सूत्रद्वयत्वेन निरदिशत् लाट्यायने॥

---

1. ड. प्रत्येकं गृह्णीयात्। 2 ड. समासनिर्देशः।

[1]वचनदर्शनादिति । यजमानस्य पूर्वेषां पितृपितामहप्रपितामहानामपि नामानि गृह्णीयात् । यज्ञस्वामिनः पुत्रो यजते, वासुदेवस्य पौत्रो यजते, नारायणस्य नप्ता यजत इति ॥ अमुष्य इति पुल्लिङ्गं अविवक्षितं, जनकत्वमात्रमेव विवक्षितम् । तेन स्त्रीणामपि नामग्रहणम् । सत्यभामायाः पुत्र इत्यादि । कुत एतत्? यजमानस्य सुकृते बन्धूना भागित्वार्थो नामग्राहः । बन्धुत्वञ्च स्त्रीणामप्यविशिष्टमिति ॥ २० ॥

७७. अथावरेषां यथाज्येष्ठं स्त्रीपुंसानां ये जीवेयुः ॥ २१ ॥

अवरेषां त्रयाणां पुत्रपौत्रनप्तॄणां स्त्रीपुंसरूपाणां जीवतां यथाज्येष्ठं नामानि गृह्णीयात् । अमुष्यपिता यजते, पितामहो यजते, प्रपितामहो यजत इति । पुत्रवर्गं समाप्य पौत्रवर्गे नामग्रहणं "यथा ज्येष्ठ"मिति वचनात् । पुत्रवर्गेऽपि यदि दुहिता ज्येष्ठा तस्याः प्रथमं ग्रहणमिति । स्त्रीपुंसानामिति वचनात् । षण्डस्य न ग्रहणम् । पतितस्यापि न ग्रहणम् । यजमानस्य सुकृते तस्य अभागित्वात् ॥ २१ ॥

७८.*असिष्यमाणानामित्यन्तत उक्त्वा सुत्यादेशप्रभृति समापयेत्॥२२॥

---

*ब्रह्मचहवा इदमग्रे सुब्रह्मचास्ताम् । तत. सुब्रह्मोदक्रामत् । अथहदेवा यज्ञेन ब्रह्मापर्यगृह्णत । अग्निर्वैब्रह्मा असावादित्यस्सुब्रह्मा । तद्देवा यज्ञस्य संधावन्वैच्छन्, एषवैयज्ञस्य संधिः यदैष उत्करः । तस्मादुत्करेतिष्ठन् सुब्रह्मण्यः सुब्रह्मण्यामाह्वयेत् ।

---

1. ग्र. १. ३. ९.

जनिष्यमाणानां पिता पितामह प्रपितामहो यजत इति पाठाभावेऽपि सामर्थ्या[1]दवगम्यते । तथैव जैमिनिना स्पष्टमेव पठितम् । जनिष्यमाणाना पिता पितामह प्रपितामह [2]इत्युक्त-माहेति। तत्र जनिष्यमाणानामिति वर्गत्रयस्यापि तन्त्रेणनिर्देश, पृथगनुपादानात । एवमुक्त्वा तदनन्तर श्वस्सुत्यामागच्छेति निगदशेष समापयेदिति ॥ २२ ॥

---

सुब्रह्मण्यो ३म् सुब्रह्मण्यो३म् सुब्रह्मण्यो३म् इति । त्रिपत्याहि-देया । इन्द्रागच्छेति । यदाहेन्द्रागच्छेति एतद्वास्य प्रत्यक्षनाम तेनैवैन तदाह्वयति हरिव आगच्छेति । पूर्वपक्षापरपक्षौवा इन्द्रस्यहरी ताभ्याहीव सर्वंहरति । मेधातिथेर्मेषेति ।

इत्यादिना एकैक पदमादाय तस्य तस्य सम्यक् निर्वचन खण्डद्वयेन त्रिचत्वारिंशद्ब्राह्मणवाक्यै कृत्वा-अन्ते — अथो-खल्वाहु यच्चावगत यच्चानवगत सर्वस्यैवैव प्रायश्चित्तिरिति तस्मादेव विद सुब्रह्मण्य कुर्वीत नानेव विदम् इति समाप्यते-षड्विंशब्राह्मणे ।

अत्र सायणाचार्या आहु, प्रायश्चित्तविद यत् यज्ञे अवगत अन्यथाज्ञात - यच्चअनवगत - अपरिज्ञात - तस्यसर्वस्य - एषैव प्रायश्चित्ति । विदुषासुब्रह्मण्येनकृत सुब्रह्मण्याह्वानमेव प्राय-श्चित्तम् । तस्मादेवविद यथोक्तप्रकारेण ज्ञातारब्राह्मण सुब्रह्मण्य कुर्वीत इति । अत्र सुब्रह्मण्याह्वानकर्ता ऋत्विक् सुब्रह्मण्या-

---

1 ट गम्यते 2 इ इत्युक्तमाहेति

अथ नामग्रहणवाक्येषु स्वरं विधत्ते—

७९. *अर्थनिर्वचनमुच्चान्तम् ॥ २३ ॥

अर्थमात्रस्यवाचकम्, अर्थनिर्वचनं-प्रथमान्तपदमित्यर्थः । प्राति[1]पदिकार्थमात्रेहि प्रथमा, नाधिकं कर्मत्वादिकमभिधत्ते इति । तेनायमर्थः, प्रथमान्त पदं अन्तोदात्तमिति । तत्र यजमाननामधेयं, पुत्रः, पौत्रः, नप्ता, पिता, पितामहः प्रपितामह इति सप्तपदानि अन्तोदात्तानि स्युरिति ॥ २३ ॥

८०. वैभक्ते च स्यादौ वैभक्तश्चैव ॥ २४ ॥

अत्र पूर्वसूत्रादुच्चपद समस्तमपि सामर्थ्यात् सबध्यते । 'स्या'इति षष्ठ्येकवचनादेशो गृह्यते । आदिशब्देन तदागमो [2]याडादि', षष्ठ्येकवचनविभक्तिसंबन्धिनि स्यादौ परत. पूर्व-

---

निगदस्य पदार्थपरिज्ञाता भवेत् यदि, तदा यज्ञेसंभावित अज्ञान, अन्यथाज्ञानजन्यदोषो नश्येत् । अन्यथा,दोषनिर्हरणाय प्रयश्चित्तान्तरं अनुष्ठेयं । अतः एवमपरिज्ञातारं ऋत्विजं नकुर्वीतेति अन्वयव्यतिरेकाभ्यां सदयमाहश्रुतिः प-ब्रा-षोम-१-ख-२-ब्राम-१-४३

*७९ सूत्रादारभ्य नवसूत्राणि लाट्यायने न सन्ति । किन्च "याऽग्नीषोमीयवपाया लुप्ता सा साद्यस्केषु" इत्यधिकं एकं सूत्र वर्तते ॥

---

1. पाणिनि-२-३-४६ । 2. पाणि-७-३-११३ ।

मक्षरमुच्चं भवेत् । वैभक्तः स्यादिरपि उच्चो भवेत् । यथा, वासुदेवस्य पुत्रः, सत्यभामायाः पुत्र इति षष्ठ्यन्तस्य पदस्यान्त्याक्षरं, तत्पूर्वञ्चोदात्तमित्युक्तं भवति । तथा च [1]महाभाष्यकारः 'अमुष्येत्य[2]न्तोदात्तः स्यात्, तस्योपोत्तमञ्चेति ॥ २४ ॥

८१. उच्चाश्च नीचे नीचमिति ॥ २५ ॥

पूर्वसूत्रद्वयविहितादु[3]च्चाद्यन्नीचं* तदपि नीचे परत उच्चं भवेत् । यथा पितामहप्रपितामहपदयोराद्यो वर्णः । नीचे परत इति वचनात् पितृपुत्रपौत्रनप्तृपदाना आदिरुदात्तो न भवति, +उदात्तपरत्वात्तस्येति ॥ २५ ॥

८२. जनिष्यमाणानामिति मध्ये द्वे ॥ २६ ॥

जनिष्यमाणानामित्यस्य पदस्य मध्ये द्वेअक्षरे तृतीयचतुर्थे उदात्ते भवतः । शिष्टमनुदात्तमिति ॥ २६ ॥

---

* अनुदात्तं पदं एकवर्ज'मिति सूत्रेणोदात्तभिन्नस्य अनुदात्तस्य विधानात् ।

+ अर्थनिर्वचनमुच्चान्तमिति सूत्रेण उदात्तपरत्वम् ।

---

1. म भा-७-८ । पाणि १-२-३७ 2. क. अन्त उदात्तः ।
3. क. उच्चादुत्तर पञ्चोत्रमिनिपाठभेदः ।

८३. यजेश्चादिः ॥ २७ ॥

यजत इत्यस्यादिरुच्चो भवेत् । अत्रसर्वत्रोच्चपदमनुवर्तते । एवमुच्चस्य नीचापेक्षत्वा[1]च्छिष्टं सर्वमनुदात्तमिति मन्तव्यम् । अत्र सुब्रह्मण्योमिति पदमन्तोदात्तम् । सुब्रह्मण्यायामोंकार उदात्त इति महाभाष्यकारवचनात् । इन्द्रागच्छेति निगदस्सूत्रपठितस्वर, तत्रापि महाभाष्[2]यम् - "आकार आख्याते सर्वादिश्च वाक्यादौच द्वे द्वे मघवन्वर्जमसावित्यन्त' इति । इत्यहेसुत्यामिति पदद्वयमन्तोदात्तमिति व्याकरणसिद्धमिति ॥ २७ ॥

८४. दक्षिणासु चोदितोऽनुव्रजन् दक्षिणाः, सनामग्रा[3]हामाह्वयेत् ॥ २८ ॥

दक्षिणासु नीयमानासु दक्षिणाः अनुव्रजन्, नामग्राहयुक्तां सुब्रह्मण्यामाह्वयेत् । अध्वर्युणा चोदित (प्रेषितः) इति वचनं विस्पष्टार्थं, 'अध्वर्युसंप्रेषं सर्वकाका'ङ्क्षेदिति [4]पूर्वमेवोक्तत्वादिति ॥ २८ ॥

८५. प्रणवनामानि वा ॥ २९ ॥

यद्वा सुब्रह्मण्योमिति त्रिःप्रणवमुक्त्वाऽसौ यजत इत्यादि नामग्रहणञ्च कुर्यात् । इन्द्रागच्छेति निगदं न ब्रूयादिति ॥ २९ ॥

८६. हविर्धानप्रवर्तनाग्नीषोमप्रणयनयोश्च सुब्रह्मण्येत्येके ॥ ३० ॥

स्पष्टम् ॥ ३० ॥

---

1. द उच्च शिष्टं । 2 महाभा- २-३-४-६ । 3 द ग्रहा । 4. द्रा-२ २-२४ ।

८७. अनाह्वानमाचार्याः प्रातरनुवाकान्ता सुब्रह्मण्येति ॥ ३१ ॥

दक्षिणानयने सुब्रह्मण्याया. अनाह्वानमेवेति आचार्याः ! कुतः ? यस्मात्प्रातरनुवाकान्तैव सुब्रह्मण्या । सुत्यायामागमनार्थत्वादाह्वानस्य । आगतेषु देवेषु पुनराह्वानं निरवकाशमिति । इति शब्दो हेत्वर्थं इति ॥ ३१ ॥

प्रथमपटले तृतीयः खण्डः



अथ चतुर्थः खण्डः

अथ विकृतिषु सुब्रह्मण्याया विशेषं [1]विधातुमुपक्रमते—

८८. साद्यस्क्रेष्वग्नीषोमीयायामिष्टौ वपाकालाऽऽज्यभागयोर्हुतयोः संस्थितायां चेत्येके ॥ १ ॥

साद्यस्क्रा. नामैकाहा. । तेष्वग्नीषोमीय पशोः स्थाने, ऽग्नीषोमीयेष्टिर्विहिता, शाखान्तरे । तत्स्थानापन्नत्वादग्नीषोमीयवपाकाला सुब्रह्मण्या प्राप्ता, कस्मिन् अवसरे कर्तव्येति न ज्ञायते, । तत्रेदमुच्यते, आज्यभागयोर्हुतयोर्वपाकाला सुब्रह्मण्या कार्या । अग्नीषोमीयपशावाज्यभागानन्तरं वपाहोमस्य दर्शनात् । अत्रवपाहोमाभावेपि [2]तत्कालस्य संभवात् ग्रहणं युक्तम् । यद्वा समाप्तायामिष्टौ कार्येत्येके ॥ १ ॥

1. विशेष विधानं । 2. ड. तत्कालस्यग्रहणं

स्वमतमाह—

८९. *लुप्तात्वधिकरणाभावात् ॥ २ ॥

अधिकरण - स्थान - निमित्त तदभावादिष्टी लुप्तैव सुब्रह्मण्या । वपाहोमो हि प्रकृतौ निमित्तम् । तदत्र नास्तीत्य-भिप्रेतेति ॥ २ ॥

९०. अग्निष्टुत्स्वाग्नेयो निगदः ॥ ३ ॥

अग्निष्टुतोनामैकाहा । तेष्वग्निदे[1]वत्यो निगदः स्या-दिति ॥ ३ ॥

९१. तत्र गौतमीयम् ॥ ४ ॥

तत्र गौतमीय मत वक्ष्यत इति शेष ॥ ४ ॥

1 2 10 2 10 20 0 1 40 0 10 20 0
९२. अग्न आगच्छ रोहिताभ्यां बृहद्भानो धूमकेतो
10 20 0 0 10 2
जातवेदो विच[2]र्षण आङ्गीरसब्राह्मणाङ्गिरस-
0
युवाण इति[3] प्राक्सुत्यादेशात् ॥ ५ ॥

एतावदहे सुत्यामितस्य पुरस्तादिन्द्रागच्छेति नि[4]गदम पोह्याग्न आगच्छेत्येव पठितो निगद स्यादिति ॥ ५ ॥

९३. देवानां स्थाने अग्नय इति ॥ ६ ॥

---

*८८, ८९-सूत्रद्वय लाट्यायने नास्ति ।

---

1. ब देवत्यो ।

2 श्रा १ ३ ८ । 3 अनुपद सू-८-३ 4 द्रा १-३-३, ४ ।

देवा ब्रह्माण [1]इत्यत्र देवाना स्थाने अग्नयस्स्यु । अग्नयो ब्रह्माण आगच्छतेति ॥ ६ ॥

१४. अथ धानञ्जय्यः, अग्न आगच्छ रोहित आगच्छ भरद्वाजस्याजसहसस्सूनो वाशवस्कन्दिन्नुपसोजार इति[2] ॥ ७ ॥

धानञ्जय्यस्तु, जातवेदोविचर्षणइत्येवमन्तस्य स्थाने अग्न आगच्छ रोहितव आगच्छेति एव पठित निगदमाहेति ॥ ७ ॥

१५. आङ्गिरसप्रभृति समानम् ॥ ८ ॥

आङ्गिरसब्राह्मणाङ्गिरसयुवाणेत्यादिकमुभयोरप्याचार्ययो समानमिति । तत्र मघवन्निति पदमुभयोरपि मते नास्त्येव । तन्मते प्रकृतावप्यभावात् । यत्पुन अग[3]च्छमघवन्नित्येक इति प्रकृतौ तृतीयमत दर्शित, तदप्यग्निष्टुत्सुनभवति । आग्ने-यत्वाग्निगदस्येति मन्तव्यम् । ऊहेनाप्यग्न इति न प्रयोज्य; देवाना स्थानेऽग्न इतिवत् सूत्रकारेणानुक्तत्वादिति ॥ ८ ॥

१६. इन्द्र राजा इति भूपाद्रिश इति देवान् अनिरुक्तेषु ॥ ९ ॥

उपहव्यप्रभृतय केचिदेकाहा अनिरुक्ता भवन्ति । अनिरुक्तलक्षणश्च वक्ष्यति । "उपहव्ये देवतानामधेयानि परोक्षप्रयु"रित्यादिना तेष्विन्द्रपदमपोह्य शक्रपद प्रयुञ्जीत । देवा

1. ब्रा १-३-१० । 2 ब्रा १३८ । 3 ब्रा १-३
२४-१-१ ।

इति पदमपोह्य विश्व इति ब्रूयात् । शक्रागच्छ, विश्वे ब्रह्माण आगच्छतेति ॥ ९ ॥

९७. अनिरुक्तप्रातःसवनयोश्च ॥ १० ॥

प्रातःसवनमात्रमनिरुक्तं यस्य सोऽनिरुक्तप्रातःसवनो वाजपेय, प्रजापतेरपूर्वश्चैकाह । द्वयोरपि तथा इन्द्रं शक्रेतिब्रूयाद्विश्व इति देवानिति । ननु च पूर्वेणैव सिद्धमेतत् । नैवं; उत्तरयोः सवनयोर्द्वयोरपि निरुक्तत्वात्, *भूयसां न्यायेन निरुक्तधर्मः स्यात् । तन्निवृत्यर्थं इदं सूत्रं, भूयस्त्वान्मुख्यत्वं [1]बलवदिति सूत्रकारमतमिति ॥ १० ॥

९८. अभिषेचनीय दशपेययोरन्तरेण सनामग्राहः ॥ ११ ॥

राजसूयेऽभिषे- नीयदशपेययोस्तुल्ययोरन्तराले दशाहानि भवन्ति । "त[2]द्दीक्षित एव दशाहे ततो दशपेयेन यजे"तेति सूत्रकारवचनात् । तद्दीक्षित इत्यस्यायमर्थं —अभिषेचनीयदीक्षया दीक्षित एव, न पुनर्दीक्षाकृत्वा ततो दशाहे दशपेयेन यजेतेति । तेन दशाहे दीक्षा न सन्ति । न चोपसद., केवलं स[3]सृपेष्टिभिश्चर.त्यध्वर्यवः । तत्रेष्ट्यन्तेषु सनामग्राह सुब्रह्मण्याह्वानमप्राप्त इव सूत्र विधत्ते, नामग्राहमात्र वेति ॥ ११ ॥

*भूयसां न्यायेन—"विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्" (जै-न्या-१२-२-२२ अधि ८)विरुद्धधर्माणां प्रमाणप्रापितानां एकत्र समवाये भूयसां धर्माणां ग्रहणं न्याय्यमित्यर्थः ॥

1. द्र. प्रबलमिति । 2. आ-२५-२-१ । 3 संसृप्तेष्टि ।

९९. अहर्गणेष्वहराद्यन्तयोराह्वयेत् । १२ ॥

अहर्गणेषु सत्राहीनेषु अहराद्यन्तयोराह्वयेत् । अहरादिः प्रातरनुवाकोपक्रमकालः, वसतीवरीपरिग्रहण कालो वा । अहरन्त स्वयमेव वक्ष्यति. "[1]अप्सुषोमान्तमहस्सत्रेषु दधिभक्षान्तमहीनेष्विति । तत्राहरन्तेषु अध्वर्युसंप्रैषाभावादप्राप्त विधीयते । अहरादिग्रहणं दृष्टान्तार्थम् । यथा प्रातरनुवाकोपक्रमे देवताऽऽगमनार्थमाह्वानमेवमहरन्तेष्वप्यवश्य कार्यम् । अध्वर्युसंप्रैषाभावेऽपि मैत्रावरुणस्यातिप्रैषमन्त्रे[2]ण प्रेषितत्वादिति भावः ॥१२॥ ननु सस्थिते किमर्थमाह्वान? अत आह—

१००. उत्तरार्थाऽऽहरन्तिकी ॥ १३ ॥

अहरन्ते भवा आहरन्तिकी । सा(हि)सुब्रह्मण्या उत्तरदिवसार्थाऽवश्यं कार्या । उत्तरार्थेतिवचनादन्त्येषु अहस्सु न भवति । तत्र उत्तराभावादिति । अत्र केचिदहरन्तादूर्ध्वमुत्तरदिवसार्थं वसतीवरीपरिहरणकालेऽपि सुब्रह्मण्याह्वानमिच्छन्ति, तत् सूत्रकारस्यानभिमतम् । अहराद्यन्तयोरिति द्वयोरेव कीर्तनात् । तेन उत्तरोत्तरसुत्यानां द्वे द्वे एव सुब्रह्मण्ये असाधारणभूते अहरुपक्रमे, पूर्वाहरन्ते चेति मन्तव्यम् । तथा च सूत्रकारो दर्शयति, "ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे द्वे"[3]ति । अन्यथा द्वेवा त्रिस्रोवेत्येवावक्ष्यदिति ॥ १३ ॥

१०१. अग्नीषोमीय प्रभृत्यहीनेषु सर्वासनामग्राह्यः ॥ १४ ॥

---

1 द्रा. ६-४-१३,१४ । 2. आप-श्रौ-१२-३-२२ । 3. द्रा-१-४-२६ ।

अहीनेष्वग्नीषोमीय वपाप्रभृति उत्तरास्सर्वाः सुब्रह्मण्याः सनामग्राह्याः स्युः। ननु अतिदेशसिद्धमेतत्, नैवं–आहरन्तिकोष्वप्राप्तेः। तदर्थं सर्वा इति विधानमिति ॥ १४ ॥

१०२. दीक्षानु[1]पूर्व्येण दीक्षितानां सत्रेषु नामग्राहः ॥ १५ ॥

सत्रेषु यजमानानां दीक्षाक्रमेण नामग्राह इति ॥ १५ ॥

१०३. ऊर्ध्वमतिरात्रान्नामग्रहणम् ॥ १६ ॥

सत्रेष्वित्यनुवर्तते। सत्रेषु प्रायणीयातिरात्रस्य प्रातरनुवाकपर्यन्तमेव नामग्रहणम्। तत ऊर्ध्वमग्रहणमिति। अत्र अहरन्तेष्वविधानादेवाग्रहणस्य सिद्धत्वादहरादौ निषेधोयमिति ॥ १६ ॥

१०४. तस्यान्ते श्वः सुत्या गौतमस्य ॥ १७ ॥

पूर्वेद्युरुपक्रान्तोऽतिरात्रो द्वितीयेऽह्नि प्रातःकाले समाप्यते। तस्यान्ते या सुब्रह्मण्या द्वितीयदिवसार्था, तत्र श्वः सुत्यामागच्छेति निर्देशः कार्य इति गौतमः। ननु च, तदानीमेव द्वितीयसुत्यारंभात् अद्यसुत्यामित्येव वक्तव्यम्। नैतदेवं; अहर्गणमधिकृत्य उत्तरोत्तरदिवसार्थे मैत्रावरुणस्यातिप्रैषमन्त्रे सर्वेषामह्नामविशेषेण श्वः सुत्यामित्येव पाठात्। न हि द्वितीयस्याऽह्नोऽद्यसुत्यामिति विशेषतः पाठोऽस्ति। तेन पश्चाद्भावित्वसामान्यात् श्वः सुत्यामिति कथञ्चिन्निर्देशः[2] कार्यः, तुल्यन्यायतया सुब्रह्मण्यायामपि तन्निर्देश इति ॥ १७ ॥

---

1. ड. पूर्वेण। 2 ड. कथञ्चिदितिनिर्देशः

१०५. नार्मेधान्त एके ॥ १८ ॥

एके पुनरतिरात्रस्य नार्मेधसामसमाप्तौ उक्थ्यपर्यायावसाने आहरन्तिकीं सुब्रह्मण्यामपकृष्य कुर्यादित्याहुः । उत्तरेऽयहस्तु तथाकरणात् । तथा सति, श्वः सुत्यामिति निर्देशः समञ्जसः इति भावः ॥ १८ ॥

१०६. अद्यसुत्या शाण्डिल्यस्य ॥ १९ ॥

तस्यान्त इत्यनुवर्तते । अतिरात्रस्य अन्ते अद्यसुत्यामितिनिर्दिशेदिति शाण्डिल्यः । तदानीमेव द्वितीय सुत्यारंभात् । यः पुनरतिप्रैषमन्ते श्वः सुत्येतिपाठः स तु सर्वासामुत्तरसुत्यानां श्वः श्व एवारंभात्, तदभि प्रायः । न तु द्वितीयदिवसाभिप्रायः, तत्र अद्यसुत्येत्यूह एव कार्य इति शाण्डिल्यो मन्यत इति ॥ १९ ॥

१०७. अनाह्वानं धानञ्जय्यः ॥ २० ॥

तस्यान्ते अनाह्वानमेवेति धानञ्जय्यः । कुतः? सर्वथाऽनुपपत्तेः । अतिप्रैषे तावत् श्वः सुत्यामिति पाठात् अद्यसुत्यामित्यनुपपन्नम् । तदानीमेवारंभात् श्वः सुत्यामिति चानुपपन्नं; तेनानाह्वानमेव युक्तमिति ॥ २० ॥

१०८. *तिसृषु चोत्तमासु नामग्राहः ॥ २१ ॥

चकारो धानञ्जय्यानुकर्षणार्थः । ऊर्ध्वमतिरात्रात्सत्रेषु

* १०८, १०९ सूत्रद्वयं लाट्यायने एकीकृतम् ॥

न नामग्राह इत्[1]युक्तं, धानञ्जय्यस्तुसत्रस्यान्ते तिसृषु सुब्रह्मण्यासु नामग्राहश्च कार्य इत्याह । तस्य निदानं मृग्यम् ॥ २१ ॥

१०९. उ[2]त्तरयोरिति गौतमः ॥ २२ ॥

स्पष्टमिति ॥ २२ ॥

११०. तथा सत्यग्नीषोमीयवपायामग्रहणं धानञ्जय्यः ॥ २३ ॥

तथासतीति – यदि सत्रसमाप्तौ द्वयोरेव सुब्रह्मण्ययो नामग्राहः, तथासति पुरस्तादेव द्वयोरेव नामग्राहः । नाग्नीषोमीय वपायामित्यर्थः । यथाप्रायणं तथैवोदयन युक्तमित्यभिमतमिति ॥

१११. *अनाह्वानं वा ॥ २४ ॥

स्पष्टम् ॥ २४ ॥

११२. सर्वत्र सत्रेष्वग्रहणं शाण्डिल्यः ॥ २५ ॥

सर्वत्र सत्रेष्वग्नीषोमीय प्रभृत्यासमाप्तेः, न क्वचिदपि नामग्रहणमिति शाण्डिल्य इति ॥ २५ ॥

११३. **ऊर्ध्वमतिरात्रादाग्नेय्येका, द्वितीयेपञ्चदशरात्रे द्वेधा ॥ २६ ॥

द्वितीस्य पञ्चदशरात्रस्य द्वितीयमहरग्निष्टुद्भवति । 'अग्निष्टुत्स्वाग्नेयो निगद' इति [3]वचनादाग्नेयी सुब्रह्मण्याकार्या । अग्निष्टुद्व्यतिरिक्तेष्वह सु प्रकृतिवदैन्द्री सुब्रह्मण्येत्यसन्दिग्धम् ।

---

*११०, १११ सूत्रद्वयं एकमेव लाट्यायने ॥

**एतत् सूत्रे 'द्वेधा' इत्यत्र सूत्रं द्विधा विभक्तम् लाट्यायने ।

1. द्रा-१-४ १६ । 2. द्र. उत्तमयो. । 3 द्रा-१-४-३

यापुनरुपसद्दिवसेषु [1]सर्वसुत्यासाधारणी सुब्रह्मण्या सा किमाग्नेयीस्यादैन्द्रीवेति संशयः। तत्रेदमुच्यते —ऊर्ध्वमतिरात्रदग्निष्टुत एवासाधारणी केवलमेका सुब्रह्मण्याऽऽग्नेयीस्यात्, द्वेवेति परिसंख्यानमेतत्। तेनोपसत्कालीनास्तु सर्वाऐन्द्र्यएवस्युः। ऐन्द्राणामह्नां भूयस्त्वान्मुख्यत्वाच्चेत्यभिप्रायः। अतिरात्रान्ते धानञ्जय्यमतेन आह्वानाभावादेका आग्नेयीत्युक्तम्। गौतमादिमतेन आह्वानात् द्वेवेत्युक्तमिति ॥ २६ ॥

११४. सर्वाः प्राक् त्रिकद्रुकेभ्यस्तृतीये ॥ २७ ॥

तृतीये पञ्चदशरात्रे प्रथममहरग्निष्टुत्। तदनन्तरं ज्योतिर्गौरायुरिति त्रीण्यहानि त्रिकद्रुकसंज्ञकानि भवन्ति। तत्र त्रिकद्रुकेभ्यः प्राक् सर्वास्सुब्रह्मण्याः उपसत्कालीना अपि आग्नेय्य एवस्युः। अग्निष्टुतो मुख्यत्वादिति भाव। [2]भूयस्त्वान्मुख्यत्वं प्रबलमिति सूत्रकारपक्षः। *जैमिनिश्चाह - मुख्य वा पूर्वचोदनाल्लोकव"दिति। आग्नेयीति अग्न इति पदंबहुवचनेन विपरिणम्यानुषञ्जनीयम् ॥ २७ ॥

---

*काम्येष्टिप्रकरणे, आग्नावैष्णव एकादशकपाल निर्वपेत् सरस्वती आज्यस्य यजेत् इति श्रूयते। तत्र आज्यभागमन्त्रे, ऐन्द्राग्न सारस्वतयोः धर्मप्राप्तौ विकल्प इति पूर्वपक्षं कृत्वा, आग्नावैष्णवस्य प्रथमपठितत्वात् मुख्यत्वेन तस्यैव धर्मोग्राह्य इत्युक्तम् ॥ जै.सू-१२-२-८

---

1. आग्नेयतद्भूयस्त्वं। 2. द्रा १-४-१० धन्वी।

११५. कौण्डपायिनतापश्चितयोर्द्वादशाहे सुत्येति विदित्वा परिमाणाह्वानं धानञ्जय्यः,सुत्यामागच्छेति इतरः ॥ २८॥

कौण्डपायिनामयने द्वादशभिरुपसद्भिश्चरित्वा तदनन्तरं हविर्यज्ञैः षण्मासानतीत्य सुत्या भवति । तथा तापश्चिते सत्रे संवत्सरमुपसदो भवन्ति, तदनन्तरं सुत्य । उभयोरपि सत्रयोः प्रथमामुपसदमारभ्य सुत्यायाः प्राक् एतावदहे सुत्यामिति परिमाणं कार्यं प्रकृतिवदिति प्राप्ते इदमुच्यते ।

द्वादशाहे अतिक्रान्ते सुत्या भविष्यतीति ज्ञात्वा परिमाणाह्वानं कार्यम् । [1]ततः पूर्वं इतराःसुब्रह्मण्याः केवलं सुत्यामागच्छेत्याह्वयेत् । प्रकृतौ द्वादशाहे तथैव परिमाणनिर्देशादिति धानञ्जय्याभिप्रायः । प्रथमामुपसदमारभ्यैव परिमाणाह्वानमिति सूत्रकारस्य मतम् । कुतः? मूलप्रकृतौ ज्योतिष्टोमे तथैव विधानात् । यथा त्र्यहेसुत्यामिति दृष्टमपिपरिमाणाह्वानमार्थिकत्वात् [2]द्वादशाहे न भवति, तस्य द्वादशोपसत्कत्वात्, तथा द्वादशाहे दृष्टमपि परिमाणाह्वानं आर्थिकत्वात् तापश्चितादौ न भवतीति ॥ २८ ॥

११६. ऊर्ध्वमतिरात्रात्प्रथमस्य सारस्वतस्य प्राङ् श्वस्सुत्यायाः ॥ २९ ॥

सुत्यामागच्छेत्यनुवर्तते । प्रथमस्य सारस्वतस्य पर्वणि पर्वणि सुत्या, तदन्तरालदिवसेषु इष्टचयनमितिस्थितिः । तत्रापि

1. ततः — उपसत्कालीनसुब्रह्मण्यायाः पूर्वं ।
2. द. द्वादशाहे न भवतीत्यारभ्य आर्थिकत्वादित्यन्तं नास्ति ।

प्रथमसुत्याया ऊर्ध्वं इष्टघयनदिवसेष्वन्त्यवर्जं सुत्यामागच्छेत्येव निर्दिशेत् न परिमाणाह्वानं कुर्यादित्यर्थः। सुत्यायाः पूर्वदिवसे तु श्वस्सुत्यामिति निर्दिशेत्। प्राक् श्वः सुत्याया इति वचनात्॥ २९॥

ननु च इष्टयनदिवसेषु सुब्रह्मण्याह्वानं नास्त्येव, अविहितत्वात्। असतिचाह्वाने कथं तत्प्रकारकथनं? अत आह—

११७. कौण्डपायिनतारस्ववयोरिष्टयनेषु सुत्यावच्छाण्डिल्यः॥ ३०॥

इष्टघयनदिवसेष्वपि सुत्यादिवसवदाद्यन्तयोः सुब्रह्मण्याह्वानं कुर्यात्। एतावान्विशेषः सुत्यादिवसेष्वाद्यन्तयोराह्वानं तत्तत्सुत्यार्थं, इष्ट्यनदिवसेष्वाह्वानं आगामिसुत्यार्थमिति शाण्डिल्यग्रहणं पूजार्थमिति॥ ३०॥

११८. तथाऽग्निहोत्रमासे, तथाग्निहोत्रमासे॥ ३१॥

कुण्डपायिनामयने अग्निहोत्रमासेऽपि तथैवाद्यन्तयोराह्वानमिति॥ ३१॥

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः।
छन्दोगसू[1]त्रदीपोऽयं प्रथमे पटलेकृतः॥

प्रथमपटले चतुर्थः खण्डः

प्रथमपटलः समाप्तः



1. ट. सूत्रे।

## अथ द्वितीयः पटलः

### प्रथमः खण्डः

एवं सुब्रह्मण्यस्य कृत्यमुक्त्वा प्रस्तोतुर्वक्तुमारभते

११९. सर्वत्रानादेशे *परिसामानि प्रस्तोता
गायेत् स्वाध्यायवत् स्वासु ॥ १ ॥

यानि बहिस्तोत्रं अङ्गतया प्रयुज्यन्ते तानि परिसामानि, तान्यनादेशे स्वकीयास्वृक्षु यथाऽध्ययन प्रस्तोतैव गायेत्। योनिः उत्तराद्वयञ्च स्वकीयाः। ततोऽन्याः परकीयाः। यथा रथन्तरस्याऽभित्वाशूरनोनुम इति स्वकीयाः, कयानश्चित्र आभुवदिति परकीयाः। वामदेव्यस्य हि ता स्वभूता। तत्र रथन्तरं दक्षिणे पक्षे गा[1]येदित्युक्ते कयानश्चित्र आभुवदिति एतास्वपि रथन्तरस्य दर्शनात्तास्वपि गान प्रसज्येत, तन्निवृत्यर्थं स्वास्विति वचनम्। 'आ[2]द्यन्तस्तुब्धेषु पदाय पदाय स्तोभे'दिति [3]वचनात् प्रतिपादं स्तोभानुषङ्गः प्राप्तः, तन्निवृत्यर्थं स्वाध्यायवदिति वचनम्। यथाध्ययनमित्यर्थः। सर्वत्रेति वचनं, अध्वर्युसंप्रेषाऽभावेपि गानार्थं; अन्यथा सुब्रह्मण्यस्येवनिवृत्तिः स्यात्। तथा सामान्यप्रैषेऽपि प्रस्तोतुरेव गानार्थं; अन्यथा 'स्वयमातृण्णायां सामगा'येति सामान्यप्रैषे उद्गातुरेव गानं स्यात्, 'उ[4]द्गातैव

*परिसामानि—परिछिन्नकर्तृकानि, परिगतलिङ्गानि वा सामानीत्यग्निस्वामिनः।

1. द्रा-२-१-१५। 2. द्रा-२-२-२। 3 द्र. सामान्यवचनात्।
4. द्रा-१-१-४।

कुर्यादनादेश' इति वचनात् । अनादेश इति वचनं अग्न्याधेये ब्रह्मा गायेदित्यादेशे सति; तन्निवृत्त्यर्थं अनादेश इति । जैमिनिनोक्तं; "अथ परिमाणानि नगेयानि, न [1]ह्येवाध्वर्युः संप्रेष्यति, यदाध्वर्युः संप्रेष्यति गेयानीति । तथा पदायपदाय स्तोभाननुसंहरेदित्याचार्यसमयः । यथाधीतान्येव गेयानीत्य*नुब्राह्मणिन इति ॥ १ ॥

१२०. तृचापत्तीनि तृचेषु त्रिरितराणि ॥ २ ॥

यानि **तृचमापन्नानि तृचस्था(ना)नि रथन्तरादीनि परिमाणानि, तानि तिसृष्वपि ऋक्षु गायेत् । इतराण्येकर्चा-

* इह हि छान्दोग्ये द्विविधो विधिः आनुब्राह्मणिकः पाद्प्रामाणिकश्च । तत्र आनुब्राह्मणिकः यजुषां कर्मसु लिङ्गतो विधानं अर्थग्रहणात् इयत आरभ्य साधरणगुणविधिस्तु सर्वत्रेति यावत् इति अनुपदसूत्रोक्तः एकः, अपरः षड्भिः प्रमाणैः निर्वर्त्यते इति लाट्यायनश्रौतप्रथमसूत्रे अग्निस्वामिभाष्यम् । अत्र अनुपदसूत्रं तावत्, "द्राह्यायणं अनुपदं निदानं कल्पमेव च" इति श्रौतसूत्रदशकमध्ये द्वितीयं श्रौतसूत्रं, तदनुसारिणः अनुब्राह्मणिनः । एतच्च ज्ञापितं मदीय उपाकर्मप्रयोगे । सामरारसर्वस्वे च किञ्चिद्विस्तरशोऽभिहितम् ।

**तिसृणां ऋचां समाहारस्तृचं, "ऋचित्रेरुत्तरपदादिलोपश्चच्छन्दसि" (पा.६-१-३४ वा.) इति त्रिशब्दस्य संप्रसारणं, पूर्वरूपत्वञ्च (पा.६-१-१०८) "ऋक्पूरब्धूः" (पा-५-४-७४) इत्यादिना समासान्तोऽच्प्रत्ययः । तदापन्नानि तृचापत्तीनि ॥

1. इ. नह्यध्वर्युः ।

पत्तीनि, ऋग्विहीनानि च प्रजापतेर्हृदयादीनि, तानि त्रिस्त्रिर्गायेदिति ॥ २ ॥

अथ प्रवर्ग्यसामसु विशेषमाह—

१२१. *शार्ङ्गारूढवदाङ्गिरसेवा(द्वे)त्रिरभ्यस्येदन्तरा पराचा ॥ ३ ॥

'अञ्जन्तिघर्मं तत्रशार्ङ्गमि'[1]त्यादिना प्रवर्ग्यसामानि वक्ष्यति। तत्र प्रथमं साम शार्ङ्गसंज्ञकम्। आरूढवदाङ्गिरसमुत्तमं साम। एते एव द्वे सामनी प्रवर्ग्यप्रचारे त्रिरभ्यस्येत्। तयोरन्तरा यत् सामजातं तेन पराचा-सकृदुक्तेनैव गायेत्। नाभ्यस्येत्। पराचेति तृतीयैकवचनम्। वाशब्दो अवधारणार्थः। न पुनर्विकल्पार्थ इति ॥ ३ ॥

अन्तरा नाभ्यस्येदित्यत्र हेतुमाह—

१२२. तथा च होता ॥ ४ ॥

प्रवर्ग्यप्रचारे होताऽपि तथैव घर्ममभिष्टौति। प्रथमोत्तमे ऋचौ त्रिरुक्त्वा, मध्यपतितास्सर्वाः सकृदेव होता ब्रूते; तद्वत्प्रस्तोतापि मध्यपतितेन सामजातेन पराचैव गायेदिति ॥ ४ ॥

हेत्वन्तरञ्चाह—

१२३. लिङ्गोपपत्तिश्चैवम् ॥ ५ ॥

*१२१, १२२, १२३ सूत्राणि लाट्यायने न सन्ति॥..

1. प्रा-२-२-२५।

एवं पराचा गाने क्रियमाणेसति, प्रवर्ग्यसाम्नामनुष्ठेयार्थ-प्रकाशनरूपलिङ्गोपपत्तिः । अभ्यासेतु क्रियमाणे, कालविलम्बा-दुत्तरोत्तरानुष्ठेयस्य, मन्त्रात् प्रकाशनं नस्यादिति ॥ ५ ॥

१२४. अन्तरेण चात्वालोत्करौ सञ्चरस्सर्वत्रानादेशे ॥ ६ ॥

चात्वालोत्करावध्वर्युप्रसिद्धौ, तयोर्मध्यदेशेन *सञ्चरस्स[1]र्व-देति ॥ ६ ॥

१२५. तदाप्नानंतीर्थम्** ॥ ७ ॥

चात्वालोत्करयोर्यन्मध्य तदाप्नानसंज्ञक +तीर्थ-सञ्चर-

* सञ्चरः-"अन्तराऽन्तरेण युक्ते" आभ्या योगे द्वितीया स्यात् पा.२-३-४ इति षष्ठ्यर्थे द्वितीया । मध्यदेशेन सञ्चरः । सञ्चरत्यनेनेति करणे घान्तोनिपात. (पा-३-५-११६) मार्ग. ॥

** अत्र सञ्चरमार्गस्य आप्नानमिति, तीर्थमिति च पृथक् संज्ञाद्वयमिति मन्तव्य । यो भूयो जिगमिषेदाप्नानेन स गच्छेत् (द्रा-५-२-२४) इति, 'पूर्वेण पत्नीशाला अन्तरेणाग्नीद्ध्रीय सदश्च तीर्थेन दक्षिणा नयेयु": (५-२-१३) इति च पार्थक्येन सञ्चरमार्गाभिधानात् । अत एव आप्नान तीर्थमिति पदद्वयेन व्यस्ततया निर्देश सङ्गच्छते, अन्यथा "एतन्मृगतीर्थम्" (द्रा-५ २-२२) इतिवत् समासेनैव स्यात् ॥

+ तीर्थ-तरन्ति अनेनेति करणेथक् (पा-३-२-७) ॥

1 ङ सर्वत्रानादेशे ।

मार्गे.। संज्ञाकरण व्यवहारार्थं, "यो[1]भूयो जिगमिषेदाप्तानेन सगच्छे"दिति ॥ ७ ॥

॥ अथ चयनम् ॥

१२६. अग्नौ चीयमाने पश्चिमेन पुच्छंगत्वा
दक्षिणेऽपिकक्षे तिष्ठेयुरत्रोपदध्युः ॥ ८ ॥

परिसामगानार्थं प्रस्तोतेति शेष । यत्राध्वर्यव इष्टकोपधान कुर्युस्तत्रवा तिष्ठेत्, अपिकक्षेवेति विकल्प ॥ ८ ॥

अथकोयमपिकक्षोनाम? तमाह—

१२७. पश्चिमेनपक्षावपिकक्षौ ॥ ९ ॥

अग्निपक्षयो पश्चिमौदेशावपिकक्षौ पश्चिमेनेति'एनप्' ×प्रत्ययान्तोयम् । न तृतीयेति ॥ ९ ॥

१२८. पूर्वेणोप[2]व्लवौ ॥ १० ॥

पक्षाविरयनुवर्तते, पक्षयो [3]पुरस्तात् यौ प्रदेशौ तौ उपव्लयाविति ॥ १० ॥

१२९. पुष्करपलाश उपधीयमाने हिरण्मये पुरुषे
स्वयमातृण्णासु च शर्करासु व्याहृतिसामानि गापये-
धजमानं, सत्य पुरुषो भूर्भुवः सुवरित्येतासु पृथक् ॥ ११ ॥

---

× पश्चिमेन-पश्चिमे-अदूरे । एनवन्तमेतत् (पा ५-३ ३५) न तृतीयान्तम् ॥

---

1 द्रा ४ २-२४ । 2 द पा उपव्लवौ । 3. ड पुरा द्वौदेशो ।

प्रथममध्यमोत्तमासु चितिषु तिसृषु स्वयमातृण्णा शर्करा पुष्करपर्णादिषु च पञ्चसु इष्टकासूपधीयमानासु, सत्य पुरुषो भूर्भुवस्सुवरित्येतासु पञ्च[1]सु व्याहृतिषु पञ्चव्याहृतिसामानि क्रमेण यजमान पृथक् प्रस्तोता गापयेदिति ॥ ११ ॥

१३०. तेषां स्थाने स्वय चिन्वान ऋतनिधनमाज्यदोहं पुरुषव्रतमेकानुगान रथन्तरं वामदेव्यं बृहत् इति ॥ १२॥

स्वय चिन्वान इति सप्तमी । अध्वर्युर्यजमानो वा स्वय चिनुयादिति, यजमानस्य चयन विकल्पेन विहित, यजमाने स्वय चिन्वाने सति, तेषा व्याहृतिसाम्ना स्थाने आज्यदोहादीनि पञ्चसामानि यजमानमेव गापयेत् । ऋतनिधनमित्याज्यदोहविशेषण, एकानुगानमिति पुरुषव्रतविशेषणम् । के[2]चित्तु स्वय चिन्वान इतिप्रथमान्त प्रस्तोतुर्विशेषणमाहु । तदयुक्त; प्रस्तोतुश्चयनविध्यभवादिति ॥ १३ ॥

१३१. रथन्तरप्रभृतीनि विकल्प्यन्ते लोकसामभिराद्यैः ॥ १३॥

रथन्तर वामदेव्य बृहदिति त्रीणिसामानि विकल्प्यन्ते । लोकसामभि प्रतिलोमैरित्यर्थ । आ[3]र्षेयब्राह्मणे 'त्रीणिलोकानां व्रतानि दिवोऽन्तरिक्षस्य पृथिव्या इति लोकसामानि' दर्शितानि । मन्येवाद्यावापृथिवीसुभोजसावित्यस्यामृचि प्रथम लोकसाम । वाग्वागीय कयानश्चित्रआभुवदिति द्वितीयम् । पुनश्च मन्येवामित्यस्यामेव प्रतिष्ठासि प्रतिष्ठेति स्तोभोपक्रम तृतीय लोक-

---

1 इ पञ्चसुव्याहृतिसामानि । 2 रुद्रस्कन्दाचार्याः । 3 आर्षेयब्रा ३ २५

साम । तत्र प्रतिलोमैरिति वचनात्तृतीय रथन्तरयोः विकल्पः । द्वितीय वामदेव्ययोः विकल्पः । प्रथमवृहतोर्विकल्पः ॥ १३ ॥

१३२. सञ्चितमग्निं दक्षिणेन गत्वा अग्न आयूँषीति प्रत्यङ्मुखस्तिष्ठन् शिरसि गायत्रं गायेन्निरुक्तम् ॥ १४ ॥

अग्निचयनं समाप्य यदा मण्डू[1]ककर्षणान्तं कर्म अध्वर्युणा कृतं तदाऽग्निः सञ्चित इत्युच्यते । सञ्चितमग्निं दक्षिणेनगत्वा अग्ने शिरस्समीपे तिष्ठन्गायेत् । 'न धिष्ण्यमासादये'दिति श्रुतेः । अनिरुक्तं गेयमितिब्रा[2]ह्मणेन गायत्रस्य सामान्येनानिरुक्तगान विधानात्तन्निवृत्यर्थं निरुक्तमित्युक्तम् । अनिरुक्तगानं नाम, केवलं प्रणवेनैव गानमिति सूत्रकारो गायत्र[3]पटलेवक्ष्यति । निरुक्तगानं तु प्रत्यक्षमृगक्षरेणैव गानमिति ॥ १४ ॥

१३३. प्रत्याव्रज्य रथन्तरं दक्षिणेपक्ष उदङ्मुखः पश्चाद्वा प्राङ्मुखः ॥ १५ ॥

प्रत्याव्रज्य रथन्तरं दक्षिणेपक्षे दक्षिणतः उदङ्मुखस्तिष्ठन्, पश्चाद्वा प्राङ्मुखस्तिष्ठन् गायेदिति ॥ १५ ॥

१३४. पश्चिमेन पुच्छं गत्वा बृहदुत्तरे पक्षेदक्षिणामुखः पश्चाद्वा प्राङ्मुखः ॥ १६ ॥

स्पष्टम् ॥ १६ ॥

१३५. प्रत्याव्रज्य यज्ञायज्ञीयं पुच्छे संवत्सरश्चे-दुदैक्षःसौत्यो वा ॥ १७ ॥

---

1. क. विकर्षणान्तं । 2. ता-ब्रा-७-१-१७ । 3. अ-२१ ।

बृहद्गानानन्तरं प्रत्यात्रज्य पुच्छस्य पश्चात्तिष्ठन् यज्ञा यज्ञीयं गायेत्; यदिऋतो. कृत्स्नः संवत्सरोदीक्षाकालः स्यात्, सुत्याकालो वा यथा गवामयनतापश्चिदादेरिति ॥ १७ ॥

१३६. ऋतुष्ठायज्ञायज्ञीयमन्यत्र ॥ १८ ॥

संवत्सरदीक्षासुत्याद् गवामयनादेरन्यत्र ज्योतिष्टोमादौ ऋतुष्ठायज्ञायज्ञीय पुच्छेगायेदिति ॥ १८ ॥

१३७. वामदेव्यं दक्षिणेऽपि कक्षे ॥ १९ ॥

१३८. *प्रजापतेर्हृदयं उत्तरे ॥ २० ॥

द्वयमपि स्पष्टम् ॥ १९ ॥ २० ॥

१३९. एतानि गौतम उत्तरेणाग्निं गत्वा ॥ २१ ॥

एतानि सामानि उत्तरेणाग्निं गत्वा प्रारभेतेति गौतमः। दक्षिणेनाग्निं गत्वेति स्व[1]मतं पूर्वमुक्तमिति ॥ २१ ॥

अथ मतान्तरमाह—

१४०. **एतान्येव प्रदक्षिणं प्रत्यन्तात् धानञ्जय्यः ॥ २२ ॥

एतान्येव गायत्रादीनि शिरःप्रभृति यावदुत्तरं पक्षं प्रदक्षिण गायेत्। न पुनः प्रत्यावृत्त्यगायेदित्यर्थः ॥ २२ ॥

१४१. यज्ञायज्ञीयं पुच्छे ॥ २३ ॥

सर्वेष्वपि ऋतुषु यज्ञायज्ञीयमेव पुच्छे। न पुनः ऋतुष्ठायज्ञायज्ञीयमिति ॥ २३ ॥

---

*१३७, १३८ द्वयमपि एकमेव लाट्यायने।

**१४०, १४१, १४२ एतत्त्रयमपि एकमेव लाट्यायने।

1. द्रा-२-१-१४।

१४२ प्रजापतेर्हृदयस्थाने च वामदेव्यम् ॥ २४ ॥

प्रजापतेर्हृदयस्थाने च वामदेव्यमेव गायेत् । चकारात् स्वस्थानेऽपि । एतदन्तं धानञ्जय्यमतमिति ॥ २४ ॥

मतान्तरमाह—

१४३. दक्षिणेनाग्निं गत्वा गौतमीये व्यत्ययं वे पक्षयोः शाण्डिल्यः ॥

शाण्डिल्यस्तु गौत[1]म मतएवस्थित्वा ये पक्षयो. सामनी तयो व्यत्ययमाह, गमनञ्चदक्षिणेनाग्निमित्याहेति ॥ २५ ॥

१४४ शिरसि च गीत्वोत्तरे पक्षे ॥ २६ ॥

शिरसिच गीत्वा तदनन्तरमेवोत्तरपक्षे रथन्तरं गायेदिति ॥ २६ ॥

१४५. यथा गीतमितराणि ॥ २७ ॥

इतराणि बृहत्प्रभृतीनि सामानि गौतममतेयथा गीत तथा गायेदिति ॥ २७ ॥

१४६. उत्तरेचोपव्[2]लये स्वं हृदयदेशमालभ्य प्रजापतेर्हृदयम् ॥ २८ ॥

स्व-आत्मीय हृदयदेशमालभ्य उत्तरउपव्लये (उपप्लवे) प्रत्यङमुखस्तिष्ठन् प्रजापते हृदय गायेत् । चकारात् स्वस्थानेप्युत्तरेऽपिपक्षे गायेत् । एतदन्त शाण्डिल्यमतमिति ॥ २८ ॥

---

1 ला २-१-२१ । 2 क उपप्लवे ।

अथ सर्वमतसाधारणमाह—

१४७. अध्वर्युपथेऽस्यैतम् ॥ २९ ॥

आक्रमणेष्टकासमीपं अध्वर्युपथः । तत्रस्थित्वा सर्वान्ते ह्यैतं गायेदिति ॥ २९ ॥ (इति चयनम्)

द्वितीयपटले प्रथम. खण्ड.



अथ द्वितीय. खण्डः

अथ प्रवर्ग्योद्वासनमधिकृत्याह—

१४८. प्रवर्ग्यवत्युत्तरेण सम्राडासन्दीं गत्वा पश्चात्तिष्ठन्
अध्वर्युप्रेपितस्त्य[1]ग्नाद्दरिति गायेत् ॥ १ ॥

प्रवर्ग्यवतिक्रतौ प्रवर्ग्योद्वासनकाले सम्राडासंदीमुत्तरेण गत्वा तस्या. पश्चात्तिष्ठन्, अध्वर्युप्रेपितस्त्यग्नाद्दरिति गायेत् । प्रवर्ग्यसामान्यनुक्त्वैव तदुद्वासनसाम्नो प्रथम विधानं प्रवर्ग्य-साम्नामनित्यताज्ञापनार्थम् । तथा च व[2]क्ष्यति, 'नवा कुर्या-दि'ति । प्रवर्ग्यवतीति विशेषण, प्रथमयज्ञे प्रवर्ग्यनिषेधात् । प्रवर्ग्योद्वासनविषयमेतद्विधानमिति वक्ष्यमाणसूत्रपर्यालोचन-याऽवगन्तव्यम् । नन्वेवं, प्रवर्ग्यवतीति व्य[3]र्थविशेषणम् । सत्यं; विस्पष्टार्थम् । केचित्तु प्रवर्ग्योद्वासने उत्तरेणेत्येव पठन्ति । अत्र

1. ख. स्वर्नानीरति । 2. द्रा-२-२-१५ । 3. ख. व्यर्थविशेषण ।

प्रवर्ग्योद्वासने प्रस्तोतः साम[1]गायेति त्रिः प्रैषो भवति । प्रतिप्रैषं सकृत्सकृत् सामगानं, त्रिर्व[2]चनस्य समुदायसिद्धत्वादित्येके । प्रतिप्रैषं त्रिगायेदित्यन्य इति ॥ १ ॥

१४९. *पदाय पदाय स्तोभेत् ॥ २ ॥

अग्निं होतारंमन्येदास्वन्तं इत्यस्यामृचि प्रतिपादं त्वग्राइ॰रिति स्तोभमाहरेदिति ॥ २ ॥

१५०. निधनायैव स्तौमीं वाचं विसृजेत् ॥ ३ ॥

त्वग्राइरिति [3]स्तोभगतां वाचं–वाग्व्रन्दमित्यर्थः । तांनिधनायैव ब्रूयात् । न प्रतिपादमित्यर्थः ॥ ३ ॥

१५१. उपग्रहप्रभृतीनि स्वरयन्त उपेयुः येधर्मोप-युक्ताःस्युः ॥ ४ ॥

ये धर्मे प्रवर्ग्यप्रचारेउपयुक्ताः-समन्विताः, ते सर्वे उपग्रहप्रभृतीनि निधनानि स्वरयन्तो ब्रूयुः । उपग्रहशब्देन निधनात्पूर्वपठित एकार उच्यते । उप समीपे, गृह्यते पठ्यते इत्युपग्रह इति । स्वर न्त इति वचनं प्रथमद्वितीयार्थम् । तृतीयस्याध्ययनसिद्धत्वात् ॥ ४ ॥

१५२. पत्नी च ॥ ५ ॥

उपग्रह प्रभृतीनि निधनानि उपेयादिति शेषः । पत्न्या

* [illegible] ॰नैव ।

1. आप. १५-१३-६ । 2. द्रा-२-१-२ । 3. क. स्तोभमन्त्रगतां ।

अपि प्रवर्ग्यसमन्वयादेव सिद्धे, पुनर्वचन यजमानस्य निधनवचनादेव तस्या कृ[1]तकार्यत्वाऽऽशङ्कानिवृत्त्यर्थमिति ॥ ५ ॥

१५३ एव मध्ये ॥ ६ ॥

मार्गस्य मध्येऽप्येवमेव प्रस्तोता गायेत् । सर्वे निधन मूयुरिति ॥ ६ ॥

१५४ प्राप्यचाहवनीयायतनम् ॥ ७ ॥

आहवनीयायतन उत्तरवेदि, प्राप्य च एवमेव गायेत् । निधनञ्च सर्वेब्रूयु । आहवनीयायतनमिति घर्मोद्वासनदेशोप लक्षणम् । तेन नदीद्वीपादौ घर्मोद्वासनेऽप्येवमेव कुर्युरिति ॥ ७ ॥

१५५ परिषिच्यमानेऽप उपस्पृश्य वार्षाहरम् । ८ ॥

अध्वर्युणा[2] परिषिच्यमाने घर्मे, अप उपस्पृश्य वार्षाहर साम गायेदिति ॥ ८ ॥

१५६ इष्टाहोत्रीय परिषिक्ते ॥ ९ ॥

परिषिक्ते घर्मे, इष्टाहोत्रीय साम गायेदिति ॥ ९ ॥

१५७ तस्य सर्वे निधनमुपेयुः ॥ १० ॥

तस्य इष्टाहोत्रीयस्य साम्नो निधन घर्मोपयुक्ता सर्वे ब्रयुरिति ॥ १० ॥

---

1 क पा कृतकार्यत्वात् शङ्का । 2 क पा अधिक इत्यधिकः ।

१५८. द्वीपश्चेत्, घर्मपात्राणि हरेयुः*सन्ततान्येव गायेत्वा-
काङ्क्षेत्परिषेचनम् ॥ ११ ॥

*यदि नदीद्वीपे घर्मपात्राणि अध्वर्यवो हरेयुः तदानीं* [1]नदीद्वीपं प्राप्य पूर्वोक्तानि त्वग्नाइरित्यादीनि त्रीण्यपि सामानि सन्ततानि अविच्छेदेनैव गायेत् । न परिषेचनमाध्वर्यव प्रतीक्षेतेति ॥ ११ ॥

१५९. श्यैतं प्रत्याव्रजन् ॥ १२ ॥

इष्टाहोत्रीयगाने कृते प्राग्वत् प्रत्याव्रजन् प्रस्तोता श्यैतं गायेदिति ॥ १२ ॥

१६०. तृचेवैकस्यां वा यजमानो निधनमनूपेयात् ॥ १३ ॥

एकस्यामृचि, तृचेवा, श्यैतनिधनं, यजमानोऽपियूया-दिति ॥ १३ ॥

१६१. पूर्वया द्वारा प्रपद्य उत्तरेणाग्नीन् गत्वा, पश्चा-
द्राहैपत्यस्य तिष्ठन्, महावीरायतनं प्रेक्षमाणः
वामदेव्यं गायेदिति धानञ्जप्यः ॥ १४ ॥

महावीरायतनमिति-पूर्वं प्रवर्ग्यप्रचारे यत् महावीरस्या-यतनं तदिति ॥ १४ ॥

१६२. श्यैतान्तानीति शाण्डिल्यः ॥ १५ ॥

*अस्मिन्सूत्रे 'सन्ततान्येव गायेदि'ति लाट्यायने नास्ति ॥

1. ड. तंद्वीपं ।

त्यभ्राड् प्रभृतीनि श्यैनान्तानि चत्वार्येव धर्मोद्वासने गायेत्। न वामदेव्यमावश्यकमित्यर्थ। तथा च जैमिनि, श्यैतान्तान्येवोक्त्वा वामदेव्य नोक्तवान्। अत्र [1]कश्चित् वामदेव्य नित्यमिति मत्वा व्याचष्टे। श्यैतान्तान्येव तिष्ठन्गायेत्। वामदेव्यन्त्वासीन एवेति। तत् सूत्रानुगुण न भवति ॥ १५ ॥

१६३ गणस्सामान्युत्तराणि ॥ १६ ॥

उत्तराणि *शान्तिसामानि वक्ष्यामः, तानिसर्वाण्येको* गण। *तस्य सहप्रवृत्ति सह वानिवृत्तिरित्यर्थ। तेषा स्वेस्वे विषये विकल्प वक्ष्यति। तत्र [2]यदा एक कर्तुमिष्यते तदाऽन्यदपि कर्तव्यम्। न पुनरेकस्य करणमन्यन्यस्याकरणमिति वैषम्य कार्यमित्यनेन सूत्रेणोक्तमिति ॥ १६ ॥

अथ तेषां विकल्पमाह—

१६४. आभिरूप्यात्कर्तव्यानीत्येके ॥ १७ ॥

तेषा साम्ना तत्र तत्र कर्मणि आभिरूप्यात्-क्रियमाणकर्माभिवादित्वात् कर्तव्यानीत्येके इति। तथा च जैमिनि— "सर्वेष्टिपशुसोमेषु यथालिङ्ग यथा दैवतञ्च सामानिगायेदि"ति ॥ १७ ॥

१६५. नवा कुर्यात् ॥ १८ ॥

---

*सन्नियोगशिष्टानां सहवाप्रवृत्ति सहवा निवृत्तिरिति पाणिनीया।

---

[1] रुद्रस्कन्द। [2] क ग घ यद्येक।

नहि वचनाभावे लिङ्गमात्राद्गानं युक्तमिति भावः ॥१८॥

१६६ स्वेवायज्ञेकुर्यादित्येके ॥ १९ ॥

स्वकीययज्ञे सत्रेषु अवश्य कुर्यादित्येके ॥ १९ ॥

१६७. *यथा कामी वा ॥ २० ॥

स्वकीयेऽपि यज्ञे याथाकाम्य वा स्यात्, कुर्याद्वा, नवे-त्यर्थः ॥ २० ॥

१६८ दीक्षणीयाया तार्क्ष्यसामनीगायेत्, स्यमृध्दित्येते ॥२१ ॥

दीक्षणीयायामिष्टौ प्रधानयागकाले गायेत् । अगानात् प्रधान[1]कालत्वात् । स्पष्ट[2]माह जैमिनि — "यानि पशौ शिष्टानि सामानि वपान्ते तानि गायेत्, प्रधानयागकाल उपसत्सु च इष्टिषु चे"ति । तथा, "प्रागावृत्तस्तिष्ठन्नुपविष्टो वा मध्यमया वाचा गाये"दिति ॥ २१ ॥

१६९. प्रायणीयायां प्रनद्भार्गवम् ॥ २२ ॥

स्पष्टम् ॥ २२ ॥

१७० उदयनीयाया उद्वत् ॥ २३ ॥

भार्गवमित्यनुवर्तत इति ॥ २३ ॥

१७१. आतिथ्यायां गायत्रीसामौशनम् ॥ २४ ॥

---

*सूत्र १६७ लाट्यायने नास्ति ।

1 प्रधानयागकाल । 2 स्पष्टमाह ।

औशनस्य*विशेषण गायत्री सामेति । गायत्र्यामृचि गीयमानमित्यर्थ. ॥ २४ ॥

अथ प्रवर्ग्यसामान्याह -

१७२. अञ्जन्तिघर्म तत्र शार्ङ्गम् ॥ २५ ॥

प्रवर्ग्यप्रचारे घर्मं महावीरमध्वर्यवोऽञ्जन्ति । तदा शार्ङ्गं गायेत् । अत्र जैमिनि प्रवर्ग्यसामान्यधिकृत्याह— **"अन्तरेणवेद्युत्करौ प्रपद्य अपरेण होतार परीत्य दक्षिणतोघर्ममभिमुख उपविश्य गाये"दिति ॥ २५ ॥

१७३. रजतजातरूपे उपदधाति तच्छुक्रचन्द्रे ॥ २६ ॥

रजतञ्च जातरूपञ्च द्वे रुक्मे क्रमेणोपदधत्यध्वर्यव. । तदानी शुक्रचन्द्रमामनी गायेदित्यर्थः ॥ २६ ॥

१७४. अभीन्धते तद्घर्मस्य तन्वौ ॥ २७ ॥

घर्ममित्यनुवर्तते, घर्ममभीन्धते अध्वर्यव. । तदानी घर्मस्य तन्वौ गायेत् । अत्र केचिद्घर्म तन्वौ गीत्वा तदनन्तरं महावैश्वानरव्रतादीनि, कानिचित्सामानि घर्माभिरूपत्वात् गेयान्याहुः । तच्चिन्त्य, सूत्रकारेणानुक्तत्वादिति ॥ २७ ॥

१७५. रुचितं प्राहुस्तद्घर्मस्यवारोचनमिन्द्रस्य वा ॥ २८ ॥

---

*अन्यथा त्रैष्टुभ औशन स्यात् ।

**उत्कर - भागलयकृताया ' अन्तर्वेद्या' मध्यमभाग: उत्करः ।

घर्ममित्यनुवर्तते— रुचित घर्म प्राहुरध्वर्यव, [1]रुचितो घर्म इति। तदानी घर्मरोचनमिन्द्ररोचन वा गायत् इति ॥ २८ ।

१७६. *धेनुमुपसृजन्ति तद्धेनु ॥ २९ ॥

धेनुवत्सेनयोजयन्ति, अध्वर्यव तदानी धेनुसामगायेत् ॥ २९॥

तत्र स्वाध्यायवद्गाने प्राप्ते विशेषमाह—

१७७ ** तस्य देवतासु सोपायं स्तोभमाहरेदनुपायपादाया-भ्यस्येदुत्तमं पादं पञ्चनिधनवदिति गौतमः ॥ ३० ॥

स्वादिष्ठयेत्यस्यामृचि प्रतिपाद पुरस्तादेकैका देवताऽऽम्नाता। भुवदिडा, जनदिडा, वृधदिडेति तृतीयपादस्योपरिष्टाच्चैका देवता करदिडेति। तदनन्तर सोपायस्तोभ। तदन्ते देवताभूत निधन, सामोपक्रमे च निरुपायस्तोभ, एव[2]स्थिते इदमाह-तस्य धेनुसाम्नो देवतासु उच्यमानासु सोपाय स्तोभ प्रत्येक पुरस्तादाहरेत्। उपायरहितस्तोभ [3]पादाय पादाय पुरस्तादाहरेत्। तथा स्वादिष्ठयेत्यस्या उत्तम पाद करदिडेति

* धेनु उपसृजन्तितद्धेन्विति लाट्यायने। ...

** "तस्य देवतायै सोपाय स्तोभमाहरेत् न पादायेति गौतम उत्तम पाद पुनरभ्यस्येत् यथा पञ्चनिधनेवामदेव्ये" इति सूत्रद्वयमेव, १७७ १८० स्थाने विद्यते लाट्यायने।

1 शतपथवा १४ १ ३, ३३ आप-१५ ८-१३।

2. इ स्थितमिदमाह। 3 इ पा पदाय।

चतुर्थदेवतानन्तरमाहृत्याभ्यस्येत् । अस्य [1]नयस्यापि दृष्टान्तः, पञ्चनिधनवदिति । यथा कयानश्चित्रइति पञ्चनिधनेवामदेव्ये निधनभूतासु देवतासु प्रत्येकं सोपायस्तोभ आम्नातः । प्रतिपादं निरुपायस्तोभः, उत्तमश्च पादः चतुर्थनिधनानन्तरमभ्यस्यते तद्वदिति । अत्र तथाऽध्ययनाभावेऽपि पञ्चनिधनवामदेव्याध्ययनं निदर्शनार्थमिति गौतमाभिप्रायः । अत्र उपायशब्देन स्तोभान्तगतो वाशब्दोऽभिधीयते । तस्य सर्वेषु सामसु निधनोपायत्वात्, निधनलक्षणत्वादित्यर्थः । तथा च वक्ष्यति त्रान्यन्तस्सामनिधनानि, [2]वाक्चेरस्तोभान्तोऽनन्तर इत्यादीति ॥३० ॥

मतान्तरमाह—

१७८ समस्येत्पदद्देवते इति शाण्डिल्यः ॥ ३१ ॥

पादञ्च देवताञ्च समस्येत्, नतयोः पृथक्पृथक् स्तोभमाहरेदिति शाण्डिल्यः । तस्याप्युत्तमस्य पादस्याभ्यासः संमत एव, निषेधाभावात् । तन्मते पञ्चकृत्वः स्तोभाहरणम् । तत्र यथाऽध्ययनं सामान्ते सोपायस्तोभः । [3]तत. पूर्वं देवता चतुष्टये *निरुपायस्तोभ इति ॥ ३१ ॥

---

*औहो वा इत्युक्त्वा होइ इत्यन्तमपोह्य स्वादिष्ठयेत्याह इति आण्डपिल्लै प्रयोगे । तत्र देवतापदात् पूर्वं सोपायस्तोभः प्रयोक्तव्यः । तदनन्तरं स्वादिष्ठयेति ब्रूयात् । ऋक् पादार्थे होइ इत्यन्तं न ब्रूयात् इत्यर्थ. । अयमेव ऋजुरिति भाति ॥

---

1. क. तृतीयस्यापि । 2. द्रा-२०-३-३२-३३ । 3. क. तत्पूर्वं ।

मतान्तरमाह—

१७९. नोत्तमं पादं पुनरभ्यस्येदिति वार्षगण्यः ॥ ३२ ॥

उत्तमपादाभ्यासे प्रमाणाभावात् नाभ्यासः कार्यः । पञ्च-निधने तु वामदेव्येऽध्ययनसिद्धोऽभ्यास इति वैषम्यम् । तन्म-तेऽपि पाददेवतयो समासेनैव स्तोभाहरणं पञ्चकृत्व इति समानम् ॥ ३२ ॥

ननु; तत्पक्षे केवल चतुर्थदेवतायाः स्तोभाहरणं न प्राप्नोति । ततः पूर्वं समस्तयोरेव पददेवतयोः स्तोभाहरणात् । तत्र आह—

१८०. शेषं यथा मरुतां भूतौ तथा समापयेत् ॥ ३३ ॥

यथाऽन्तश्चरति रोचनेति मरुतां भूतौ साम्नि पददेवतयो समासेनैव पूर्वं स्तोभमाहृत्य पश्चात्केवलदेवताया अपि स्तोभा-हरणमाम्नातम् । तद्वदत्रापि चतुर्थदेवताप्रभृति शेष समापयेत् । केवलदेवताया अपि स्तोभमाहृत्यैव समापयेदित्यर्थ ॥ ३३ ॥

१८१. पय आहरन्ति तत्पयः ॥ ३४ ॥

पयः आहरन्त्यध्वर्यव. तदानीं पय. सञ्ज्ञकं सामगायेदिति ॥ ३४

१८२. आसिञ्चन्ति तत्सिन्धुषाम आस्वाचिशत्स्वितिं ॥ ३५ ॥

महावीरे पय आसिञ्चन्ति, तदानी सिन्धुषाम गायेदिति॥३५॥

१८३. शफाभ्यां परिगृह्णन्ति तद्वासिष्ठस्य *शफौ ॥ ३६ ॥

---

*महावीरधारणार्थं यज्ञियकाष्ठनिर्मितेमध्यमभागे वर्त्तुले द्वे दारुणी शफपदवाच्ये भवतः ।

यदा शफाभ्यां महावीरं परिगृह्णन्त्यध्वर्यवः तदानीं वसिष्ठस्यशफाविति ॥ ३६ ॥

१८४. ह्रियमाणे व्रतपक्षौ ॥ ३७ ॥

अध्वर्युभिर्महावीरे ह्रियमाणे इति ॥ ३७ ॥

१८५. हुतेऽश्विनोर्व्रतेऽहोरात्रयोर्वा ॥ ३८ ॥

हुतेघर्मेऽश्विनोर्व्रते अहोरात्रयोर्व्रते या गायेदिति ॥ ३८ ॥

१८६. रौहिणाभ्यां पुरोडाशाभ्यां चरन्ति तद्वाचनरौहिणके॥ ३९॥

स्पष्टमिति ॥ ३९ ॥

१८७. परिघर्म्यं सम्राडासन्द्यां समारोपयन्ति, तदाऽऽरूढ-वदाङ्गिरसमितपत्र इति स्वर्निधनम् ॥ ४० ॥

परिघर्म्यं प्रवर्ग्योपकरणं महावीरादिकं अध्वर्यव साव-यन्ति, तदानीमारूढवदाङ्गिरसं गायेत् । तस्य साम्न ऊपेति निधनम् । तदपोह्य तत्स्थाने स्वरिति निधनञ्च कुर्यात् । स्वर्निधनमिति बहुव्रीहि । आरोहानितिपदान्वयादारूढवदित्युक्तमिति ॥ ४० ॥

१८८. *अग्निं प्रणयन्ति तत्राग्नेर्व्रतम् ॥ ४१ ॥

औपवसथ्येऽहन्युत्तरवेद्या अग्निप्रणयन्त्यध्वर्यवः । तदानीमग्नेर्व्रतमनुव्रजन्नेव गायेत् । होतुरनुव्रजनदर्शनात् इति ॥ ४१ ॥

---

*अत्र ऋङ्मयो यजुर्मय- साममयो भवति इतिह्याह इति लाट्यायने अधिकं सूत्र, भाष्यञ्च 'त्रय्याविद्यया संस्कृतः घर्म' इत्यर्थ इति ॥

१८९. अग्नीषोमौ तत्रोभयोर्व्रते ॥ ४२ ॥

प्रणयन्तीत्यनुवर्तते - अग्नीषोमौ प्रणयन्त्यध्वर्यव । तदानीमुभयोरग्नेस्सोमस्य च व्रते गायेदिति ॥ ४२ ॥

१९०. *सुत्यायां यज्ञसारथि प्राक्प्रातरनुवाकोपाकरणादाग्नीध्रीयेऽहरहः ॥ ४३ ॥

सुत्यादिवसे प्रातरनुवाकोपाकरणात्पूर्वं आग्नीध्रमण्टपे उपविश्य यज्ञसारथि गायेत् । एवमहरहरहीनेष्विति ॥ ४३ ॥

१९१. सत्रे सत्रस्यर्द्धि ॥ ४४ ॥

सत्रेषु यज्ञसारथिस्थाने सत्रस्यर्द्धि गायेत् ॥ ४४ ॥

१९२. उक्षाचेदनूबन्ध्य औक्ष्णोरन्ध्रे ॥ ४५ ॥

अवभृथोत्तरकालमनूबन्ध्यपशुरस्ति, सचेदुक्षास्यात् तदानीमौक्ष्णोरन्ध्रे सामनीवपान्ते गायेत् । यानि पशौ शिष्टानि तानि वपान्ते गायेदिति [1]जैमिनिवचनात् । अत्र केचिदाग्नीध्रीये गानं कार्यमित्याहु , अन्ये तु [2]विशेषावचनादङ्गाना प्रधानदेशत्वाच्चाहवनीयसमीपे गानमित्याहु इति ॥ ४५ ॥

१९३ ऋषभआर्षभम् ॥ ४६ ॥

अनूबन्ध्यइति विपरिणतमनुवर्तते । ऋषभेऽनूबन्ध्ये सति, आर्षभ सामगायेदिति ॥ ४६ ॥

*"सुत्याया यज्ञसारथ्यहरहरिति लाट्यायने सूत्रम् ।

1 जै २ २ २१ । 2 इ विशेषवचना अङ्गाना प्रधानदेशत्वादाह-वनीय ।

यद्यन्यतो गृह स्यात्तदा देवयजनस्य उत्तरपार्श्वेन गच्छेत् । उभयथाऽप्या*प्माने[1]नैव[A] देवयजनस्य प्रवेश इति ॥ २ ॥

२०३. पूर्वौ सदसोद्वार्यौ श्वभ्रावन्तरेण प्रपद्याग्रेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन् अध्वर्युणासहोच्छ्रयेद्दक्षिणोत्तरोत्तानाभ्यां पाणिभ्यां घृता[2]नस्त्वेति ॥ ३ ॥

सदस. पूर्वद्वारे स्थूणानिखननार्थमवटद्वयमस्ति, तौश्वभ्रौ अन्तरेण प्रविश्य प्रागग्रामोदुम्बरीमध्वर्युणा पूर्वमेव निहितामग्रेण गत्वोदङ्मुखस्तिष्ठन् अध्वर्युणा सहोच्छ्रयेत् । [3]दक्षिणोत्तरोत्तानाभ्यां पाणिभ्यां घृतानस्त्वेति ब्राह्मणपठितेन मन्त्रेण, पृथिवीमित्यन्तेनेति ॥ ३ ॥

२०४. आयोरिति श्वभ्रेऽवदध्यात् ॥ ४ ॥

आयोष्ट्वेत्यादिना हृदय इत्यन्तेन ब्राह्मण पठितेन मन्त्रेण श्वभ्रेऽवदध्यात् । अत्र ब्राह्मण, "[4]तामन्वारभत आयो"ष्ट्वेति । तस्यायमर्थं अन्वारभ्य सादयेदिति । कुत ? सादयामीति मन्त्रलिङ्गात्सूत्रानुरोधाच्चेति ॥ ४ ॥

२०५. अथधाय जपेन्नमः समुद्राय नम [5]समुद्रस्यचक्षसे मामा यूनर्वोहासीदूर्गस्यूर्जोदा ऊर्जं मेदेह्यन्नं मे धेह्यन्नं मेदेहि ब्रह्म मे धेहीति ॥ ५ ॥

* चात्वालोत्करयोर्यन्मध्य तदाप्मानसञ्ज्ञक सञ्चरमार्गः ।

1. द्र आप्मानेन । 2 ता-ब्रा-६-४-२ । 3 द्र दक्षिणोत्तराभ्यामुत्तानाभ्यां । 4 ता ब्रा ६-४ ३ । 5 ता ब्रा-६-४-७-८-११ ।

A आप्मानेनैव तीर्थं नैवेति क.ग पाठ

ननु ब्राह्मण पठितएव मन्त्र. किमर्थं पठ्यते? उच्यते; ब्राह्मणे मन्त्रैकदेशाना पृथक् पृथग्विनियोग प्रतिभाति । तन्निवृत्त्यर्थं कात्स्न्र्येन [1]पठित्वा जपे विनियुक्त इति ॥ ५ ॥

२०६. तामविसृजेदाऽऽच्छादनात् ॥ ६ ॥

तामोदुम्बरी न विसृजेत्, छदिरध्यू[2]हनात्पूर्वमिति ॥ ६ ॥

२०७. अध्वर्युणाऽभिहुतायां जुहुयात्तस्यैवाऽऽवृताऽन्तरेण विशाखे ॥ ७ ॥

अध्वर्युणाऽभिहुतायामौदुम्बर्या–होमे कृते इत्यर्थः । तस्यैवाऽध्वर्यो. आवृता-प्रकारेण हिरण्यनिधानादिना, औदुंबर्याः विशाखयोर्मध्ये स्रुवेण जुहुयादिति ॥ ७ ॥

२०८. घृतेन द्यावापृथिवी आप्रीणाथां स्वाहेति पूर्वां, प्रजापतयेस्वाहेत्युत्तराम् ॥ ८ ॥

आहुतिमितिशेषः ॥ ८ ॥

२०९. अन्यतरां वा स्वाहाकारद्वितीयाम् ॥ ९ ॥

पूर्वयोर्मन्त्रयोरन्यतरेणैकामाहुतिं, केवलस्वाहाकारेण द्वितीयामाहुतिमिति पक्षान्तरमिति ॥ ९ ॥

२१०. यथा भूमिमाज्यं प्राप्स्यतीति ॥ १० ॥

उभयोरपि पक्षयोः, यथाभूमि औदुम्बरीमूलमाज्यं

1. ङ पठित्वाज्जपे विनियुङ्क्ते । 2. आ-२-३-१३ ।

प्राप्स्यति, तथा प्रभूनमवकल्पयेत् । इतीति—अनेन प्रकारेणे-त्यर्थः ॥ १० ॥

२११. *आज्य होमचोदना**स्वनादेशे ॥ ११ ॥

स्पष्टमिति ॥ ११ ॥

२१२. अधस्ताद्विशाखस्य परिगृह्यजपेत् दिवि देवां दृंह मयि प्रजामिति ॥ १२ ॥

स्पष्टमिति ॥ १२ ॥

२१३. अन्तरिक्षे वयाँसि दृंह मयि पशूनिति मध्ये ॥ १३ ॥

औदुम्बरीमध्य परिगृह्येत्यर्थः ॥ १३ ॥

२१४. पृथिव्यामप्योषधीर्दृंह मयिसजातानिति मूले ॥ १४ ॥

मूल परिगृह्येत्यर्थः ॥ १४ ॥

२१५. ऊर्ध्वं होमाद्यजमानं धानञ्जप्यः ॥ १५ ॥

होमादूर्ध्वं यत्कर्म मन्त्रजपात्मक, तद्यजमानेनैव कर्तव्य, मयि प्रजा पशून् सजातान् दृंहेति प्रत्यगाशीष्ट्वादिति ॥ १५ ॥

२१६. स्वयमिति गौतमशाण्डिल्यौ या वै काश्चिदृत्विगाशिष-माशास्ते यजमानस्यैव [1]सेति ॥ १६ ॥

---

* इद मूल लाटघायने नास्ति ।

** "आज्य जुहुयात् हविषोऽनादेशे" । खा-गृ-सू पट-२-ख-२-सू-१५ ।

---

1. इ यजमानस्य सर्वतोर ।

स्वयमेवोद्गाता मन्त्रजपःकार्यइतिमतान्तरम् । ऋत्विग्भिः कृतमपि फलाशासनं यजमानगतमेवाशास्यते, न स्वार्थमिति हेतोरिति ॥ १६ ॥

२१७. अवच्छाद्यमानायां दिव्यच्छदासि सन्तनिनाम विश्वजनस्य छाया, नमस्तेऽस्तु मा माहिंसीरिति ॥ १७ ॥

अध्वर्युणाऽवच्छाद्यमानायामौदुम्बर्यां जपेदिति ॥ १७ ॥

२१८. दक्षिणेन श्वभ्रान् गत्वाऽपरौद्धार्यावन्तरेण प्रपद्यैतत्कुर्यादिति शाण्डिल्यः ॥ १८ ॥

सदसि यावन्तः श्वभ्राः, स्थूणानिखननार्थाः, तान् सर्वान् दक्षिणेन गत्वा, अपरौद्धार्यौ–श्वभ्रावन्तरेण प्रपद्य, एतत्-उच्छ्रयणादिकं कुर्यादिति शाण्डिल्य इति ॥ १८ ॥

२१९. उत्तरेणेति धानञ्जप्यः ॥ १९ ॥

तानेवश्वभ्रानुत्तरेणेत्यर्थः ॥ १९ ॥

२२०. गौतमीयमितरत् ॥ २० ॥

इतरन्मतं गौतमीयं, यत् [1]पूर्वमुक्तम् पूर्वेणसदसोद्वार्याविव्यादि ॥ २० ॥

२२१ यथेतंनिष्क्रामेत् ॥ २१ ॥

[2]सर्वथा येनप्रकारेण सदसि प्रविष्टः तेनैव प्रकारेण निष्क्रामेदिति ॥ २१ ॥

इति द्वितीयपटले तृतीयः खण्डः -



1. द्रा.२-३-२ । 2. ङ. यथा ।

अथ चतुर्थः खण्डः

२२२. *यूपमुच्छ्रीयमाणमनुमन्त्रयेत[1]नृमणऊर्ध्वमर सन्त्वेति ॥ १ ॥

यूपोच्छ्रयणकाले, अध्वर्युणा यूपमुच्छ्रीयमाणं उद्गाता-

*यूपलक्षणं षड्विंशे—१. यूपं करोति सक्षीरं स्थूल मूले बालाग्रं अनुरूपम्। २. वज्रोवैयूपः वज्रेणैवास्मै भ्रातृव्यं प्रहरति। ३. अष्टाश्री करोति। ४. दश दिशः परिगृह्णाति। ५. पञ्चदश सप्तदश एकविंशत्यरत्निं वा। ६. पालाशं पुष्टिकामस्य, बैल्वं ब्रह्मवर्चस कामस्य, औदुम्बरं अन्नाद्यकामस्य, खादिर बलकामस्य वैभीतकराजवृक्षौ भ्रातृव्यवतः, क्रमुकाश्वत्थ पायसा. यशस्कामस्य, यत्किञ्च यज्ञियं पशुकामस्य। ७. तत्रवर्जनीयाभवन्ति गड्डुलो व्रणिलो व्यावृत्तः, कुटिः कुब्जः शूलः दग्ध शुष्क. सुषिर घुणजग्धः इत्यप्रशस्ताः। ८. अथ प्रशस्ता. शुद्धाग्रशाः अनुपूर्वसमा. प्रशस्ताः। ९. यूपस्याश्रिदेवतानि अग्नि पूर्वायां यमो दक्षिणायां वरुणः पश्चिमायां सोम उत्तरायां यांविदिक्षः तासु आदित्यरुद्रमरुद्वसव॰, अपराजिता. पितरश्चाधरायां साध्याश्चोर्ध्वायाम् १०. सर्वदैवत्यो वै यूपः यूपो वैबहुरूप वज्रीभूत्वा देवानुपतिष्ठते इत्यादि षड्वि—अ-५-ख-४-सू १ to १०।

यूप्या वृक्षाः पलाशखदिरबिल्वरौहीतका. ॥ पालशं तेजस्कामोयशस्कामो वा। खादिर, स्वर्गकामो वीर्यकामो वा।

1. ता-ब्रा-१-१-६।

रोऽनुमन्त्रये*रन्, 'यु[1]गपत्कर्मसु सर्वेष्विति' वक्ष्यमाण सूत्रात् त्रय एवोद्गातारः। चत्वारोऽपीति केचित्, अस्मिन् स्थाने युगपत्कर्मस्विति सूत्राकरणात्। नृमणऊर्ध्वभरसन्त्वेति पदत्रयोपादानं उत्तरसूत्रे तत्परामर्शनार्थमिति ॥ १ ॥

२२३. एतान्येवोहस्थानानि यावन्तः स्युः ॥ २ ॥

एतान्येव त्रीणिपदानि कदाचिदूहस्थानानि भवन्ति। यत्र यावन्तो यूपास्स्युः, तत्र तावत्सु यूपेषु, तद्यथा यूपैकादशिन्यां नृमणस, ऊर्ध्वभरसः, वः इति। तत्र कालभेदेन यूपानामुच्छ्रयणात् प्रकृतिवदविकारेण प्रयोगे प्राप्ते, वचनमेतत् प्रथमयूपोच्छ्रयणकाल एव उत्तरानप्यभिप्रेत्य मन्त्रोहः कार्य इति। नृमण इति समासोयं सकारान्तः संबुध्यन्तः। यथा [2]समुद्रे त्वा नृमणा

---

बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा। रौहीतकं प्रजाकामश्चक्षुष्कामो वा॥ समेजातमशाखाजं बहुपर्णशाखं अप्रतिशुष्काग्रं असुषिरमव्यावृत्तं अघूर्णमृजुमूर्ध्वमकलमग्रईषदुपावनतं प्रागुदक् प्रत्यग्वोपनतम् ॥ आपस्तंबश्रौतसूत्रे सप्तमप्रश्ने प्रथमखण्डिका-सूत्रं १५, १६, १७ ॥

*अनुमन्त्रणलक्षणमाह छन्दोगपरिशिष्टे कात्यायनः,
स्पृशन्ननामिकाग्रेण, क्वचिदालोकयन्नपि।
अनुमन्त्रणीयं सर्वत्र सर्वदेवानुमन्त्रयेत् ॥

---

1. ब्रा-३-१-१। 2. ऋग्वे-१०-४५-३।

अप्स्वन्तरिति । नृषु—प्राणिषु, मनो यस्य, रक्षिष्यामेतानिति, स नृमणाः - विष्णुः, विष्णुत्वेनच यूपः स्तूयते – [1]उरुविष्णो विक्रमस्वेत्यादिभि । तेन अयं मन्त्रार्थः, हेनृमण त्वामूर्ध्वंभरस ऊर्ध्वं धार्यमाणं, अहमप्यूर्ध्वंभरा दृशेयम् । त्वया विष्णवात्मना अहमप्यूर्ध्वं धार्यमाणः स्यामित्यर्थः । केचित्तु नृमण शब्दं [2]वक्र-वाची खलेयाल्या वर्तत इत्याहुः[3] । तदयुक्तं, तस्य समासत्वेन बह्वृचतैत्तरीयैरऽध्ययनादिति ॥ २ ॥

२२४. यत्र तिष्ठन्त उच्छ्रीयमाणं पश्येयुरिति शाण्डिल्यः ॥ ३ ॥

अन्तर्वेदिवा बहिर्वेदि वा यत्र तिष्ठन्तो यूपं द्रष्टुं शक्नुयुः तत्र स्थित्वाऽनुमन्त्रणमित्यर्थः ॥ ३ ॥

२२५ अन्तर्वेद्यवेति धानञ्जय्यः ॥ ४ ॥

स्पष्टमिति ॥ ४ ॥

तत्रहेतुमाह—

२२६ न बहिर्वेदि यजुरवकल्पत इति ॥ ५ ॥

न हि सति सम्भवे, बहिर्वेदि मन्त्रप्रयोगो युक्त इति ॥५ ॥

अथ सुत्येऽहनि प्रातरनुवाकात्पूर्वं विश्वरूपा गानं,

---

1 तै-स १-३ ४ १ ।

2 ब उपक्रमवाची ।

3 म्हरकल्पवृत्ती-२ ४ १ २ ।

अस्मद्ब्राह्मण*विहितम् । तत्करणे गु**णातिशयश्च श्रुतः । शाखान्तरे तु तद्गान निषिद्धम् । तत्र निषेधपक्षमुपपादयति–

२२७. विश्वरूपाणां गानं ज्योतिष्टोमे यजमानेनोक्तः प्रत्याचक्षीत चतुष्टोमस्तोमसंपदतिरेकात् ग्रहग्रस्ता भावाच्च ॥ ६ ॥

गुणातिशयलिप्सुना यजमानेन चोदितोप्युद्गाता विश्वरूपाणां गान प्रत्याचक्षीत–नैवकुर्यादित्यर्थ । कुत ? चतुष्टोमस्य अग्निष्टोमस्य, स्तोमाना त्रिवृत्पञ्चदशसप्तदशैकविंशाना या संख्यासपत्तिः ब्राह्मणेनोक्ता, '²तस्य नवतिशत स्तोत्रीयाः' इति, तदतिरेकप्रसगात् । विश्वरूपागाने हि तिस्रस्तोत्रीया अतिरिच्येरन् । स्तोमसपत्तिरपि गुणवत्तरैव श्रुता । किञ्च गानपक्षे ग्रहणस्त्राभ्यामवाप्य भवितव्यम् । ग्रह वा गृहीत्वा चमस

*अध्वर्यवित्याहोद्गाता मा स्म मेऽनिवेद्य होत्रे प्रातरनुवाकमुपाकरोरिति । सोऽध्वर्यु प्राह । सहूतो व्रजति स पूर्वया-द्वारा हविर्द्धाने प्रपद्यते ॥ स दक्षिणस्य हविर्द्धानस्योत्तरं चक्रमभ्यपश्रयमाण उदङ्डासीनो विश्वरूपा गायति ॥ षड्विंश ब्रा-१-४-१ to ४ ।

**क्षत्रं वै स्तोत्र विट् शस्त्र क्षत्रेणैवास्मै विशं अनुबोधं अनुवर्तमान करोति । अथो स्तुतशस्त्रयोरेव समारम्भाय अव्यवस्त्रसाय सतत्यै । इत्यादिना गुणातिशयः श्रुतः । (षड्विं-ब्रा-१-४-५)

1. षड्विं-ब्रा-१-४ 2. ता-ब्रा-१६-१-८ ।

वोन्नीयस्तोत्रमुपाकुर्यादिति [1]तैत्तरीयश्रुतेः; "[2]स्तुतमनुशंसति शान्त्या" इति च । न च तद्द्वयमप्यत्रास्ति; तस्मादप्यगानमिति ॥ ६ ॥

अथ गानमुपपादयन्नाह—

२२८. वसतीवर्योग्रहः प्रातरनुवाकश्शस्त्रमासां न च
संपस्फोपो यथान्यैः परिसामभिर्गायैवेति चेद्ब्रूयात् ॥ ७ ॥

वसतीवर्योग्रहः प्रातरनुवाकः शस्त्रं भविष्यति । न च ब्राह्मणोक्तसपद्विरोधः । विश्वरूपाभिः सोमात्मकस्य हविषस्तद्देवतानाञ्च स्तुत्यभावात् । यथा परिसामभिर्नसंपस्फोपस्तद्वत् । तस्मात् विश्वरूपा गायैवेति यजमानो यदि ब्रूयात् तदा गानं कार्यमिति । नात्र यजमाननियोगस्तन्त्रम्; किन्तु यथोक्तः ग्रहशस्त्रक्लृप्तिः । यदि रोचते, तदा गातव्यमित्येतावद्विवक्षितम् । तेन यजमानेनानुक्तोऽपि गायेदिति शास्त्रार्थः । केचित्त्वाहुर्नित्यमेव गानम् । (यजमान) नियोगः, प्रत्याख्यानं पुनर्नियोगश्चादृष्टार्थं कार्यमिति, तदयुक्तं; ग्रहशस्त्राभावादिति हेतुकथनवैयर्थ्यात्, "गायैवेति चेद्ब्रूया"दिति चेच्छब्देनानित्यतासूचनाच्च । जैमिनिरपि प्रत्याख्यानेनाकरणमेवाह, "तं यदि ब्रूयुर्विश्वरूपा गायेति[3] न करोमि एतत् त्रयोदशं स्तोत्रं विराजं सलोभयतीति ब्रूयात् ।" (सभावे तु कार्यं अन्यत्र नेति) ॥ ७ ॥

अथ गानपक्षे प्रकारं विधत्ते—

---

1. तै-सं ३-१-२-४ । 2. ता-ब्रा-४-९-१३ ।

3. ■ 'विश्वरूपागायेत्यकर्मंण एतत्त्रयोदशं' इति पाठभेदः ।

२२९. न मापनामन्त्र्य प्रातरनुवाकमुपाकुर्या इत्यध्वर्युं ब्रूयात् ॥ ८॥

स्पष्टम् ॥ ८ ॥

२३०. होतारं प्रातरनुवाकायोपविष्टं पूर्वेण गत्वा यजमानश्च पूर्वयाद्वारा प्रपद्यान्तरेणहविर्धाने पूर्वेणचक्रे उदङ्मुखः उपविशेत्तूष्णीम् ॥ ९ ॥

पूर्वया द्वाराहविर्धानं प्रपद्य पूर्वमेवोपविष्ट होतारमग्रतो गत्वा शकटयोर्मध्ये चक्रयोः पुरस्तादुदङ्मुख उपविशेत् । तूष्णीमिति वचनं स्तोत्रधर्मस्य मन्त्रवदुप्रवेशनस्य निवृत्त्यर्थमिति ॥ ९॥

२३१. पुरस्ताद्यजमानः प्रत्यङ्मुखः ॥ १० ॥

यजमानस्यापि सह प्रपदनं पूर्वमुक्त, स पुरस्तादुद्गातुरुपविशेदिति ॥ १० ॥

२३२. [1] यु*ञ्जे वाचं शतपदीं गाये सहस्रवर्तनि गायत्रं त्रैष्टुभं जगद्विश्वारूपाणि संभृता देवाओकांसि चक्रिर इत्येतस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानञ्जय्यः, स्वाध्यायवत्स्वरेण ॥ ११ ॥

पङ्क्ताविति वचनं पञ्चस्वपि पादेषु व्याप्यगानार्थं । [2]अनिरुक्त गेयमिति सामान्यश्रुते , अत्रापवादाभावादनिरुक्तमेव गेयम् । स्वाध्यायवत्स्वरेणेति मध्यमयावाचेत्यर्थ. ॥ ११ ॥

---

*युञ्जेवाच शतपदी इत्याह । वाग्वाव शतपदी ऋक् शतपदी शतसनिमेव तदात्मानं च यजमानं च करोति ॥ इत्यादि· प्रशस्ता, षड्विंश ब्राह्मण अध्या-१-पाद-४-म्रा-१० ।

1. षड्विंशब्रा-१-४ १०-१५ । 2. ता-ब्रा ७-१-४-८ ।

२३३. मनसैव यजमान उपस्वरेत् ॥ १२ ॥

उद्गातुर्गानकाले यजमानो मनसैव गायत्रमुपस्वरेत्-गायेदित्यर्थः। तदप्यनिरुक्तमेव। *केचिदार्चिकमित्याहुरिति॥१२॥

२३४. त्रिषु त्रिषु पदेषु गायेदिति गौतमः ॥ १३ ॥

युञ्जेवाचमित्यस्या ऋचः त्रिषु त्रिषु पादेषु गायत्रंगायेत्। न पश्चसु पादेष्विति गौतम इति ॥ १३ ॥

कथमित्याह—

२३५. पूर्वं पूर्वमतिसृजन् गायत्रीकारम् ॥ १४ ॥

प्रथममाद्येषु त्रिषु पादेषु गीत्वा, पश्चात्प्रथमं पाद-मुत्सृज्य द्वितीयमुपक्रम्य पादत्रयमनभ्यासेन [1]गायत्रं कृत्वा गायेत्। पुनर्द्वितीयं पादमुत्सृज्य तृतीयमुपक्रम्य तथैव गान मिति ॥ १४ ॥

२३६. प्रगाथकारं वा ॥ १५ ॥

प्रगाथं वा कृत्वा गायेत्। तत् कथम्? प्रथमं पादत्रये गीत्वा, पश्चात्तृतीयं ादं द्विरभ्यस्य, चतुर्थेन पादेन सह गायत्रं कृत्वा गायेत्। एवं चतुर्थपादं द्विरभ्यस्य पश्चमेन सह गायत्रं

. *केचित्-रुद्रस्कन्दः। यजमानस्य आर्चिक गानमेव इति आपडपिस्तं प्रयोगे॥ यजमानः मनसैव तत्सवितुर्वरेण्योमितिवत् आर्चिकं गायेत् इति कल्पभाष्ये च॥

1. ड. गायत्री कृत्वा।

कृत्वा गायेत्। कुत एतत्—पूर्वस्तोत्रीयान्त्यस्य पादस्य पुनरभ्यासः प्रगाथ इत्युच्यते। अत्र त्रिषु त्रिषु पदेषु गायेदिति वचनात्तस्यैव द्विरभ्यासः कार्य इति ॥ १५ ॥

२३७. गीत्वा यथार्थं स्यात् ॥ १६ ॥

स्पष्टमिति ॥ १६ ॥

२३८. विश्वरूपाश्चेद्गायेज्ज्योतींष्यपि गायेत् ॥ १७ ॥

युञ्जेवाचमिति तिसृणां स्तोत्रीयाणां विश्वरूपा इत्यभिधानम्। विश्वारूपाणि संभृतेत्यक्षरान्वयात्। चेच्छब्दः तासामनित्यतां सूचयतीति ॥ १७ ॥

अथ ज्योतिषां गानकालमाह—

२३९. परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं, पुरा तस्माद्धोतारमारमयित्वा ॥ १८ ॥

प्रातरनुवाके होत्रा समापिते सति, पश्चात्तेनैवानुवक्तव्यमपोनप्त्रीयं नाम सूक्तमस्ति। तदनुवचनात् पूर्वं होतारमारमस्वेत्युक्त्वा ज्योतींषि गायेदिति ॥ १८ ॥

२४०. आग्रयणस्य वाऽनुहिंकारं पवित्रं धारयन् ॥ १९ ॥

अथवा आग्रयणं गृह्णतोऽध्वर्योः [1]हिंकारकालः। तद्वेलायां दशापवित्रं धारयन् ज्योतींषि गायेदिति ॥ १९ ॥

२४१. आस्तात्रे वा प्राप्य पुरा स्तोमयोगात् ॥ २० ॥

---

1. हिंकारमनु।

यद्यन्यतो गृह स्यात्तदा देवयजनस्य उत्तरपार्श्वेन गच्छेत् ।
उभयथाऽप्या*प्नाने[1]नैव[A] देवयजनस्य प्रवेश इति ॥ २ ॥

२०३. पूर्वा सदसोद्वार्योश्वश्रावन्तरेण प्रपद्याग्रेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन् अध्वर्युणा सहोच्छ्रयेद्दक्षिणोत्तरोत्तानाभ्यां पाणिभ्यां द्युता[2]नस्त्वेति ॥ ३ ॥

सदस पूर्वद्वारे स्थूणानिखननार्थमवटद्वयमस्ति, तौश्वभ्रौ अन्तरेण प्रविश्य प्रागग्रामौदुम्बरीमध्वर्युणा पूर्वमेव निहितामग्रेण गत्वोदङ्मुखस्तिष्ठन् अध्वर्युणा सहोच्छ्रयेत । [3]दक्षिणोत्तरोत्तानाभ्यां पाणिभ्यां द्युतानस्त्वेति ब्राह्मणपठितेन मन्त्रेण, पृथिवीमित्यन्तेनेति ॥ ३ ॥

२०४ आयोरिति श्वभ्रेऽवदध्यात् ॥ ४ ॥

आयोष्ट्वेत्यादिना हृदय इत्यन्तेन ब्राह्मण पठितेन मन्त्रेण श्वभ्रेऽवदध्यात् । अत्र ब्राह्मण, "[4]तामन्वारभत आयो"ष्ट्वेति । तस्यायमर्थ अन्वारभ्य सादयेदिति । कुत ? सादयामीति मन्त्रलिङ्गात्सूत्रानुरोधाच्चेति ॥ ४ ॥

२०५. अवधाय जपेन्नमः समुद्राय नम [5]समुद्रस्यचक्षसे मामा पृनर्वाहासीर्दर्गस्पृजोदा ऊर्जे मेदेह्यूर्जं मे धेह्यन्नमेदेह्यन्नं मे धेहीति ॥ ५ ॥

* चात्वालोत्करयोर्यन्मध्य तदाप्नानसज्ञक सञ्चरमार्ग. ।

1 ब आम्नातेन । 2 ता ब्रा ६ ४ २ । 3 ब दक्षिणोत्तराभ्यामुत्तानाभ्या । 4 ता ब्रा ६ ४ ३ । 5 ता ब्रा ६ ४ ७-८ ११ ।

A आप्नानेनव तीर्थ नवेति क ख पाठ

ननु ब्राह्मण पठितएव मन्त्र किमर्थं पठ्यते? उच्यते, ब्राह्मणे मन्त्रैकदेशाना पृथक् पृथग्विनियोग प्रतिभाति। तन्निवृत्यर्थं कात्स्न्येंन [1]पठित्वा जपे विनियुक्त इति ॥ ५ ॥

२०६. तामविसृजेदाऽऽच्छादनात् ॥ ६ ॥

तामोदुम्बरी न विसृजेत्, छदिरध्यू[2]हनात्पूर्वमिति ॥ ६ ॥

२०७ अध्वर्युणाऽभिहुतायां जुहुयात्तस्यैवाऽऽवृताऽन्तरेण विशाखे ॥ ७ ॥

अध्वर्युणाऽभिहुतायामौदुम्बर्या–होमे कृते इत्यर्थः। तस्यैवाध्वर्यो आवृता-प्रकारेण हिरण्यनिधानादिना, औदुम्बर्याविशाखयोर्मध्ये स्रुवेण जुहुयादिति ॥ ७ ॥

२०८. घृतेन द्यावापृथिवी आप्रीणाथां स्वाहेति पूर्वां, प्रजापतयेस्वाहेत्युत्तराम् ॥ ८ ॥

आहुतिमितिशेष. ॥ ८ ॥

२०९. अन्यतरां वा स्वाहाकारद्वितीयाम् ॥ ९ ॥

पूर्वयोर्मन्त्रयोरन्यतरेणैकामाहुतिं, केवलस्वाहाकारेण द्वितीयामाहुतिमिति पक्षान्तरमिति ॥ ९ ॥

२१०. यथा भूमिमाज्यं प्राप्स्यतीति ॥ १० ॥

उभयोरपि पक्षयो, यथाभूमिं औदुम्बरीमूलमाज्य

1 ङ पठित्वाज्जपे विनियुङ्क्ते। 2, ब्रा २-३-१७।

प्राप्स्यति, तथा प्रभूनमन्त्रान्वयेत् । इतीति—अनेन प्रकारेणे-त्यर्थः ॥ १० ॥

२११. *आज्यं होमचोदना**स्वनादेशे ॥ ११ ॥

स्पष्टमिति ॥ ११ ॥

२१२. अधस्ताद्विशाखस्य परिगृह्यजपेत् दिवि
देवां दृँह मयि प्रजामिति ॥ १२ ॥

स्पष्टमिति ॥ १२ ॥

२१३. अन्तरिक्षे वयाँसि दृंह मयि पशूनिति मध्ये ॥ १३ ॥

औदुम्बरीमध्यं परिगृह्येत्यर्थः ॥ १३ ॥

२१४. पृथिव्यामथ्यौषधीर्दृँह मयिसजातानिति मूले ॥ १४ ॥

मूल परिगृह्येत्यर्थः ॥ १४ ॥

२१५. ऊर्ध्वं होमाद्यजमानं धानञ्जय्यः ॥ १५ ॥

होमादूर्ध्वं यत्कर्म मन्त्रजपात्मक, तद्यजमानेनैव कर्तव्यं, मयि प्रजा पशून् सजातान् दृँहेति प्रत्यगाशीष्ट्वादिति ॥ १५ ॥

२१६. स्वयमिति गौतमशाण्डिल्यौ यां वै काञ्चिदृत्विगाशिष-
माशास्ते यजमानस्यैव [1]सेति ॥ १६ ॥

---

* इद सूत्रं लाट्यायने नास्ति ।

** "आज्य जुहुयात् हविषोऽनादेशे" । खा-गृ-सू-पट-२-ख-२-सू-१५ ।

1. ङ यजमानस्य सर्वेति ।

स्वयमेवोद्गाता मन्त्रजपं कार्यइतिमतान्तरम् । ऋत्विग्भिः कृतमपि फलाशासनं यजमानगतमेवाशास्यते, न स्वार्थमिति हेतोरिति ॥ १६ ॥

२१७. अपच्छाद्यमानायां दिव्यच्छन्नासि सन्तनिनाम विश्वजनस्य छाया, नमस्तेऽस्तु मा माहिंसीरिति ॥ १७ ॥

अध्वर्युणाऽवच्छाद्यमानायामौदुम्बर्यां जपेदिति ॥ १७ ॥

२१८. दक्षिणेन श्वभ्रान् गत्वाऽपरौद्वार्यावन्तरेण प्रपद्यैतत्कुर्या-दिति शाण्डिल्यः ॥ १८ ॥

सदसि यावन्तः श्वभ्राः, स्थूणानिखननार्थाः, तान् सर्वान् दक्षिणेन गत्वा, अपरौद्वार्यौ-श्वभ्रावन्तरेण प्रपद्य, एतत्-उच्छ्रयणादिकं कुर्यादिति शाण्डिल्य इति ॥ १८ ॥

२१९. उत्तरेणेति धानञ्जय्यः ॥ १९ ॥

तानेवश्वभ्रानुत्तरेणेत्यर्थः ॥ १९ ॥

२२०. गौतमीयमितरत् ॥ २० ॥

इतरमत गौतमीय, यत् [1]पूर्वमुक्तम् पूर्वेणसदसोद्वार्या-वित्यादि ॥ २० ॥

२२१ यथेतंनिष्क्रामेत् ॥ २१ ॥

[2]सर्वथा येनप्रकारेण सदसि प्रविष्टः तेनैव प्रकारेण निष्क्रामेदिति ॥ २१ ॥

इति द्वितीयपटले तृतीयः खण्ड. -



1. द्रा २-३-२ । 2. ड यथा ।

अथ चतुर्थ. खण्ड.

७२२. *यूपमुच्छ्रीयमाणमनुमन्त्रयेरन्[1]नृमणऊर्ध्वमर सन्त्वेति ॥ १ ॥

यूपोच्छ्रयणकाले, अध्वर्युणा यूपमुच्छ्रीयमाणं उद्गाता-

---

*यूपलक्षणं षड्विंशे—१. यूपं करोति सक्षीरं स्थूलं मूले बालाग्रं अनुरूपम् । २. वज्रोवैयूपः वज्रेणैवास्मै भ्रातृव्यं प्रहरति । ३. अष्टाश्रीः करोति । ४. वश दिशः परिगृह्णाति । ५. पञ्चदश सप्तदश एकविंशत्यरत्निं वा । ६. पालाशं पुष्टिकामस्य, बैल्वं ब्रह्मवर्चस कामस्य, औदुम्बरं अन्नाद्यकामस्य, खादिरं बलकामस्य वैभीतकराजवृक्षौ भ्रातृव्यवतः, कमुकाभवरय पापणाः यशस्कामस्य, यत्विःश्च यज्ञियं पशुकामस्य । ७. तत्रवर्जनीयाभवन्ति गड्डुलो ग्रन्थिलो व्यावृत्तः, कुटिः कुब्जः शूलः दग्धः शुष्क. सुषिरः घुणजग्धः ह्रस्वप्रशस्ताः । ८. अथ प्रशस्ताः शुद्धावर्ताः अनुपूर्वसमाः प्रशस्ताः । ९. यूपस्याधिदैवतानि अग्निः पूर्वायां यमो दक्षिणायां वरुणः पश्चिमायां सोम उत्तरायां यावदिशः तासु आदित्यरुद्रमरुद्वसवः, अपराजिताः पितरश्चाधरायां साध्याश्चोर्ध्वायाम् १०. सर्वदेवत्यो वै यूपः यूपो वैबहुरूपः वज्रीभूत्वा देवानुपतिष्ठते इत्यादि षड्वि–अ-५-ख-४-सू १ to १० ।

यूप्या वृक्षाः पलाशखदिरबिल्वरोहीतकाः ॥ पालशं तेजस्कामोयज्ञकामो वा । खादिरं, स्वर्गकामो वीर्यकामो वा ।

---

1. ला-श्रा-१-१-६ ।

रोऽनुमन्त्रये*रन्, 'यु[1]गपत्कर्मसु सर्वेष्विति' वक्ष्यमाण सूत्रात् त्रय एवोद्गातारः। चत्वारोऽपीति केचित्, अस्मिन् स्थाने युगपत्कर्मस्विति सूत्राकरणात्। नृमणऊर्ध्वभरसन्त्वेति पदत्रयोपादानं उत्तरसूत्रे तत्परामर्शनार्थमिति ॥ १ ॥

२२३. एतान्येवोहस्थानानि यावन्तः स्युः ॥ २ ॥

एतान्येव त्रीणिपदानि कदाचिदूहस्थानानि भवन्ति। यत्र यावन्तो यूपास्स्युः, तत्र तावत्सु यूपेषु, तद्यथा यूपैकादशिन्यां नृमणस, ऊर्ध्वभरसः, वः इति। तत्र कालभेदेन यूपानामुच्छ्रयणात् प्रकृतिवदविकारेण प्रयोगे प्राप्ते, वचनमेतत् प्रथमयूपोच्छ्रयणकाल एव उत्तरानप्यभिप्रेत्य सन्नोह कार्य इति। नृमण इति समासोमं सकारान्तं सवुध्यन्त। यथा [2]समुद्रे त्वा नृमणा

---

बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा। रौहीतक प्रजाकामश्च-क्षुष्कामो वा ॥ समेजातमशाखाज बहुपर्णशाख अप्रतिशुष्काग्र असुषिरमव्यावृत्तं अघूर्णमृजुमूर्ध्वशकलमग्रईषदुपावनत प्रागुदक् प्रत्यग्वोपनतम् ॥ आपस्तवश्रौतसूत्रे सप्तमप्रश्ने प्रथमखण्डिकासूत्र १५, १६, १७ ॥

*अनुमन्त्रणलक्षणमाह छन्दोगपरिशिष्टे कात्यायन,
स्पृशन्ननामिकाग्रेण, क्वचिदालोकयन्नपि।
अनुमन्त्रणीय सर्वत्र सर्वदेवानुमन्त्रयेत् ॥

---

1. द्रा ३-१ १। 2 ऋक्वे-१०-४५-३।

अप्स्वन्तरिति । नृषु—प्राणिषु, मनो यस्य, रक्षिष्यामेतानिति, स नृमणाः - विष्णुः, विष्णुत्वेनच यूपः स्तूयते — [1]उरुविष्णो विक्रमस्वेत्यादिभिः । तेन अय मन्त्रार्थः, हेनृमण त्वामूर्ध्वंभरस ऊर्ध्वं धार्यमाण, अहमप्यूर्ध्वंभरा दृशेयम् । त्वया विष्ण्वात्मना अहमप्यूर्ध्वं धार्यमाण स्यामित्यर्थः । केचित्तु नृमण शब्द [2]क्रम-वाची खलेवाल्या वर्तत इत्याहु[3] । तदयुक्त, तस्य समासत्वेन बह्वृचतैत्तरीयैरऽध्ययनादिति ॥ २ ॥

२२४. यत्र तिष्ठन्त उच्छीयमाणं पश्येयुरिति शाण्डिल्यः ॥ ३ ॥

अन्तर्वेदिवा बहिर्वेदि वा यत्र तिष्ठन्तो यूप द्रष्टु शक्नुयु तत्र स्थित्वाऽनुमन्त्रणमित्यर्थ ॥ ३ ॥

२२५ अन्तर्वेद्येवेति धानञ्जय्यः ॥ ४ ॥

स्पष्टमिति ॥ ४ ॥

तत्रहेतुमाह—

२२६ न बहिर्वेदि यजुरवकल्पत इति ॥ ५ ॥

न हि सति सम्भवे, बहिर्वेदि मन्त्रप्रयोगो युक्त इति ॥५ ॥

अथ सुत्येऽहनि प्रातरनुवाकात्पूर्वं विश्वरूपा गान,

---

1 तै-स १ ३ ४-१ ।

2 क उपक्रमवाची ।

3 रुद्रस्कन्दवृत्तौ–२ ४ १ २ ।

अस्मद्ब्रा[1]ह्मण*विहितम् । तत्करणे गु**णातिशयश्च श्रुत । शाखान्तरे तु तद्गान निषिद्धम् । तत्र निषेधपक्षमुपपादयति–

२२७ विश्वरूपाणां गानं ज्योतिष्टोमे यजमानेनोक्तः प्रत्याचक्षीत चतुष्टोमस्तोमसंपदतिरेकात् ग्रहशस्त्राभावाच्च ॥ ६ ॥

गुणातिशयलिप्सुना यजमानेन चोदितोप्युद्गाता विश्वरूपाणा गान प्रत्याचक्षीत–नैवकुर्यादित्यर्थ । कुत ? चतुष्टोमस्य अग्निष्टोमस्य, स्तोमाना त्रिवृत्पञ्चदशसप्तदशैकविंशाना या सख्यासपत्ति ब्राह्मणेनोक्ता, '[2]तस्य नवतिशत स्तोत्रीया' इति, तदतिरेकप्रसगात् । विश्वरूपागाने हि तिस्रस्तोत्रीया अतिरिच्येरन् । स्तोमसपत्तिरपि गुणवत्तरैव श्रुता । किञ्च गानपक्षे ग्रहशस्त्राभ्यामवश्य भवितव्यम् । ग्रह वा गृहीत्वा चमस

*अध्वर्यवित्याहोद्गाता मा स्म मेऽनिवेद्य होत्रे प्रातरनुवाकमुपाकरोरिति । सोऽध्वर्यु प्राह । सहूतो प्रजति स पूर्वया द्वारा हविर्धाने प्रपद्यते ॥ स दक्षिणस्य हविर्धानस्योत्तर चक्रमभ्यपश्रयमाण उदङ्ङासीनो विश्वरूपा गायति ॥ षड्विंश ब्रा-१-४-१ to ४ ।

**क्षत्र वै स्तोत्र विट् शस्त्र क्षत्रेणैवास्मै विश अनुवीर्य अनुवर्तमान करोति । अथो स्तुतशस्त्रयोरेव समारम्भाय अव्यवस्रसाय सतत्यै । इत्यादिना गुणातिशय श्रुत । (षड्विं ब्रा-१-४ ५)

1 षड्विं-ब्रा १ ४ 2 ता-ब्रा १६ १ ८ ।

२३३. मनसैव यजमान उपस्वरेत् ॥ १२ ॥

उद्गातुर्गानकाले यजमानो मनसैव गायत्रमुपस्वरेत् गायेदित्यर्थः। तदप्यनिरुक्तमेव। *केचिदार्चिकमित्याहुरिति॥१२॥

२३४. त्रिषु त्रिषु पदेषु गायेदिति गौतमः ॥ १३ ॥

हुङ्जेवाचमित्यस्या ऋचः त्रिषु त्रिषु पादेषु गायत्रंगायेत्। न पञ्चसु पादेष्विति गौतम इति ॥ १३ ॥

कथमित्याह—

२३५. पूर्वं पूर्वमतिसृजन् गायत्रीकारम् ॥ १४ ॥

प्रथममाद्येषु त्रिषु पादेषु गीत्वा, पश्चात्प्रथमं पादमुत्सृज्य द्वितीयमुपक्रम्य पादत्रयमनभ्यासेन [1]गायत्रं कृत्वा गायेत्। पुनर्द्वितीयं पादमुत्सृज्य तृतीयमुपक्रम्य तथैव गानमिति ॥ १४ ॥

२३६. प्रगाथकारं वा ॥ १५ ॥

प्रगाथं वा कृत्वा गायेत्। तत् कथम्? प्रथमं पादत्रये गीत्वा, पश्चात्तृतीयं पादं द्विरभ्यस्य, चतुर्थेन पादेन सह गायत्रं कृत्वा गायेत्। एवं चतुर्थपादं द्विरभ्यस्य पञ्चमेन सह गायत्रं

*केचित्-रुद्रस्कन्दः। यजमानस्य आर्चिकं गानमेव इति आण्डपिल्लै प्रयोगे॥ यजमान- मनसैव तत्सवितुर्वरेण्योमित्रिवत् आर्चिकं गायेत् इति कल्पभाष्ये च॥

1. इ. गायत्री कृत्वा।

कृत्वा गायेत्। कुत एतत्-पूर्वस्तोत्रीयान्त्यस्य पादस्य पुनरभ्यासः प्रगाथ इत्युच्यते। अत्र त्रिषु त्रिषु पदेषु गायेदिति वचनात्तस्यैव द्विरभ्यासः कार्य इति ॥ १५ ॥

२३७. गीत्वा यथार्थं स्यात् ॥ १६ ॥

स्पष्टमिति ॥ १६ ॥

२३८. विश्वरूपाश्वेद्गायेज्ज्योतींष्यपि गायेत् ॥ १७ ॥

युञ्जेवाचमिति तिसृणां स्तोत्रीमाणां विश्वरूपा इत्यभिधानम्। विश्वारूपाणि संभृतेत्यक्षरान्वयात्। चेच्छब्दः तासामनित्यतां सूचयतीति ॥ १७ ॥

अथ ज्योतिषां गानकालमाह—

२३९. परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं, पुरा तस्माद्धोतारमारमयित्वा ॥ १८ ॥

प्रातरनुवाके होत्रा समापिते सति, पश्चात्तेनैवानुवक्तव्यमपोनप्त्रीयं नाम सूक्तमस्ति। तदनुवचनात् पूर्वं होतारमारमस्वेत्युक्त्वा ज्योतींषि गायेदिति ॥ १८ ॥

२४०. आग्रयणस्य वाऽनुहिंकारं पवित्रे धारयन् ॥ १९ ॥

अथवा आग्रयणं गृह्णतोऽध्वर्योः [1]हिंकारकालः। तद्वेलायां दशापवित्रं धारयन् ज्योतींषि गायेदिति ॥ १९ ॥

२४१. आस्तावं वा प्राप्य पुरा स्तोमयोगात् ॥ २० ॥

1. हिंकारमनु।

अथवा बहिष्पवमानस्तुतिदेशंप्राप्य तस्य स्तोमयोगात् पूर्वं गायेदिति ॥ २० ॥

अथ गानप्रकारमाह—

२४२. अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रोज्योतिर्ज्योतिरिन्द्रः सूर्योज्योतिर्ज्योतिस्सूर्य इत्येतेषु पदेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायन्नं गायेत् ॥ २१ ॥

अग्निर्ज्योतिरित्येतान् त्रीन् पादान् प्रत्येकं त्रिरभ्यस्य प्रथमे पादे त्रिरभ्यस्ते मनसा गायन्तं निरुक्तं गायेत् । एवमुत्तरयोरपीति ॥ २१ ॥

२४३. तानि नान्यत्र विश्वरूपाभ्यः ॥ २२ ॥

तानि ज्योतींषि, नान्यत्र विश्वरूपाभ्य प्रयोक्तव्यानि । विस्पष्टार्थमिद वचन, विश्वरूपास्वेद्गायेदित्यनेनैव विश्वरूपागानस्य ज्योतिर्गाने निमित्तत्वावगमादिति ॥ २२ ॥

२४४. *न चान्यत्र विश्वरूपा ज्योतिष्टोमात् ॥ २३ ॥

विश्वरूपा अपि ज्योतिष्टोमात्-प्रकृतिभूतादग्निष्टोमसंस्थादन्यत्र न भवेयुः । विकृतिष्वतिदेशप्राप्तस्य विश्वारूपागानस्य प्रतिषेधोऽयमिति ॥ २३ ॥

---

*विश्वरूपाज्योतिष्टोमात् ज्योतिष्टोमात्' इति लाट्यापने, पटलसमाप्ति ॥

२४५. सहचराणिह्येतानि विश्वरूपाश्चज्योतींषि च ज्योतींषि च* ॥ २४ ॥

विश्वरूपाश्चज्योतींषिचेत्येतानि सहचराण्येव । तस्माद्विश्वरूपानिवृत्तौ ज्योतिषां निवृत्तिरिति, पूर्वोक्तस्य हेतुकथनमेतदिति ॥ २४ ॥

** इति छन्दोगसूत्रस्य दीपेऽस्मिन् धन्विना कृते ।
द्वितीयःपटलो वृत्तः प्रीयतां देवकीसुत ॥

इति द्वितीयपटले चतुर्थः खण्डः.
द्वितीयपटलः समाप्तः.

— * —

॥ अथ तृतीयः पटलः ॥

२४६. युगपत्कर्मसु सर्वेपृद्गातुर्दक्षिणमनुबाहु प्रस्तोता, सव्यं प्रतिहर्ता ॥ १ ॥

---

*सुत्येऽहनि महारात्रे बुध्वा प्रस्तोता आग्नीध्रमण्डपे आसीनः यज्ञसारथिसामत्रिर्गायेत् । अथ यजमानः शालामुखीयस्य पश्चात् लोकद्वारमिति प्रथमसामत्रिर्गायेत् । नमोऽग्नय इति होमः अपजहिपरिघं इत्युत्तिष्ठेत् । अथ अध्वर्युः होतरेहीत्याह । तदा विश्वरूपागानमितिक्रमः काण्डपिल्ले प्रयोगे ॥

** इ पा. द्राह्यायण कृतेसूत्रे यथामति यथागमं ।
द्वितीयपटलव्याख्यात् धन्वीकाश्यपनन्दनः ॥

1. द्रा-२ ४ १७ ।

युगपत्क[1]र्तव्यतया चोदितेषु बहुकर्तृकेषु कर्मसु, [2]कियन्तस्ते कर्तारः, कथं वाऽनुष्ठानमित्यपेक्षायामिदमुच्यते । उद्गातुर्दक्षिणं बाहुमनु-दक्षिणपार्श्वे प्रस्तोता स्यात्; सव्यं बाहुमनु प्रतिहर्ता स्यात् । कर्तारोप्येत एव, नान्य इत्यनेनैव सूत्रेणोक्तम् । अन्यस्यानुपादानादिति ॥ १ ॥

२४७. होता प्रातरनुवाकमनुब्रूयाभ्[3]द्भुपाः इति यदा ब्रूयात्
अथवेदिमाक्रमेयुः[4]मृदाशिथिरेति ॥ २ ॥

मामाहिंसीरिति मन्त्रान्त ॥ २ ॥

२४८. बहिर्वेद्येतज्जपित्वा मामा हिंसीरित्येतावतैवेति
धानजय्यः ॥ ३ ॥

मृदाशिथिरेत्यादि, वेदिरसीत्यन्तं बहिर्वेदिजपित्वा, मा मा हिंसीरित्येतावन्मात्रेणैव वेद्याक्रमणमिति ॥ ३ ॥

२४९. सवनमुखेषु *च यजुषा ॥ ४ ॥

[5]जातौ बहुवचनम् । उत्तरयोरपि सवनयोर्मुखे, मृदाशिथिरेति मन्त्रेणैव वेद्याक्रमणमिति । तत्राप्यभिपवादिमाध्यन्दिन सवनम् । आदित्यारम्भण तृतीयसवनमिति ॥ ४ ॥

२५०. अहरहरिति गौतमः ॥ ५ ॥

अहर्गणेषु प्रत्यहं सवनत्रयेपि मन्त्रेणैवाक्रमणमिति गौतमः ५॥

*च शब्द. धानञ्जय्यमतानुकर्षणार्थं ।

1 इ कर्मकर्तव्यतया । 2 कियन्तस्तोमकर्तारः । 3 ऋग् वे ५ ७५-१ ऐ-ब्रा-२-१८-१०-१२ । कौ-ब्रा-११-६ । 4. ता-ब्रा-१-१-७ । 5 पाणि-सू-१-२-५८ ।

२५१. **सकृदक्रान्तावितिशाण्डिल्यः ॥ ६ ॥**

एकस्मिन् ऋतौआदानेव सकृन्मन्त्रेणाक्रमणम् । न सवनत्रये । नाप्यहरहरिति शाण्डिल्यः ॥ ६ ॥

२५२. **यावद्वाऽऽक्रामेयुरित्येके ॥ ७ ॥**

यावद्वेति विधार्थे धाप्रत्ययः, यावत्कृत्वः वेदिमाक्रामेयुः, तत्र सर्वत्र मन्त्रेणैवाऽऽक्रमणमित्येके । तेन अतिरात्रे प्रतिपर्यायं निष्क्रान्तानां मन्त्रेणैव पुनः प्रवेश इति ॥ ७ ॥

२५३. **हविर्द्धाने प्रवेक्ष्यमाणाः वसतीवरीरनु प्रविशेयुः ॥ ८ ॥**

अपरया द्वारा वसतीवरी प्रवेशयन्ति, तस्मिन् काले पूर्वया द्वारा प्रविशेयुः इति ॥ ८ ॥

कथमित्याह—

२५४. **तस्य रराटयामालभ्य 'विष्णोः[1] शिर' इति ॥ ९ ॥**

रराटीनाम हविर्द्धानस्य पूर्वद्वारोपरिस्थिता काष्ठमयी यष्टिरिति सत्याषाढः, तस्यां विष्णोःशिर इति मन्त्रेणालभ्य प्रविशेयुः ॥ ९ ॥

२५५. **[2]इष ऊर्ज इति प्रविशन्तोऽन्तरेणेषे* बाहून्वहृत्य
पार्ष्णीरनुयच्छन्तो [3]युनज्मीति राजानमभिसृशेयुः,
या प्रातः सवनाय ॥ १० ॥**

---

* लाट्यायने इषऊर्ज इत्यारभ्य 'अन्तरेणेषे' इत्येतदन्तं एक सूत्रं बाहून्वहृत्येत्याद्यन्यत् ॥

1. ता-ब्रा-१-२-८ । 2. ता-ब्रा-१-१-९ । 3. ता-ब्रा-१-२-१ ।

इष ऊर्ज इति मन्त्रेण प्रविशन्त ईषयोरन्तरा बाहूनध प्रसार्य प्रात सवनाय विभक्त सोममभिमृशेयु । अभिमर्शनाशक्तौ पदाग्रेणस्थित्वा पादस्य पृष्ठभागोद्यमन स्यात्, तन्निवृत्यर्थं पार्ष्णीरनुद्यच्छन्त इत्युक्तम् ॥ १० ॥

२५६. अविभक्तश्चेत्सर्वम् ॥ ११ ॥

यद्यविभक्त सोमः स्यात्, तदा सर्वमेव सोममभिमृशेयु ॥ ११ ॥

२५७ नचेत्प्राप्नुयुर्देशेनैव ॥ १२ ॥

यदि हस्तेन सोम न प्राप्नुयु —न शक्नुयु, तदा तद्देश एव हस्त प्रसार्य मन्त्र जपेयुः ॥ १२ ॥

२५८ प्रस्तोऽता प्रथमोऽभिसर्पेत् ॥ १३ ॥

[1]तत सोममभिमृश्य, हविर्द्धानयोर्मध्यत प्रस्तोता प्रत्यङ्मुख प्रथम गच्छेत् ॥ १३ ॥

२५९ तत उद्गाता ततः प्रतिहर्ता ॥ १४ ॥

स्पष्टमिति ॥ १४ ॥

२६०. दक्षिणस्य हविर्द्धानस्य पश्चात्सव्यावृता उपविशेयुः "ऋ[2]तस्य सदन" इति ॥ १५ ॥

एव गत्वा सव्यपार्श्वेन आवर्तमाना दक्षिणहविर्द्धानस्य पश्चादुपविशेयु । अत्र जैमिनि —"अन्तरेणहविर्द्धाने गत्वा, दक्षिणस्य हविर्द्धानस्य [3]पश्चादक्षमुपविश"न्तीति ॥ १५ ॥

---

1 क अथ। 2 ता बा १-२२ । 3. क. पश्चादमदक्षिणमुपविशन्ति अयमेवशुद्ध इति प्रतिभाति ।

उपवेशानन्तरं बहिष्पवमानार्थमृग्जपं विधास्यन् तत्प्रसंगात् सर्वस्तोत्रसाधारणमाह—

२६१. पुरस्ताच्चोपरिष्टाच्च ऋचः सर्वत्र जपेयुः यासुकरिष्यन्तः स्युः ॥ १६ ॥

सर्वेष्वपि स्तोत्रेषु यास्वृक्षु स्तुतिं करिष्यन्तः स्युः, ताः स्तोत्रस्य पुरस्तादुपरिष्टाच्च सर्वत्र जपेयुः ॥ १६ ॥

२६२. अत्र तु बहिष्पवमानस्य ॥ १७ ॥

अत्र अस्मिन्काले, उपवेशनानन्तरं बहिष्पवमानर्चो जपेयुः। [1]सर्वत्र स्तोमयोगात्पूर्वमेव पूर्वजपः, बहिष्पवमानेदर्शनात्। यजमानोपहवानन्तरं उपरिष्टाज्जप इति मन्तव्य। बहिष्पवमाने तथैव दृष्टत्वात् १७ ॥

२६३. अभिषुते राजनि [2]ऋतपात्रमसीति द्रोणकलशमालभ्य[3]यानस्पत्य इति प्रोहेयुः ॥ १८ ॥

सोमाभिषवे कृते द्रोणकलशमक्षस्य पश्चादवस्थितं अक्षस्याधस्तात्प्राञ्च प्रोहेयुः। [4]"अधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति, [5]प्राञ्चं प्रोहन्तीतिश्रुतेः ॥ १८ ॥

२६४. दक्षिणे पाणावुद्गाता दशापवित्रं कुर्वीत ॥ १९ ॥

पूर्वमेव द्रोणकलशेऽध्वर्युणान्यस्तं दशापवित्रं, तदिदानीं दक्षिणेहस्ते गृहीत्वा प्रोहेत्। शुक्लाभिरूर्णास्तुकाभिर्निर्मित

1. ड पाठे बहिष्पवमानादन्येषु स्तोत्रेषु यद्यपि पुरस्तादुपरिष्टादित्यविशेषचोदनादव्यवधानेन गानानन्तरं जपः प्राप्तः तथापि इत्यधिकः।

2. ता ब्रा-१-२-३। 3 ता ब्रा-१-२-४। 4. ता ब्रा-६-५-१४ 5. ता-ब्रा-६-५-२०।

दशायुक्त वास दशापवित्रम् "[1]स्वर्भानुर्वा आसुर इत्यारभ्य" "तस्माच्छुक्ल पवित्र"मिति श्रुते ॥ १९ ॥

२६५. अक्षश्चेदुपहन्युः पुनः प्रोहेयुः ॥ २० ॥

अत्र ब्राह्मणम् — "[2]योऽस्य प्रिय स्यादनुपस्पृशन्नक्ष प्रोहे"दिति । यदि प्रमादादक्षमुपहन्यु -उपस्पृशेदित्यर्थं । तदानी पुनरपि द्रोणकलश [3]मपकृष्य अनुपस्पृशन्त एव प्रोहेयु । तदेव तत्र प्रायश्चित्तमिति सूत्रार्थः ॥ २० ॥

२६६. अन्तरेणाक्षविष्कंभौ दशापवित्रं द्रोणकलशे प्रास्येदनुपघ्नन् ॥ २१ ॥

अक्षस्योपरिष्टादोपाधारक काष्ठ तद्वदेव तिर्यगायतो विष्कम , तयोरक्षविष्कंभयोर्मध्यावकाशेन दशापवित्र द्रोण-कलशे प्रास्येत् । अनुपघ्नन् बाहुभ्यामक्षमनुपस्पृशन्नित्यर्थं ॥२१॥

२६७. [4]संहितौ चेदुभावुपरि ॥ २२ ॥

यद्यक्षविष्कभौ सश्लिष्टौ स्याता तदा तयोर्मध्यावकाशेन प्रासनाशक्तो, तयोरुपरिदेशेनैव प्रास्येत् । अवकाशसभयेतु तेनै-वावश्य प्रासन कार्यम् । "[5]उपर्युपर्यक्ष पवित्र प्रयच्छन्ती"ति श्रुते ॥ २२ ॥

२६८. सर्वं रथोपस्थ उपर्युपर्युत्तरेण रथजंघा रथश्चेत् ॥ २३ ॥

यदि क्वचिच्छधनादौ रथो हविर्द्धान स्यात्, तदा कृत्स्न-स्यैव रथोपस्थस्योपरिष्टाद्रथजघा मध्ये अवस्थितामुत्तरेण

1 ता बा ६ ६ ८ १ । 2 ता-बा ६ ८ १५ । 3 ब आकृष्य । 4 ब पा सहृतौ । 5 ता बा ६ ५ १४ ।

दशापवित्र पुरस्तादतिहृत्य अधस्तादवस्थिते द्रोणकलशे प्रास्येत् ॥ २३ ॥

तृतीयपटले प्रथम खण्ड



अथ द्वितीयः खण्डः

२६९, प्रत्यावृज्य ग्राव्णो युञ्ज्यात् ॥ १ ॥

द्रोणकलश प्रोहणानन्तर उत्थायाभिषवदेश प्रत्यावृज्य आगम्य, ग्रा०णो युञ्ज्यात् । एकवचनमविवक्षित, उ[1]त्तरसूत्रे तानभिमृश्य जपेयुरिति बहुत्वश्रवणात् । जपस्यैव प्राधान्येन ग्रावयोजनस्याप्रधानत्वाच्च । किञ्च, "ग्रा[2]०णस्समाच द्रोण-कलशामभ्यूहन्तीति श्रुते, स्पष्टमेव ग्रावयोजनेऽपि कर्तृबहुत्वम ॥ कथ युञ्ज्यादित्यत आह—

२७० प्रदक्षिणमष्टमदेशेषु स्थवीयांस्यभ्यन्तराणि कृत्वा ॥ २ ॥

अष्टमदेश कोणदेश अभिषवचर्मणोर्मध्ये अवान्तरदिक्षु चतुरो ग्राव्ण प्रदक्षिण युञ्ज्यात् । तेषा ग्रा०णां स्थवीयासि स्थूलतरान् प्रान्तभागानभ्यन्तरान् कृत्वा युञ्ज्यात् ॥ २ ॥

२७१ तानि मुखानि ॥ ३ ॥

तानि स्थवीयासि मुखानीत्युच्यन्ते । "[3]समुखान् ग्राव्ण कृत्वा विमुखान् ग्राव्णा कृत्वे'त्यादौ (उपयुज्यते) ॥ ३ ॥

२७२ दक्षिणार्धपूर्वार्ध प्रथमम् ॥ ४ ॥

1 ब्रा ३ २ ५ । 2 ताब्रा ६ ६ ९ । 3 ताब्रा ६ ६-२ ३ ।

दक्षिणपूर्वदेशस्थं ग्रावाणं प्रथमं युञ्ज्यात्, उत्तरपूर्वदेशे समाप्तिः इति ॥ ४ ॥

२७३. तानभिमृश्य जपेयु"र्भू[1]रुत" इति ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

२७४. ऋत सदन एतज्जपित्वा '[2]युक्तास्थवहते'त्येताव-
तैवेति धानञ्जय्यः ॥ ६ ॥

द्रोणकलशप्रोहणानन्तरं तत्रैव स्थाने मरुत इत्यादि, चातयध्वमित्यन्तं जपित्वा तत. प्रत्यावृज्य युक्तास्थवहतेत्येतावन्मात्रेण ग्रावयोजनमिति धानञ्जय्य.। [3]ऋतस्य सदने सीदामीति मन्त्रेण च यत्रोपविश्यते तदृतसदनं, दक्षिणस्य हविर्धानस्य पश्चाद्देशः ॥ ६ ॥

२७५. पश्चाद्दक्षिणतो वा द्रोणकलशं अभ्यूहे[4]युः इदमह-
मिममिति, *यजमानशब्दं सर्वत्र यथार्थं कुर्युः ॥ ७ ॥

मन्त्रगतं यजमानपदं [5]सर्वत्र यथार्थमूहेत्, इमान्यजमानानिति । न केवलमत्रैव, सर्वत्रैवमिति ॥ ७ ॥

२७६. अनुजपेयुरन्येन कृते मन्त्रौ ॥ ८ ॥

---

*ड अत्र इदमहमिममित्येतत्पर्यन्त एकं सूत्रं, यजमानशब्दमित्यन्यत् सूत्रं व्याख्यानेच, " युक्तानां प्राग्ग्रामुपरिष्टाद्द्रोणकलशं पश्चादारभ्य प्राञ्चं स्थापयेयुः दक्षिणतः उदञ्चं वे त्यधिकपाठः

1. ता-ब्रा-१-२-५। 2 ता-ब्रा-१-२-५। 3. द्रा-३-१-१५
4 ता-ब्रा-१-२ ५। 5 ड सर्वे।

अन्येनाध्वर्युणा ग्रावयोजनादिके कृते, केवलं तौ मन्त्रौ जपेयुः न पुनः ग्रावयोजनं कुर्युः। एवं [1]ग्रावयोजनादेः कल्प उक्तः ॥ ८ ॥

अयमेव काम्यानामपि ब्राह्मणोक्तानां ब्राह्मणविहितं वैशेषिकमङ्गंविनेत्याह—

२७७. *ब्राह्मणविहितादन्यत्रैषकल्पः काम्यानाम् ॥ ९ ॥

अत्रब्राह्मणे, '[2]य द्विष्याद्विमुखान् ग्राव्ण' इत्यारभ्य चत्वारः काम्याः कल्पा उक्ताः। तेषु द्वेष्यप्रियकल्पयो द्रोणकलशाभ्यूहने मन्त्रौ विशेषवि[3]हितौ। अन्यत्सर्वं न विहितं, किं पुनस्तत्? प्रदक्षिणं ग्रावयोजनं, अभिमर्शनमन्त्रजपः पश्चादभ्यूहनमित्यादि। तत्सर्वं नित्यवदेव कार्यम्। तथैव [4]राष्ट्रजिघांसुकल्पेऽपि ॥ ९ ॥

द्वेष्यकल्पस्त्ववशिष्यते। तत्रापि नित्यकल्पग्रहणे प्राप्ते आह—

२७८. द्वेष्यकल्पादन्यत्र ॥ १० ॥

द्वेष्यकल्पादन्यत्र नित्यकल्पधर्मग्रहणमिति ॥ १० ॥

कस्तर्हि द्वेष्यकल्पे प्रकारः? तमाह—

२७९. *विपर्यस्य तु तस्मिन् ॥ ११ ॥*

---

* अत्र सूत्राणां संख्या व्यत्यासः लाट्यायने।

---

1. द. नित्यस्यप्राव। 2. ता ब्रा-६-६-२ 3. ता-ब्रा: ६-६-३-४। 4. ता ब्रा-६-६-५।

पश्चाद्ग्राव्ण. पृथक्कृत्य मध्ये भूमौ द्रोणकलशं सादयित्वा तं पञ्चमं ग्रावाणं द्रोणकलशे प्रहरन्निव प्रास्येत् ॥ १८ ॥

२८७. तमुपरिष्टाद्द्रोणकलशस्य कुर्याद्राष्ट्रं जिघांसुः प्रतिवेशां बलवतीं विशमादिशन् ॥ १९ ॥

इदमहममुयेति मन्त्रेण प्रतिवेशां राष्ट्रप्रतिपक्षभूतां विशं बलवतीमादिशेत् । स्वामिद्वारेण बलवत्त्वं । यथा युधिष्ठिराधिष्ठितया भीमार्जुनादिरूपया विशा कुरुक्षेत्रं राष्ट्रं हन्मीति । अयं च कल्पः स्वकीयेनैव राष्ट्रेण यस्य राज्ञो विरोधो जातः तस्येति मन्तव्यम् इति ॥ १९ ॥

२८८. एतेषामेकं कृत्वा पथ्यं कुर्यादिति गौतमः ॥ २० ॥

[1] एतेषां काम्यानामेकं प्रातस्सवने सकृत् कृत्वा नित्यमेव कल्पमुत्तरयोः सवनयोः कुर्यात्, न पुनः काम्यमिति ॥ २१ ॥

२८९. तमेवेति धानञ्जय्यः ॥ २१ ॥

[2] काम्यं चेत्प्रातः सवने कृतं, तमेव काम्यमुत्तरयोरपि सवनयोरित्यर्थः ॥ २१ ॥

२९०. पृष्ठानामन्ते पूर्वया द्वारा निष्क्रम्य काम्यं शाण्डिल्यः ॥ २२ ॥

पृष्ठस्तोत्राणामन्ते माध्यन्दिने सवने संस्थिते, पूर्वया द्वारा निष्क्रम्य काम्यं ग्रावयोजनं पृथगेव कुर्यात् । स्वस्थाने, तु सर्वत्र नित्यमेव कुर्यात् ॥ २२ ॥

---

1. ड. "एतेषां काम्यानामेकं कृत्वा पुनस्तदानीमेव कल्पान्तरया नित्यं कुर्यात् । पथ्यशब्दो नित्यवचन इति । 2. ड. तदेव काम्यमुत्तरयोरप्युपकरणं न पुनः नित्यमपेक्षणीयमिति मन्यते ।

२९१. पवित्रेण द्रोणकलशं संमृज्यात् 'वसवस्त्वेति *बुध्नं, रुद्रास्त्वेति मध्यं आदित्यास्त्वेति बिलम् ॥ २३ ॥

दशापवित्रेण द्रोणकलशं समृज्यात्, एकवचननिर्देशादुदृगातैव ॥ २३ ॥

२९२. एतेषामेकैकेन त्रिस्त्रिरनुसवनं संमृज्यादिति धानञ्जय्यः ॥ २४ ॥

एतेषामेकैकोमन्त्र प्रतिसवनं, नात्रबुध्नादि नियमः, अनुक्तत्वात् ॥ २४ ॥

२९३. सर्वैः सर्वैरिति शाण्डिल्यः ॥ २५ ॥

प्रतिसवनत्रयोऽपिमन्त्रा बुध्नादिनियममनादृत्यमवेयु. ॥ २५ ॥

२९४. सर्वं बुध्नं सर्वं मध्यं सर्वं बिलमित्येके ॥ २६ ॥

स्पष्टम् ॥ २६ ॥

२९५. बिलं मध्यं बुध्नमित्यपरम् ॥ २७ ॥

बिल मध्य बुध्नमित्यनेनवा क्रमेण समृज्यात् ॥ २७ ॥

२९६. अथधूपपवित्रमुदग्दशं प्रवाङ्नाभि वितनुयुः पवित्रन्त इति ॥ २८ ॥

दशापवित्रस्य मध्ये शुक्लामूर्णास्तुका सोमधारास्रावणार्थं यजमान करोति । सा नाभिरित्युच्यते । उदीचीनदशमवाचीननाभि च । दशापवित्र कृत्वा द्रोणकलशस्योपरिष्टाद्वितनुयुः,

*"मूल बुध्नोऽङ्घ्रिनामक" इत्यमरःअतो मूलमित्यर्थ. ॥

1. ता-ब्रा-१-२-७ । ता-ब्रा ६-२-७ । 2 ता ब्रा-१-२-८ ।

पवित्रत इत्यृचा । उपरिवितत्य दशापवित्रस्य कोण धारयेयु । तथा च ब्राह्मण, "[1]पवित्र विमृह्लन्ती"ति वितत्यधारण-विग्रह्णम् ॥ २८ ॥

२९७. वृचेनैके ॥ २९ ॥

स्पष्टम् ॥ २९ ॥

२९८. सन्ततायां धारायामुद्गाता जपेत् 'प्र[2]शुक्र' इति ॥ ३० ॥

पवित्रविताने त्रयाणामप्यन्वयावितरयोर्निवृत्यर्थं उद्गातृग्रहणम् ॥ ३० ॥

२९९. अमुष्यराज्यायेति प्रियं राजानमादिशेत् ॥ ३१ ॥

प्रथुनेति मन्त्रस्यान्तोऽमुष्य राज्यायेति । तत्र अमुष्येत्यत्र उद्गातु प्रिय राजानमादिशेत् । युधिष्ठिरस्य राज्यायेत्यादि ॥ ३१ ॥

३००. *राज्ञोराज्यायेतिवा, यजमानस्य राज्ञो राज्यायेति वा,
सोमस्य राज्ञो राज्यायेति वा ॥ ३२ ॥

---

*अत्र ङ पाठे "राज्ञो राज्यायेतिवा" इति सूत्र, तद्व्याख्या, 'अथवा राज्ञो राज्यायेति सामान्येनादिशेदिति ॥ "यजमानस्य राज्ञो राज्याय" इत्यपर सूत्र, तद्व्याख्या च "अथवा यदा क्षत्रियो यजमान तदानीममुष्येत्यस्य स्थाने यजमानस्य राज्ञ इति निर्दिशेदिति ॥ अथ सोमस्य राज्ञो राज्यायेति वा-एव सूत्र त्रिधा । लाट्यायने द्विधा ।

---

1. का ब्रा ६-६-१२ । 2 ता ब्रा १-२-९-३ ६ ६ १६ ।

सोमस्य राज्ञ इति निर्दिशेत् ॥ ३२ ॥

तमेव पक्षं स्थापयति—

३०१. सोमस्येत्येवब्रूयात्सोमराजानो हि ब्राह्मणाः ॥ ३३ ॥

यस्मात् सोम [1]एव ब्राह्मणानां राजा तस्मात्सोमस्य राज्ञ इत्येव निर्देशः । क्षत्रियवैश्ययोरपि दीक्षयैव ब्राह्मणत्वात्, सोमस्येत्येवतयोरपि निर्देशः । "ब्रा[2]ह्मणो वा एष जायते यो दीक्षित" इति श्रुतेः ॥ ३३ ॥

इति तृतीय पटले द्वितीयः खण्डः



अथ तृतीयखण्डः

३०२. आग्रयणं गृह्णन्नध्वर्युर्हिंकरोति तदा प्रवृणीरन्, "अग्निः प्रस्तोताऽहं मानुषः बृहस्पतिरुद्गाताऽहं मानुषः वायुः प्रतिहर्ताऽहं मानुष" इति यथा लिङ्गम् ॥ १ ॥

यथालिङ्गं मन्त्रैर्देवानुद्गातॄन् प्रवृणीरन् । प्रवरणं अभ्यर्थनं । तद्यथा, अ[3]ग्निर्वै प्रस्तोता स एव हि सर्वं वेद, अहं तु मानुषः प्रस्तोता तदधिष्ठितः यथा शक्तिकरोमीति [4]एवमुमत्तापि ॥ १ ॥

---

1. श-ब्रा-५-४-२-३ । 2. श-ब्रा-३-२-२२ । 3. द्र. अग्निरेवप्रस्तोतास्तु । 4. द्र. यथाऽध्वर्युर्दैवं होतारं वृणीते "अग्निर्देवो दैव्यो-होता देवान्यक्षत् इत्यादि तद्वदेव तत् शत-ब्रा-१-४-१-२-६ ।

३०३. *न प्रवृणीरन्निति धानञ्जय्यः ॥ २ ॥

३०४. प्रवृणीरन्नेवेति शाण्डिल्यः ॥ ३ ॥

स्पष्टे ॥ २, ३ ॥

३०५ अत्र वाचं यच्छेयुः ॥ ४ ॥

प्रवरानन्तरं वाचं यच्छेयुः ॥ ४ ॥

३०६. ऋतसदने वा ॥ ५ ॥

[1]"ऋतस्य सदने सीदा"मीति यत्र पूर्वमुपविष्टं, तदृतसदनं, तत्रोपविश्य तदाप्रभृति वा वाग्यताः स्युः ॥ ५ ॥

३०७. वेदिं वाऽऽक्रामन्तः ॥ ६ ॥

अथवा "[2]मृदाशिथिरे"ति [3]मन्त्रेण वेदिमाक्रामन्त एव वाग्यताः स्युः ॥ ६ ॥

३०८. स्तुते बहिष्पवमाने विसृजेरन् ॥ ७ ॥

स्तुते बहिष्पवमाने वाचं विसृजेरन् । नान्तरा कदाचित् ॥ ७ ॥

---

*द. तथाहि नवयं प्रवरमन्त्रान् अधीमहे । किञ्च, "यन्वित्याह वाचा अन्यानृत्विजोवृणते कस्मादुद्गातारो अवृता आर्त्विज्यं कुर्वन्ति"इति ब्राह्मणे ऋत्विगन्तरवत् उद्गातॄणां अपि वरणं कार्यमिति चोदयित्वा, "यद्द्रोणकलशमुपसीदन्ति तेनोद्गातारो वृता", इति द्रोणकलशोपसत्तिमात्रेण वरणं कृतं न पृथक्कार्यमिति दर्शयति ॥ ता-ब्रा-६-५-१६-१७ ॥

1. द्रा-३-१-१४ 2. द्रा-३ १-२ 3. द. आक्रमन्ति सवा प्रभृति ।

३०९. उत्तरार्द्धहविर्द्धानाद्ध्रुवस्थालीं हरन्तः
पश्चिमेनोद्गातॄन् हृत्वा तेनैव प्रतिहरेयुः ॥ ८॥

यदाऽध्वर्यवः उत्तरार्द्धहविर्द्धानाद्ध्रुवग्रहणार्थं ध्रुवस्थालीं हरन्ति । तदा ते पश्चिमेनोद्गातॄन् हृत्वा प्रतिहरेयुः ॥ ८ ॥

३१०. *[1]नाग्रेण ॥ ९ ॥

द्रोणकलशस्योद्गातॄणां च मध्यदेशे, न हरेयुरित्यर्थः ॥ ९ ॥

ननु च, अध्वर्युकृत्यं कि[2]मर्थं विधीयते? अत आह—

३११. अपि ह्यध्वर्यवोऽप्यकुशला भवन्तीति ॥ १० ॥

अध्वर्यवोऽप्यस्मिन्नर्थे कदाचिदकुशला स्युः,तत्सूत्रेऽप्यवचनात् । [3]ततोऽस्माभिरेतदुक्तम् । अध्वर्यु[4]भिरत्रावहितैः भवितव्य- मिति ॥ १० ॥

॥ सर्पणम् ॥

३१२. अभिपीड्य पवित्रमध्वर्युं निःसर्पन्तं प्रस्तोता
सन्तनुयात् ॥ ११ ॥

अभिपीडनं - [5]अध्वर्युकर्म । गृहीतेषु ग्रहेषु दशापवित्रं निष्पीड्य निश्चोत्य हविर्द्धानद्वारेण[6] निःसर्पन्तं अध्वर्युं प्रस्तोताऽन्वारभेत ॥ ११ ॥

---

*लाटचायने ३१०, ३११, सूत्रद्वयं नास्ति ।

---

1. ▪ नैनानपेणहरेयुः ९ 2. ङ किमत्र । 3 ङ अतो 4 ङ भिरहितैन भवितव्यमिति पाठभेद. । 5. ङ प्रस्तोतृकर्म । 6. ङ वैसृपहोमार्थं ।

३१३. *तमुद्गाता उद्गातारं प्रतिहर्ता त ब्रह्मा ब्रह्माणं यजमानः ॥ १२ ॥

सर्वत्र सन्तनुयादित्यनुवर्तते ॥ १२ ॥

तेषां समन्वारम्भे प्रमाणमाह—

३१४. "प[1]ञ्चर्त्विजः संरब्धाः सर्पन्तीत्येतानाह ॥ १३ ॥

"पञ्चर्त्विजस्सरब्धास्सर्पन्ती"ति ब्राह्मण एतानेवानुक्रान्तान् ऋत्विज आह, नान्यान्। कुत? अनन्तरमेव [2]ब्राह्मणे त्रयाणां तावदुद्गातॄणां अवच्छेदे दोषवचनात्, ते तावत् त्रय इति गम्यते। अ[3]ध्वर्यु प्रस्तर हरतीति वचनात् स एक, सर्वस्य ब्रह्मणोऽनुसधातृत्वात्स एक—एवमेते पञ्चर्त्विज इति ॥ १३ ॥

३१५. दोषवचनात् व्यवच्छेदात् जुगुप्सेरन् ॥ १४ ॥

"**यदि[4] प्रस्तोतावच्छिद्यत इत्यारभ्य ब्राह्मणे गुरुतर-

---

*इद सूत्रचतुर्धा विभक्त, उत्तरे सूत्रे च न स्त लाट्यायने।

**यदि प्रस्तोताऽवच्छिद्यते यज्ञस्य शिर छिद्यते ब्रह्मणे वर दत्त्वा स[1] एव पुन कर्तव्य छिन्नमेव तत्प्रतिदधाति ॥ यद्युद्गाताऽवच्छिद्यते यज्ञेन यजमानो व्यृध्यते अदक्षिण स यज्ञ क्रतु संस्थाप्य, अथाऽन्य आहृत्य तस्मिन् देय यावद्दास्यन् स्यात् ॥ यदि प्रतिहर्तावच्छिद्यते पशुभि यजमानो व्यृध्यते पशवो वै प्रतिहर्ता सर्ववेदस देय, यदिसर्ववेदस न ददाति सर्वज्यानि जीयते ॥ ता. ब्रा-६-७ १३ to १५ ॥

1 यज्ञ।

---

1 ता ब्रा ६-७-१२ 2. ता ब्रा ६-७-१३-१५। 3 ता ब्रा ६-७-१६। 4 ता ब्रा ६-७-१३।

दोषवचनाद्गुरुतरप्रायश्चित्त विधानाच्च, सर्वात्मनावच्छेदं* परिहरेयुः ॥ १४ ॥

३१६. न राजानमालम्भयानुपस्पृश्यापि आज्यमालभेरन्, तथाऽऽज्यं राजनं सर्वत्र ॥ १५ ॥

---

*अविच्छेदायपूर्वस्य कच्छ गृह्णन्ति शिष्टाः । यद्युद्गाताऽपच्छिद्येतादक्षिणो यज्ञ. संस्थाप्य, अथान्य आहृत्यस्तत्र तद्दद्यात्, यत्पूर्वस्मिन् दास्यन्स्यात् । यदि प्रतिहर्ताऽपच्छिद्येत सर्वस्वं दद्यात् इति ब्राह्मणे-उद्गात्रपच्छेदे त क्रतुमदक्षिणं कृत्वा स एव पुन. कर्तव्य', तत्र पूर्वक्रतौ सङ्कल्पिता दक्षिणा दद्यात् । प्रतिहर्त्रपच्छेदे तत्र क्रतौ सर्वस्व दक्षिणात्वेन दद्यादिति विहितम् । एकस्मिन्नेव क्रतौ युगपत् उद्गातृप्रतिहर्त्रोरपच्छेदे निमित्तद्वय समवात् द्वादशशत दक्षिणा वा सर्वस्व दक्षिणा वा विकल्पेन प्राप्नोति । त क्रतुमदक्षिण सस्थाप्य उत्तरक्रतौ विकल्पेन द्वादशशतदक्षिणा वा सर्वस्व दक्षिणा वा देया इति जै. न्या ६-५-१८ ॥

उद्गात्रपच्छेदात् पर प्रतिहर्त्रपच्छेदे, प्रतिहर्त्रपच्छेदात् पर उद्गात्रपच्छेदे वा, पर यत् तस्यैव प्राबल्यम् । अयमेवार्थः, "पौर्वापर्ये पूर्वदौर्बल्य प्रकृतिवत्" इति सूत्रेण ज्ञाप्यते । अपच्छेदयो. पौर्वापर्ये पर प्रबल पूर्व दुर्बल तेन बाधात्, यथा श्येनयागे शरमय बर्हिरित्यनेन वाक्येन बर्हिष। शरमयत्व बोधकेन प्रकृतिवदिति अतिदेशतः प्राप्तस्य कुशमयबर्हिषः बाधः तद्वत् ॥ जै. न्या-६-५-१९ ॥

राजानं स्पृष्ट्वा[1]ऽनुपस्पृश्यापो घृतं न स्पृशेयुः। तथा घृतं स्पृष्ट्वानुपस्पृश्यापो राजानं न स्पृशेयुः ॥ १५ ॥

तत्र प्रमाणमाह—

३१७. *"वज्रो वा एष सोमस्य यदाज्यमिति" तयोरसमवाय-
माह ॥ १६ ॥

वज्रो वा एष सोमस्य यदाज्यमिति[2]श्रुतेः । त्रयाणामुदकोपस्पर्शनार्थमेतत्सूत्रम् । पूर्वंदशापवित्रनिष्पीडनेन राज्ञः स्पृष्टत्वात् ॥ १६ ॥

३१८. अध्वर्युणा हुते प्रवृत्तहोमौ जुहुयु-
र्यथानुपूर्व्येण, "वेङ्[3]रानामासि" "सर्पोसीति ॥ १७ ॥

अध्वर्युणा वैप्रुषहोमे कृते, सर्पणक्रमेण त्रयोपि प्रवृत्तहोमौ जुहुयुः । होमश्च सव्येन हस्तेनेत्याह । कुतः ? अन्वारम्भवेलाया असञ्जातविरोधिना दक्षिणहस्तेनान्वारम्भात् तद्विच्छेदस्य चानुपपन्नत्वात्, उत्तरत्र सव्यैः पाणिभिः तृणनिरसन वि[4]धानाच्च । व्यापृतत्वाद्धि दक्षिणहस्तस्य, सव्यैः पाणिभिरिति वचनं नान्यथेति । केचिदत्र प्रवृत्तहोमाविति समाख्यानात् प्रवरणाभावे होमनिवृत्तिमाहुः । तदयुक्तं; जैमिनिकल्पे प्रवरणमनुक्त्वैव

*एतत् सूत्रं लाट्यायने नास्ति ।

1. ड राजस्पर्शनेऽप्येवं इत्यधिकः पाठः । 2. ड इतिश्रुति तयोराज्यसोमयोरसङ्गतिमाह । सोमस्य वज्रोघृत, "घृत वै देवा वज्रं कृत्वा सोममघ्नन्" इति श्रुते । तेन घृतात्सोमस्य भयं भवति । तत्परिहाराय अपामुपस्पर्शनं मध्ये कर्तव्यमिति । अनन्तरं प्रवृत्तहोम कारिष्यन्तो उदकोपस्पर्शनार्थमेतत्सूत्रम् । इत्यधिकः पाठः ॥ 3 ता-ब्रा-१ ३-१, २ । 4. द्रा-३-३-२६ ।

राजानं स्पृष्ट्वा[1]ऽनुपस्पृश्यापो घृतं न स्पृशेयु.। तथा घृतं स्पृष्ट्वानुपस्पृश्यापो राजान न स्पृशेयुः ॥ १५ ॥

तत्र प्रमाणमाह—

११७. *"वज्रो वा एष सोमस्य यदाज्यमिति"तयोरसमवाप-
माह ॥ १६ ॥

वज्रो वा एष सोमस्य यदाज्यमिति[2]श्रुतेः । तयाणामुद-कोपस्पर्शनार्थमेतत्सूत्रम् । पूर्वंदशापवित्रनिष्पीडनेन राज्ञ. स्पृष्टत्वात् ॥ १६ ॥

३१८. अध्वर्युणा हुवे प्रवृतहोमौ जुहुयु-
र्गत्यानुपूर्व्येण, "वेक्[3]रानामासि" "सूर्येमिति ॥ १७ ॥

अध्वर्युणा वैश्रुपहोमे कृते, सर्पणक्रमेण त्रयोपि प्रवृतहोमौ जुहुयुः । होमश्च सव्येन हस्तेनेत्याह । कुत ? अन्वारम्भवेलाया असञ्जातविरोधिना दक्षिणहस्तेनान्वारभात् तद्विच्छेदस्यचायुक्ततरत्वात्, उत्तरत्र सव्यैः पाणिभि. तृणनिरसन वि[4]धानाच्च । व्यापृतत्वाद्धि दक्षिणहस्तस्य, सव्यै. पाणिभिरिति वचन नान्यथेति । केचिदत्र प्रवृतहोमाविति समाख्यानात् प्रवरणाभावे होमनिवृत्तिमाहुः । तदयुक्त; जैमिनिकल्पे प्रवरणमनुक्त्वैव

*एतत् सूत्र लाट्यायने नास्ति ।

1. इ राजस्पर्शनेकृते इत्यधिक पाठः । 2. इ इतिश्रुति तयोराज्य-सोमयोरसङ्गतिमाह । सोमस्य वज्रोपूत, "घृत वै देवा वज्र कृत्वा सोममघ्नन्ति" इति श्रुते । तेन घृतात्सोमस्य भय भवति । तत्परिहाराय अपामुपस्पर्शनं मध्ये कर्तव्यमिति । अनन्तरं प्रवृतहोम करिष्यतो उदकोपस्पर्शनार्थमेतत्सूत्रम् । पाठ ॥ 3 ला-श्रौ-१-३-१, २ । 4. ला ३-३ २६ ।

प्रवृत्तहोमविधानात्। तस्मादयमर्थं रक्षोभ्यस्त्राणाय देवाना यज्ञे बृहस्पतिना प्रार्थिताना सूर्यादीना, देवै प्रार्थिताया वाचश्च यो होमौ, तौ प्रवृत्तहोमाविति । अत्रबृहस्पतिर्वै *देवानामुदगाय-दिति [1]ब्राह्मणे स्पष्टोऽयमर्थं इति ॥ १७ ॥

३१९. **संसुतसोमे त्वधिकामुद्गाता जुहुयात् [2]संवेशायोप-वेशायेति, यथासवनं छन्दांस्यादिशन् ॥ १८ ॥**

पृथक्प्रयोजनाना युगपदेकस्मिन् वेथे सुत्याया ससव, तस्मिन् ससुते सोमे प्रवृत्तहोमानन्तर उद्गाताऽधिकामेकामाहुति जुहुयात्। सवेशायोपवेशायेति ब्राह्मणपठितैर्मन्त्रै यथासवन छदास्यादिशन्। सवेशायोपवेशायगायत्र्यैछन्दसेऽभिभूतये स्वा-हेति प्रात सवने होम । सवेशायोपवेशाय त्रिष्टुभेछन्दसेऽभि-भूतये स्वाहेति माध्यन्दिने, एव जगत्यै छन्दसेऽभिभूतये इति तृतीयसवने, यथासवनमिति एकस्मिन्नेव सवने त्रयोपि मन्त्रा न स्युरित्यर्थं ।

अत्र के[3]चिदाहु उद्गातृशब्देनात्र सवनोद्गाताऽभि-धीयत इति। क पुन सवनोद्गातानाम? तत्राप्याहु उद्गाता प्रात सवने, प्रस्तोता माध्यन्दिने, प्रतिहर्ता तृतीय सवन इति,

---

* "बृहस्पतिर्वै देवानामुदगायत्तें रक्षांस्याशिर्यांपन् स य एषा लोकानमधिपतय तान् भागधेयेनोपवावत्" इत्यादि ता ब्रा-६ ७-१ ॥

---

1. ता-ब्रा ६ ७-१। 2 ता ब्रा ६ ४-६। 3 रुद्र स्कन्द ।

तेन तत्र तत्र सवने तेन तेनैव मवेशयेति होतव्यमिति । तद-युक्तम्—नहि सवनोद्गाता नामकश्चिदस्ति, क्वचिदपि सूत्र-कारेण तथा व्यपदेशाभावात् । ननु च उत्तरयो सवनयो "[1]यथासवनमुपविश्य प्रस्तोता हविर्धानगच्छे"दिति वचनात्, उ[2]द्गातृगमन नास्ति । तेन [3]यथासवनोद्गाता जुहुयादित्युक्ते प्रस्तोतृ प्रतिहर्त्रोरप्युद्गातृशब्देनाभिधानमिति गम्यते । नैतदेव, उद्गातुर्गमनाभावेऽपि होममात्र वचनात् गत्वा करिष्यति । नैतावता सवनोद्गातानाम कश्चित्कल्पनीय इति ॥ १८ ॥

३२०. "ऋच सामे"ति स्वाहाकारान्तया तृतीयां सर्वत्र ॥ १९ ॥

सर्वत्र--ससवेचाससवे च ऋच सामेति स्वाहाकारा-न्तया[4]च तृतीयामाहुतिमुद्गातैव कुर्यात् ॥ १९ ॥

३२१. स एवेति शाण्डिल्यः ॥ २० ॥

स एवोद्गाता प्रवृतहोमी जुहुयात् । नेतराविति शाण्डिल्य । कुत ? [5]बृहस्पतिर्वे देवानामुदगायदिति ब्राह्मणेन उद्गातुरेव प्रवृतहोमविधानात् । पक्षान्तरस्य मूल तु, [6]उद्गा-तारो वै वाने भागधेय कुर्वन्तीति, तत्रैव ब्राह्मणेन बहुवचन-निर्देश इति ॥ २० ॥

३२२. महागिरिमहानदीश्चाहर्यासुव्यवायेऽप्यसंसवः ॥ २१ ॥

महागिरिभिर्विन्ध्यादिभिः महानदीभिर्गंगादिभिश्च व्यवाये ससवदोषो नास्ति । तथा यावति प्रदेशे महावातो वाति

1 ता ५ ३ ७ । 2 ब उद्गातृ गमनं । 3 ब यथा सवनं उद्गाता । 4 ब ऋचा । 5 ता ब्रा ६ ७ १ । 6 ता-ब्रा-६ ७-५ ।

तावता व्यवयेऽपि, तथा एकस्मिन्नहनि यावन्तं देशं रथो गन्तुं शक्नोति तद्रथाहरित्युच्यते। [1]तावता व्यावायेऽपि नास्ति। राजदन्तादिवत् [2]परनिपात ॥ २१ ॥

३२३. पृथक् जनपदे च ॥ २२ ॥

व्यवायाभावेऽपि जनपदभेदेन समवदोषो नास्ति ॥ २२ ॥

३२४. अविद्विपाणमाम्नादित्येके ॥ २३ ॥

अविद्विपाणेति भावपरो निर्देश। यजमानयोरन्योन्यमवि-द्विपाणत्वमात्रादेव समवदोषोनास्ति नान्यदपेक्षणीयमित्येके ॥२३॥

३२५ हुत्वा जपेयुः "ब्रह्माहं गायत्रीं वाचं प्राणं प्रजापतिं प्रपद्येऽश्मानमाखणं पर्यूह" इति ॥ २४ ॥

स्पष्टम् ॥ २४ ॥

३२६ अध्वर्युमन्वावर्तेरन् सर्पन्तः ॥ २५ ॥

येन यथा येन च प्रकारेणाध्वर्युस्सर्पति [3]तेन च प्रकारेण तमन्वावर्तेरन् ॥ २५ ॥

३२७ सव्यैः पाणिभिः पृथक् दक्षिणा तृणानि निरस्येयुः [4]योऽस्य सौम्य इति ॥ २६ ॥

सर्पन्त इत्यन्वारम्भे दक्षिणहस्तस्य व्यापृतत्वात् सव्यै-रिति वचनम् ॥ २६ ॥

---

1. क तेन। 2 पाणि-सू-२-२-३१।
3 क तेन यथा। 4 ता ब्रा १ ३ ३।

संपादयेत्-उपगातृभिः गीतिवर्धयेदित्यर्थः । *तथा च महाव्रते तेनेदमुपगायातान्ते साम महयिष्यत इति । उपगानाक्षरस्वरः साम्नः प्राणस्तस्मात् उपगाने कृते प्राणेन सन्तत सहितं साम-भवति । अन्यथा निष्प्राणं सामस्यादिति ब्राह्मणार्थः ॥ २ ॥

[1] अत्रापि ब्राह्मणान्तरम्—

३३४. [2] वल्गुतमं सामोपगीतं भवति तस्मादप्युपगेयं
चत्वार उपगास्युश्चतस्रोदिशो दिग्भिरुपगायन्तीति
च ब्राह्मणम् ॥ ३ ॥

[3] स्वतस्तावत्साम वल्गु भवति—श्राव्यं भवति, उपगातृभिरुपगीतं साम वल्गुतमं भवति, यथा लौकिकीगीतिः सहकारिभि. उपगीयमाना—तद्वत् ॥ ३ ॥

३३५ चत्वा ॥ ४ ॥

चतुरुपगातारस्स्युः ॥ ४ ॥

---

*अत्र ङ पाठे तत्र प्रणवेन त्रिवृता ब्राह्मणोपगानात् रक्षित सः वृद्धिरित्यभिप्रायः । किञ्च उपगातृभिः क्रियमाणः य. स्वरः प्रणवात्मकः सः साम्नः प्राणः । तेन सामसन्तनोति, अन्यथा पञ्चाना भक्तीना त्रिभिः पुरुषैः पृथगेव गानात् साम्नः पर्वविच्छेद, यथा शरीरे हस्ताद्यङ्गानि विच्छेद्येरन् । यथा च ब्राह्मण सर्वाण्यङ्गानि सन्धत्ते एवं प्रणवः सामपर्वाणीत्यर्थः । एवमधिक पाठः ।

---

1. प—अन्यदपि । 2. वल्गुतमं—उपगेयमित्यन्तं पूर्वसूत्रं ङ. पाठे । 3. ङ उपगेयमिति अस्यानन्तरं इति शब्दोऽध्याहर्तव्यः ब्राह्मणसमाप्ति सूचकः वल्गुत्वात् साम वल्गु श्राव्यं भवति । उपगानेन वल्गुतमं भवति । यथा लौकिकी-गीति सहकारिभिरुपगीयमाना । तस्मादप्युपगान कार्यमिति ।

तत्र ब्राह्मणमाह—

३३६. [1]षड्तव उपगातार [2]इति च ब्राह्मणम् ॥ ५ ॥

[3]स्पष्टम् ॥ ५ ॥

३३७. यावन्तो वा संस्वरेरन् ॥ ६ ॥

[4]साम्ना समतं संस्वरेरन्, न सामध्वनिमभिभवेयुरित्यर्थः । तावन्त उपगायेयुः—[5]चत्वारः षडिति वा नियमः कार्यः ॥ ६ ॥

३३८. ते होइत्येतेनाक्षरेणोपगायेयुः । ओमिति यजमानः ॥ ७ ॥

[6]गतम् ॥ ७ ॥

अथ उपगानप्रकारमाह —

३३९. पृष्ठ्यन्तरयोरुपविश्यमक्ष्यन्तराणि छादयन्तो मन्द्र उपगा भवन्ति ॥ ८ ॥

पृष्टिरिति - पार्श्वस्याभिधानं, उद्गातृ पार्श्वस्ययोः प्रस्तोतृप्रतिहर्त्रोर्यदन्तरालं तयोरुपविश्य साम्नः पञ्चभक्तीनां छिद्राणि छादयन्तो मन्द्रस्वरेणोपगानं कुर्युः । मन्द्र इति सप्तमी । मन्द्रस्वरे [7]स्थित्वा–मन्द्रेणेति यावत् ॥ ८ ॥

1. ड. पुस्तके षड्या षड्तव इत्येक सूत्रं । 2. ता-ब्रा.२५-१८-४ । 3. ड. एवं सति साक्षात् ऋतव एव उपगातारः कृताभवन्ति 4. ड. यावन्त. पुरुषाः उपगानेन संस्वरेरन् । 5. ड. तेन चत्वारो नियताः ततः ऊर्ध्वं अनियम इति (अयमेव समीचीनः इति भाति) 6. ड. ते उपगातारः सर्वेषु स्तोत्रेषु हिंकारप्रभृति आस्तोत्रपरिसमाप्ते. होइति एतेनाक्षरेणाविरत प्लुतोच्चारणेनोपगायेयु. । तथैव यजमानोऽपि प्रणवेन । तत्र होइति परमात्मनः संबोधनं, प्रणवतुल्यमेतत् । कुत.? "उपहूतं हो इत्याहात्मानमेवोपह्वयते आत्मा ह्युपहूतानां वसिष्ठः" इति तैत्तरीयक श्रुतेः (तै–सं–२-६-७-६) । 7. ड. स्थितः ।

३४०. ञ्यन्तर उद्गीथः प्रातः सवनादन्यत्र ॥ ९ ॥

त्रयः स्वराः मन्द्रो मध्यमः क्रुष्टश्चेति । तेषां योऽन्तरो मध्यम. सः त्र्यन्तर., तस्मिन् मध्यमेस्वरे प्रातस्सवनादन्यत्रोद्गीथ. कार्य इति[1] ॥ ९ ॥

३४१. मन्द्रस्त्वेव प्रातः सवने ॥ १० ॥

स्पष्टम् ॥ १० ॥

३४२. निधनाय निधनायैवोपरमेयुः ॥ ११ ॥

[2]उपगान न कुर्युः । एतेन ज्ञायते निधन व्यतिरिक्तासु भक्तिषु आदित आरभ्य सन्ततमुपगानं कार्यम् । न केवलं भक्त्यन्तरेष्विति । किञ्च यद्गेगुतम साममुपगीतं इति वचनात् साम्न एव उपागान, न भक्तिछिद्रेष्वेव । किञ्च, [4]यावन्तो वा सस्वरैरन्निति सामस्वरानुपमर्दविधानमपि कृत्स्नस्यैव साम्न उपगाने युज्यते । न छिद्रमात्रोपगाने । न हि तदानी उपमर्दशकाप्यस्ति । गानस्यैवाभावादिति । केचित्तु भक्त्यन्तरेष्वेवोपगान न साम्न इति मत्वा निधनाय निधनायैवोपरमेयुरित्येतत्सूत्र उपद्रवनिधनयोर्मध्ये विरामविधिरिति वर्णयन्ति । तदयुक्तं, भक्त्यन्तराणीति बहुवचनेन उपद्रवनिधनान्तरालस्यापि परिग्रहात् अन्यथा छिद्रद्वयमेवेति बहुवचन न स्यात् । तस्मात् साम्न एव उपगानं, न छिद्रमात्रस्येति सिद्धम् ॥ ११ ॥

1. क. केचित्तु तदुत्तर इति सूत्रं पठन्ति । तदानीं तच्छब्देन मन्द्रपरामर्शः, मन्द्रादुत्तरो मध्यमः स्वर. इति स एवार्थ इति पाठः ।
2. क. मध्यत् साम्नोनिधनं तत्र सर्वत्र उपरमेयुः ।
3. द्रा-३-४-२ । 4. द्रा-३-४-५ ।

तत्रापि निधनभक्तेरप्युपगानमित्येके—

३४३. [1] एकाक्षरेषु नोपरमन्ति ॥ १२ ॥

[2] साम्नामेकाक्षरेषु निधनेषु नोपरमेयुः ॥ १२ ॥

एवमुपगानविधिं समाप्य उद्गातॄन् प्रत्याह—

३४४. ते स्वां स्वां भक्तिमनुच्छ्वसन्तो ब्रूयुः ॥ १३ ॥

[3] स्पष्टम् ॥ १३ ॥

३४५. पदे नोच्छ्वसेयुः स्तोभे वा ॥ १४ ॥

यद्यनुच्छ्वा[4]सं कर्तुं न शक्यते तदा पदस्य मध्ये स्तोभस्य तु मध्ये वा उच्छ्वसेयुः ॥ १४ ॥

३४६. [5]नान्तरेण पदस्तोभौ ॥ १५ ॥

सर्वथा न पदान्ते वा स्तोभान्ते वेत्यर्थः । तथा च सूत्रपरिशेषे जैमिनिनोक्तं, "सर्वत्र्वपादमारभ्यारभेतान्तरेण पदे(न)व्यधान्यादिति । तथा न स्तोभान्ते, नवापदान्तेऽवारभेत् (कृतं तत्रैतत्, साम्नो यत्पादान्ता इति) उत्तरस्य पदस्यारभ्याऽपान्यात्, यथाक्रमणादाक्रमणमाक्रम्य अपान्यात् तादृक्त दिति ॥ १५ ॥

---

1. ड. तथाप्येके एकाक्षरेषु नोपरमन्ति । 2. ड. पुस्तके तद्व्याख्या, "तत्रापि निधनेषु यानिएकाक्षराणि निधनानि तेषु एके शाखिनः नोपरमन्ति । कुर्वन्त्येवोपगान इत्यर्थः ॥ 3. ड. सर्वस्तोत्रेष्वनुवर्तत एव ।

4. ड. अनुच्छ्वासः ।

5. ड "नान्तरेण पदे नस्तोभौ" इति सूत्रं, व्याख्या-द्वयोः पदयोः मध्ये नोच्छ्वसेत् । न च विजातीययोः स्तोभयोरिति ।

३४७. *यत्र वोपपद्येत न तान्त. कुर्यादिति ॥ १६ ॥

अथवा किमनेन निर्बन्धन? यत्र यत्राशक्यत्वादुच्छ्वास आपतेत्तत्रोच्छ्वसेयुरेव । नह्यनुच्छ्वासेन तान्त कर्मकर्तुं शक्नुयादिति । एव सर्वस्तोत्र साधारणमुक्तम् ॥ १६ ॥

अथ प्रवृत्तमेव वहिष्पवमान प्रत्याह—

३४८. प्रस्तर प्रतिगृह्य प्रस्तोता ब्रह्मन् स्तोष्यामः प्रशास्तरित्युक्त्वोद्गात्रे प्रयच्छेत् ॥ १७ ॥

उपवेशनानन्तर अध्वर्युणा दत्त प्रस्तर प्रतिगृह्योद्गात्रे प्रयच्छेत् ॥ १७ ॥

३४९. तेन दक्षिणांजङ्घामुपहत्य युञ्ज्यात् स्तोममग्ने[1]दमेजसे'ति ॥ १८ ॥

तेन प्रस्तरेण स्वीया दक्षिणाजघा उपस्पृश्य स्तोम युञ्ज्यात् - मन्त्रजपएव स्तोम योग ॥ १८ ॥

३५०. "अभ्रं[2]करिष्या"मीति [3]जपेत्तूष्णीं चात्वालमुदपात्र चावेक्षेरन् ॥ १९ ॥

स्पष्टम् ॥ १९ ॥

*चतुरवराध्यां उपगास्यु इत्यारभ्य यत्रवोपपद्येत इत्यन्तसूत्रस्थाने लाट्यायने, अपरेणोद्गातृन् त्र्यवरार्द्ध्या उपगा ॥ चतुरवराध्यनिके । त एतेनाक्षरेण उपगायेयु होइति मन्द्रस्वरेण सन्तत सहर्याच्येपु आरमन्त । तस्मात् त्र्यन्तरेण स्त्यु । समेन वा प्रात सवने एकान्तरेण वा ॥ एतानि सूत्राणि सन्ति ।

1 ऋ-वा-२ ३ ५ । 2 ता ब्रा २ ३ ६ । 3 ३ अत्र करिष्यामीतिजपेत् । तूष्णीं चावेक्षेरन् । सामप्रति आर्तिरत्यम् । तूष्णीं वा । एवं चत्वारि सूत्राणि ।

३५१ सामासिप्रतिमामाहीत्यादित्यं तूष्णीं[1] वा ॥ २० ॥

स्पष्टम् ॥ २० ॥

३५२. सकृद्धिंकृत्य बहिष्पवमानेन स्तुवीरन् ॥ २१ ॥

[2]कल्पकारेण कस्मिंश्चित्, ज्योतिष्टोमप्रभेदः उक्तः । अथातो यज्ञायज्ञीयानुरूपो बृहदग्निष्टोमसामेति । तत्र बहिष्पवमानेप्रथमस्तोत्रीये गायत्रं गीत्वा दविद्युतत्यारुचेत्यनुरूपे तृचे यज्ञायज्ञीयं गेयम् । तदानीं सामभेदात्पृथक् हिंकारप्रसक्तौ तन्निवृत्त्यर्थं सकृदिति वचनमिति ॥ २१ ॥

अत्र ब्राह्मणे [3]गायत्रं सामाधिकृत्य द्विरवनर्दद्धिंकुर्यात्तृतीयमिति सामान्येनोक्तं, तद्विशिनष्टि—

३५३. अहिंकृता प्रथमारेतस्या हिंकृताः पराः ॥ २२ ॥

बहिष्पवमाने प्रथमावर्जं उत्तरास्स्वेव हिंकारः कार्यः, अहिंकृतैव प्रथमा । सारेतस्येति चोच्यते । संज्ञाकरणं व्यवहारार्थम् । "ऊ[4]र्ध्वं रेतस्याया द्व्यक्षर"मित्यादौ । ननु च *षड्विंशब्राह्मणे प्रथमायां हिंकारनिषेधात् अहिंकृता प्रथमेति

---

* या प्रथमा तां अन्नाद्यं ध्यायन् गायेत् । रेतस एव तत्सिक्ताय अन्नाद्यं प्रतिदधाति न हिंकुर्यात् । यद्धिंकुर्यात् वज्रेण हिंकारेण रेतः सिक्तं विच्छिन्द्यात् इति षड्विंशे २-२-४ to ७ ॥

---

1. अवेक्षेरन्नित्यनुषङ्गः । 2. ८ सकृद्वचनं किमर्थमिति-उच्यते स्तोत्रान्तरेषु सर्वेषु बहुकृत्वः हिंकार दर्शनात्, बहिष्पवमानेऽपि तच्छङ्का स्यादिति तन्निवृत्यर्थम् । वेजिवाह भस्यकारेण । 3 ता ब्रा-७-१-२ । 4. ब्रा-२१-२-१२ ।

माध्यन्दिने पवमाने, सूर्योपुनक्तिवत्यार्भवे पवमाने स्यात्। उत्तर सवनद्वयमधिकृत्य तयो प्रत्यक्षमाम्नातत्वात् ॥ १ ॥

३७० विहार्य धानञ्जय्यः ॥ २ ॥

अग्नेस्तेजसे-न्द्रस्येन्द्रियेण सूर्यस्य वर्चसेति षण्णा पदाना विहृत्य प्रयोग धानञ्जय्य आह ॥ २ ॥

तमेव दर्शयति—

३७१. अग्नेस्तेजसा बृहस्पतिस्त्वेति प्रातरसवने, इन्द्रस्येन्द्रियेण बृहस्पतिस्त्वेति माध्यन्दिने, सूर्यस्येति तृतीय सवने ॥ ३ ॥

प्रतिसवन द्वे द्वे पदे विभजेत्, बृहस्पतिस्त्वेति प्रत्येकमनुषङ्गः ॥ ३ ॥

३७२. सर्वैरेकैकं यथाम्नायं शाण्डिल्यः ॥ ४ ॥

अग्नेस्तेजसेत्यादिभि सर्वैरपि षड्भि पदै अविहृतैरेव प्रतिसवन स्तोमयोगो यथाम्नाय कर्तव्य । यथाम्नायमिति वचन बृहस्पतिस्त्वेत्येतस्यानुषङ्गनिवृत्त्यर्थम् ॥ ४ ॥

३७३ साम्ने साम्ने हिंकुर्युः ॥ ५ ॥

उत्तरयोः पवमानयो पृथक् पृथक् साम्ने हिंकुर्यु । न बहिष्पवमानवदादौ [1]सकृदेव ॥ ५ ॥

1 ऋ ३-४-२१।

३७४ "[1]वृषकोऽसि' 'स्वरोऽसीति' यजमानवाचने ॥ ६ ॥

[2]श्येनोसीति यजमानवाचनस्थाने वृषकोसीति माध्यन्दिने स्वरोसीति तृतीयसवने ॥ ६ ॥

३७५ स्तुत्वा बहिष्पवमानेन प्रस्तरादुभयतः परिच्छिद्य *तृण-श्चात्वाले प्रविद्ध्येद्यदिस्तुतं यदिवा(थ)थस्तुष्टुतमर्वा-क्स्तुतं यदिवातिष्टुत यत्तयोरन्येन दिव[3]मारुहेम इम-मन्येन जयेम लोकमिति ॥ ७ ॥

प्रस्तरात्तृणमादाय तस्य मूलमग्रञ्च छित्त्वा मध्यभाग चात्वाले निरस्येत्, यदिस्तुतमिति मन्त्रेण ॥ ७ ॥

३७६. तत्रैवोदपात्रं निनयेत्समुद्रं वः प्रहिणोमि स्वां योनिमपि-गच्छताऽरिष्टास्मन्वा भूयास्म मा परासेचि नो धनमृहति ॥८॥

स्पष्टम् ॥ ८ ॥

३७७. बहिर्वेद्युदञ्चोऽयुञ्जि पदान्युत्क्रामेयुः प्राग्दशभ्य ॥ ९ ॥

उत्थाय वहिर्वेद्युदङमुखा अयुग्मानि पदानि प्राग्दशभ्यः उत्क्रामेयु । त्रीणि पञ्च सप्त नववा । न दश परम् ॥ ९ ॥

३७८ अभिदक्षिणमावृत्याऽऽवृत्याग्नीद्ध्रीय बहिष्पवमानर्चोऽधी-यीरन् ॥ १० ॥

प्रदक्षिणमावृत्याग्नीद्ध्रीय अग्नि गत्वा, तस्य पश्चादुप-विश्य बहिष्पवमानर्चोऽधीयीरन्-जपेयु ॥ १० ॥

---

*परिच्छिद्यतृण चतुरङ्गुल चात्वाले प्रविद्धयेद्यदिस्तुत यदि वाद्य इति लाट्यायने ॥

1 ता ब्रा १५-१२-१५। 2 द्रा-३-४ २०। 3 इ दिवमारु।

३७९ अनुव्याहार्षीन्मामिति [1]यमविश्वकेत तस्मा आग्नीद्ध्री॰य आहुतिवज्रं प्रहरेत् 'यज्ञयज्ञतउपचते नमश्चते सत्योसि सत्यसंस्कृतस्तस्य ते य ऊन योऽकृत योतिरिक्तमदर्शं तस्य प्राणेनाप्यायस्व स्वाहे'ति ॥ ११ ॥

उद्गातुरूनातिरिक्तकरणदोषोद्भावनेन आक्षेपोक्तिरनुव्याहार । य ऊन योतिरिक्तमिति मन्त्रलिङ्गात्, आक्षिप्तवानय मामिति य मन्यते तमुद्दिश्याग्नीद्ध्रीये आहुतिवज्रं प्रहरेत्। वज्रं प्रहरन्निव आहुतिं जुहुयादित्यर्थं ॥ ११ ॥

३८० न व्यभिचरेदिति धानञ्जय्यः ॥ १२ ॥

अभिचार एव व्यभिचार । [2]'य एनमनुव्याहरति स आर्तिमार्च्छती'ति श्रुते, स्वयमेव नश्यतः किमभिचारेणेत्यभिप्राय ॥ १२ ॥

३८१. अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र ॥ १३ ॥

[3]अहर्गणेषु प्रथमादह्नोऽन्यत्र सदसि बहिष्पवमानस्तुति कार्या न चात्वालदेश इति ॥ १३ ॥

३८२. आद्यन्तयोऽस्तुसत्रेषु ॥ १४ ॥

आद्यन्तयोरिति पञ्चम्यर्थे सप्तमी । अन्यत्रेत्यनुवर्तते । सत्रेष्वाद्यन्ताभ्यामहोभ्याः अन्यत्र सदस्येव बहिष्पवमानमिति । श्रुत एव व्याख्यायत । गवामयने विषुवति बहिष्पवमानस्य

1 य वर्मिणि शङ्के । 2 ता ब्रा ६-४ १० ।
3 अ हिरात्रप्रभृत्यहीनेषु ।

परमतेन [1]चात्वालस्तवनविधानात्, स्वमतेन सदसि स्तवनमिति गम्यते । यथोक्तं, 'बहि[2]रस्यैके बहिष्पवमानेन स्तुवत' इति । तेन पञ्चम्यर्थे सप्तमीतिनिर्णयः ॥ १४ ॥

३८३. प्राग्धिष्ण्यविहरणान्निष्क्रम्यतृणप्रासन प्रभृति समापयेयुः ॥ १५ ॥ ×

यदा सदसि बहिष्पवमानं तदा स्तुत्यनन्तरं धिष्ण्यानि विहरणात् प्रागेव, सदसो निष्क्रम्य चात्वाले तृणप्रासन[3]प्रभृति ऋग्जपान्तं कुर्युः ॥ १५ ॥

३८४. वैदत्रिरात्रे सत्र न्यायं गौतमः ॥ १६ ॥

"[4]त्रयस्त्रिवृतोऽतिरात्रा' इति वैदत्रिरात्रस्यक्लृप्तिः । तस्योभयतोऽतिरात्रत्वात् सत्राणाञ्च तथा विधत्वात् सत्रन्यायः स्यात्, तेन आद्यन्तयोस्तुसत्रेष्विरयेतत् प्रवर्तते ॥ १६ ॥

३८५. अहीनन्यायं धानञ्जय्यः ॥ १७ ॥

स्वत एवाहीनधर्मत्वात् अहीनधर्म एवेति ॥ १७ ॥

३८६. मन्द्रे प्रातस्सवने स्तुवीरन् ॥ १८ ॥

मन्द्रमध्यमक्रुष्टानि त्रीणि च वाचः स्थानानि । तेषां प्रथमेन प्रातः सवने स्तुतिः कार्या ॥ १८ ॥

३८७. उत्तरोत्तरमुत्तरयोः सवनयोः ॥ १९ ॥

उत्तरयोः सवनयोरुत्तरोत्तरस्वरयुक्तं स्तवनं कार्यमिति ॥ १९ ॥

---

1. द. चात्वालवेदे । 2. ग्र. ८-२-२८ । 3. ग्र ४-१.७ ।
4. ता-ब्रा-२१ ३-१

३८८. *समेनवोभयोः ॥ २० ॥

अथवा समानेनैव स्वरेणोत्तरयोस्सवनयो, मध्यमेन क्रुष्टेनवेति ॥ २० ॥

३८९. एतस्यां वेलायां प्राश्नीयुः ॥ २१ ॥

×रागत प्राप्तस्य प्रातरशनस्याय कालनियम[1]। केचित्तु आतृतीयसवनसमाप्ते इत परं न भोक्तव्यमित्याहु ॥२१॥

३९०. अनुसवनन्तु सत्रेषु ॥ २२ ॥

सत्रेष्वनुसवन भोजनम् ॥ २२ ॥

कस्मिन् काले इति चेत्—

३९१. सवनप्रुत्तीयान् भक्षयित्वा सत्रेषु नाराशंसेषु ॥ २३ ॥

तेषु नाराशंसेषु सत्रेषु भोजनमिति ॥ २३ ॥

इति चतुर्थपटले प्रथम खण्डः



अथ द्वितीयः खण्डः

३९२. वपायां हुतायां धिष्ण्यानुपतिष्ठेरन् ॥ १ ॥

सवनीयस्य पशोर्वपाया हुताया धिष्ण्योपस्थानं कार्यम् ॥

---

* 'मध्यमेन वोभयो' इति लाट्यायने ॥

× साय प्रातर्द्विजातीनां अशन श्रुति चोदितम् ।
नान्तराभोजन कुर्यात् अग्निहोत्रसमोविधि ॥
इति मनुना दिवा रात्रौ च नियमितस्य भोजनस्य-अय कालनियम ।

1 ह तेनाऽन्तराले सायमशने न काल नियम ।

३९३. चात्वाले तु मार्जनं पूर्वं सत्रेषु[1]इदमापः प्रवहतावद्यं च
मलञ्च यत् यच्चाभिदुद्रोहानृतं यच्चशेपेअभीरुणं आपो
मातस्मादेनसो दुरितात्पान्तु विश्वतः नि[2]र्मामुञ्चामि
शपथात् निर्मा वरुणादुत निर्मा यमस्य पड्विंशात्
सर्वस्मादेवकिल्बिषात् [3]सुमित्र्यान आप ओषधयस्सन्तु,
दुर्मित्र्यास्तस्मै सन्तु, योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इति ॥ २

सर्वत्र सत्रेषु तु प्रागुपस्थानान्मार्जनं कृत्वा धिष्ण्योपस्थानं। जैमिनिस्तु सत्रेष्वपि क्रतुषु मार्जनमाह। अत्र धिष्ण्योपस्थाने "[4]अदृश्रमस्यकेतव" इति मन्त्रः प्रथमोऽधीतः। सूत्रकारस्तु तन्मन्त्रमत्राविनियुज्योत्तरत्र रौहिण्युप[5]स्थाने विनियुङ्क्ते, तत्र निदानं मृग्यम्। अन्येत्वाहुः प्रत्यक्षाम्नानबलात्ताण्डिशाखिनामस्माकमपि आदित्योपस्थानं अदृश्रमस्यकेतव इत्येतेन कार्यं इति। जैमिनिरप्यादित्योपस्थानं प्रथममनेन मन्त्रेणोक्तवानिति ॥

३९४. [6]सम्राडसीत्याहवनीयमुपस्थायोदञ्चो गत्वाऽऽ
स्ताव चात्वालशामित्रानुदङ्मुखास्तुथोनभोऽसंमृष्ट इति ॥ ३ ॥

उत्तरवेद्याः पश्चात् स्थित्वा सम्राडसीत्योत्तरवेदिकमाहवनीयमुपस्थाय, उ[7]दञ्चो गत्वा बहिष्पवमानस्तुतिदेशे तिष्ठन्त उदङ्मुखास्तमास्तावदेशं चात्वालं शामित्रञ्च तुथोनभोऽसंमृष्ट इति त्रिभिर्मन्त्रैः यथाक्रममुपतिष्ठेरन् ॥ ३ ॥

1. बा–स–६-१७। 2. बा-स-१२-९०। 3. बा-स-६-२२।
4. ता-ब्रा-१-४-१। 5 ब्रा-४-३-१। 6 ता-ब्रा-१-४-२।
7. ता-ब्रा-१-४-३।

३९५. [1]विभुरसीत्याग्नीध्रीयमुपतिष्ठेरन् ॥ ४ ॥

गतम् ॥ ४ ॥

३९६. समुत्तरेण सञ्चरस्सर्वत्र ॥ ५ ॥

आग्नीध्रीयमग्निमुत्तरेणैव सर्वदा सञ्चरः कार्यः प्राञ्च प्रत्यञ्च गच्छद्भिः ॥ ५ ॥

३९७. दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्धानमाहवनीयञ्च पृष्ठहोमाय ॥ ६ ॥

उत्तरयोः सवनयोर्यस्मिन् काले हविर्धानं प्रविशति ग्रावयोजनादिकार्यार्थम् । यदा च पृष्ठहोमार्थमाहवनीयं प्रस्तोता ग[2]च्छति, तदा दक्षिणेन आग्नीध्रीय सञ्चरः कार्यः । ततोऽन्यत्र सर्वत्रोत्तरेणैवेति । पृष्ठहोमायेति विशेषणं प्रायश्चित्तहोमेषु निवृत्त्यर्थम् ॥ ६ ॥

३९८ पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो[3]वह्निरिति होतुर्धिष्ण्यम् ॥ ७ ॥

उत्तिष्ठेरन्निति शेषः ॥ ७ ॥

३९९. स्वात्र इति मैत्रावरुणस्य ॥ ८ ॥

मैत्रवारुणस्य धिष्ण्यं 'स्वा[4]त्र' इत्युपतिष्ठेरन्, सदसोद्वार्येव तिष्ठन्तः ॥ ८ ॥

४००. 'तुथ उशि[5]घंधारिरवस्यु'रिति ब्राह्मणाच्छंसिप्रभृतीनां उदञ्चः ॥ ९ ॥

---

1. ता-ब्रा-१-४-४ । 2. ब्र ६-१-१ । 3. ता. ब्रा.-१-४-५ ।
4 [redacted] ब्रा-१-४-६ । 5. ता. ब्रा. १-४-७ ।

तुथ इत्यादि मन्त्रचतुष्टयस्य प्रतीकोपादानं । ब्राह्मणा-च्छंसि, पोतृ,नेष्टृच्छावाकानां चतुर्णां चतुर्भिर्मन्त्रैः तत्रैव तिष्ठन्त उदङ्मुखा उपतिष्ठेरन् ॥ ९ ॥

४०१. 'शु[1]न्ध्युरिति'मार्जालीयं तत्रैव तिष्ठन्तः ॥ १० ॥

तत्रैव सदसो द्वारि तिष्ठन्तः मार्जालीयं दक्षिणामुखा उपतिष्ठेरन्[2] ॥ १० ॥

४०२. ऋत[3]धामेत्यौदुम्बरीम् ॥ ११ ॥

सदसो द्वार्येव तिष्ठन्तः प्रत्यङ्मुखा औदुंवरीमुपतिष्ठेरन् ॥

४०३. [4]स[5]म्रा[6]ड् इति ब्रह्मणस्सदनम् ॥ १२ ॥

द्वार्येवतिष्ठन्तः । केचित्तु ब्रह्मणो धिष्ण्यसदनोपस्थानं साग्निचित्ये क्रतौ नान्यत्रेत्याहुः । तदयुक्तम्; सूत्रे विशेषाकथनात् । अनिष्टकचित्कस्यापि ब्रह्मसदनस्य औदुंवरी पत्नीशालादिवत् धिष्ण्यत्वेनोपपत्तेश्च ॥ १२ ॥

४०४. उत्तरेण सदोगत्वाऽन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तः 'अहि[5]रिति' प्राजहितम् ॥ १३ ॥

ब्रह्म सदनोपस्थानानन्तरं, उत्तरेण सदो गत्वा सदसः पश्चादन्तर्वेदि प्रत्यङ्मुखास्तिष्ठेरन् ॥ १३ ॥

४०५. 'अ[6]ज' इति गार्हपत्यम् ॥ १४ ॥

यस्माद्दोत्तरवेदिकमग्निं प्रणयन्ति स गार्हपत्यः ॥ १४ ॥

1. ता. ब्रा. १-४-८ । 2. द. उपतिष्ठेरन् सामर्थ्यादिति ।
3. ता. ब्रा. १-४-९ । 4. ता-ब्रा-१-४-१० । 5. ता-ब्रा-१-४-११ ।
6. ता-ब्रा-१-४-१२ ।

३९५. [1]विभूरसीत्याग्नीध्रीयमुपतिष्ठेरन् ॥ ४ ॥

गतम् ॥ ४ ॥

३९६. तमुत्तरेण सञ्चरस्सर्वत्र ॥ ५ ॥

आग्नीध्रीयमग्निमुत्तरेणैव सर्वदा सञ्चरः कार्यः प्राञ्च च प्रत्यञ्च गच्छद्भिः ॥ ५ ॥

३९७. दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्धानमाहवनीयञ्च पृष्ठहोमाय ॥ ६ ॥

उत्तरयोः सवनयोर्यस्मिन् काले हविर्धानं प्रविशति ग्रावयोजनादिकार्यार्थम् । यदा च पृष्ठहोमार्थमाहवनीयं प्रस्तोता ग[2]च्छति, तदा दक्षिणेन अग्नीध्रीयं सञ्चरः कार्यः । ततोऽन्यत्र सर्वत्रोत्तरेणैवेति । पृष्ठहोमायेति विशेषणं प्रायश्चित्तहोमेषु निवृत्त्यर्थम् ॥ ६ ॥

३९८ पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो[3]ऽवह्निरिति होतुर्धिष्ण्यम् ॥ ७ ॥

उत्तिष्ठेरन्निति शेषः ॥ ७ ॥

३९९. [4]श्वात्र इति मैत्रावरुणस्य ॥ ८ ॥

मैत्रावरुणस्य धिष्ण्यं 'श्वा[4]त्र' इत्युपतिष्ठेरन्, सदसोद्वार्येव तिष्ठन्तः ॥ ८ ॥

४००. [5]'तुथ उशि[5]गसि[5]स्वस्तु'रिति ब्राह्मणाच्छंसिप्रभृतीनां उदञ्चः ॥ ९ ॥

---

1. ता-ब्रा-१-४-४ । 2. ब्रा ६-१-१ । 3. ता. ब्रा-१-४-५ ।
4. ता ब्रा-१-४-६ । 5. ता. ब्रा. १-४-७ ।

शुथ इत्यादि मन्त्रचतुष्टयस्य प्रतीकोपादानं । ब्राह्मणां-च्छंसि, पोतृ,नेष्टृच्छावाकानां चतुर्णां चतुर्भिर्मन्त्रैः तत्रैव तिष्ठन्त उदङ्मुखा उपतिष्ठेरन् ॥ ९ ॥

४०१. 'शु[1]न्ध्युरिति'मार्जालीयं तत्रैव तिष्ठन्तः ॥ १० ॥

तत्रैव सदसो द्वारि तिष्ठन्तः मार्जालीयं दक्षिणामुखा उपतिष्ठेरन्[2] ॥ १० ॥

४०२. ऋत[3]धामेत्यौदुम्बरीम् ॥ ११ ॥

सदसो द्वार्येव तिष्ठन्तः प्रत्यङ्मुखा. औदुंबरीमुपतिष्ठेरन् ॥

४०३. '[4]स'म्रा'ड् इति ब्रह्मणस्सदनम् ॥ १२ ॥

द्वार्येवतिष्ठन्त. । केचित्तु ब्रह्मणो धिष्ण्यसदनोपस्थानं साग्निचित्ये क्रतौ नान्यत्रेत्याहु. । तदयुक्तम्; सूत्रे विशेषाकथनात् । अनिष्टकचित्कस्यापि ब्रह्मसदनस्य औदुंबरी पत्नीशालादिवत् धिष्ण्यत्वेनोपपत्तेश्च ॥ १२ ॥

४०४. उत्तरेण सदोगत्वाऽन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तः 'अहि[5]रिति' प्राजहितम् ॥ १३ ॥

ब्रह्म सदनोपस्थानानन्तरं, उत्तरेण सदो गत्वा सदसः पश्चादन्तर्वेदि प्रत्यङ्मुखास्तिष्ठेरन् ॥ १३ ॥

४०५. 'अ[6]ज' इति गार्हपत्यम् ॥ १४ ॥

यस्मादौत्तरवेदिकमग्निं प्रणयन्ति स गार्हपत्यः ॥ १४ ।

1. ता. ब्रा. १-४-८ । 2. द्र. उपतिष्ठेरन् सामर्थ्यादिति ।
3. ता. ब्रा. १-४-९ । 4. ता-ब्रा-१-४-१० । 5. ता-ब्रा-१-४-११ ।
6. ता-ब्रा-१-४-१२ ।

४०६. 'सग[1]रा' इति दक्षिणाग्नेरायतनम् ॥ १५ ॥

स्पष्टम् ॥ १५ ॥

४०७. क्व[2]य इति दक्षिणं वेद्यन्तम् ॥ १६ ॥

दक्षिणमहावेदि पार्श्वं दक्षिणामुखा उपतिष्ठेरन् ॥ १६ ॥

४०८. तत्रैव तिष्ठन्तः सर्वान्समन्वीक्षमाणाः पा[3]तमेति ॥ १७ ॥

उपस्थितान् सर्वानेव धिष्ण्यान् पुनः समीक्षमाणाः, पातमेति सहृत्योपतिष्ठेरन् ॥ १७ ॥

४०९. * एकैकमुपस्थायैतद् ब्रूयुरिति शाण्डिल्यः ॥ १८ ॥

तत्तत् धिष्ण्यमुपस्थाय तदानीमेव त[4]त्तत्समन्वीक्षमाणाः पातमेति मन्त्र ब्रूयुः । न सर्वोपस्थानान्त इति शाण्डिल्यः ॥ १८

ननु च प्रत्येकं पातमेत्युपस्थाने बहुवचनविरोधः स्यादत आह—

४१०. बहुशब्दानेकवत् कुर्वन्तः ॥ १९ ॥

बहुवचनान्येकवचनवत् कुर्वन्त इत्यर्थः । तद्यथा, सम्राऽसि कृशानू पाहि माऽग्ने रौद्रेणानीकेन पिपृहि मा नमस्तेऽस्तु मा मा हिंसीरिति ॥ १९ ॥

॥ इति चतुर्थपटले द्वितीय. खण्डः ॥



* लाट्यायने, ४०९, ४१० सूत्रद्वय एकमेव ।

1. ता-ब्रा१-४-१३ । 2 ता-ब्रा-१-४-१४ 3. ता ब्रा-१-४-१५ ।
4. इ तं त धिष्ण्य

## अथ तृतीयः खण्ड

अथ शाखान्तरीयमुपस्थान दर्शयति—

४।१ रौरिकीणिचेत् कुर्युरादित्यं प्रथममुपतिष्ठेरन्म[1]घ्वना-
मिति ॥ १ ॥

रौरिकिणो नाम केचित् शाखिन, तैरधीतानि यजूंषि रौरिकीणि । तानि यदिकुर्युः तदा प्रथम'मघ्वना'मित्यादित्यो-पस्थानम् ॥ १ ॥

४।२. आहवनीयमुपस्थाय तमेवाऽ[2]ग्निजोसि जायमान इत्य*
पिजोसि नवजात इति वा यमग्निमनुप्रहरन्ति तमभि-
प्रेत्य ॥ २ ॥

सम्राडसीत्याहवनीयमुपस्थाय तमेव पुनरपिजोसिजाय-मान अपिजोमिनवजात इति द्वयोर्मन्त्रयोरन्यतरेणोपतिष्ठेरन् ॥

नन् च किमर्थं पनरुपस्थानमिति, अत्रेदमुच्यते, यमग्नि-मनुप्रहरन्ति तमभिप्रेत्य—

यमग्नि मथित्वाऽऽहवनीये प्रहरन्त्यध्वर्यव तमभिप्रेत्य पुनरुपस्थानम् । यद्यप्ययमग्नि पृथङ् नोपलभ्यते, तथापि तद्-बुद्धयोपस्थान कार्यम् । तदुक्त अभिप्रेत्येति । तथा आश्वलाय-

---

*अपिजोसि जायमान इति लाट्यायनपाठ ।

---

1 ला श्रौ १४१ 2 ड अपिजोसि ।

नोऽपि, यू[1]पादित्याहवनीय *निर्मन्थ्यानिति मथित्वा प्रहृतवन्तः[2] तस्याग्नेरुपस्थानमुक्तवान् ॥ २ ॥

४१३. यदा चात्वालमथोत्करं तुमुलो स्याक्रन्दकृत्वेति ॥ ३ ॥

यदा चात्वालमुपस्थि[3]तं तदा तुमुलोसीत्युत्करं उपतिष्ठेरन् ॥ ३ ॥

४१४. यदाशामित्रं अथ यत्रोबद्ध्यन्निखनन्त्यू[4]वध्यगोहोसि पार्थिव इति ॥ ४ ॥

यत्राध्वर्यवः ऊवध्य निखनन्ति त प्रदेश ऊवध्यगोह इति उपतिष्ठेरन् । ऊवध्यः-पशुशकृत्, तस्य [5]गूहनार्थश्वभ्रः ऊवध्यगोहः ॥ ५ ॥

४१५. यदाऽऽग्नीध्रीयमथयत्राच्छावाक आसीनो होतुर्युपहव-मिच्छत्युपहव्योसिनमस्त इत्युपहव्योसि वनुनपा इति वा ॥ ५ ॥

आग्नीध्रीयोपस्थानानन्तर अच्छावाकस्योपहवस्थानं उपस्थेयम् । किं पुनः तत् यत्रासीनोऽच्छावाको होतुराज्ञामाकाङ्क्षते, [6]उपास्मान् ब्राह्मणाह्वयध्वमिति ॥ ५ ॥

४१६. यदा ब्रह्मणः सदनमथ सदस्यस्य सदस्योऽसि मलिम्लुच इति ॥

*निर्मन्थ्यानग्नयः सगरास्सगरा अग्नयः सगराःस्थ इत्यादिना आश्वलायने उपस्थानमुक्तम् ॥ निर्मन्थ्यो नाम यत्राग्निः मथ्यते स देशः ॥

1. आश्व-श्रौ-६-२-१२ । 2. क प्रहृतवन्तः । 3. क. उपस्थितवन्तः । 4. ऐ-ब्रा-२-६-१६ । 5. क गूहनार्थश्वभ्रः । 6. क उपास्मान् ब्राह्मणान् ब्राह्मणाह्वयध्वम् ।

ब्रह्मसदनोपस्थानं कृत्वा सदस्यस्य सदनमुपस्थेयं सदस्योऽसीति मन्त्रेण ॥ ६ ॥

४१७. यदा दक्षिणं वेद्यन्तं अथ प्राजापत्यमसीति पत्नी
शालामैन्द्रमसीति सदो, वैष्णवमसीति हविर्द्धानं, ऐन्द्राग्न-
मसीति आग्नीध्रीयं वैश्वदेवमसीति वा ॥ ७ ॥

यदा दक्षिण वेद्यन्तमुपस्थितवन्तस्तदा प्राजापत्यमसीत्यादि मन्त्रचतुष्टयेन पत्नीशालादि चतुष्टयमुपस्थेयम् । [1]उक्तमुपस्थानं । शालापदेन दक्षिणवेद्यन्तोपि गृह्यते ॥ ७ ॥

४१८. अथ सर्वेव समस्तेन ॥ ८ ॥

[2] सर्वान् तान् यथापूर्वं समस्तेन मन्त्रेण उपतिष्ठेरन् ॥ ८ ॥

समस्तमेव मन्त्रं शाखान्तरीयं पठन्ति—

४१९. सर्वेस्थ सोम्यासस्सर्वे सोमं पिबत सर्वे
सोमस्यपीतिमानश्रवृण्वे पातमेति समानं परम् ॥ ९ ॥

[3] पातमाग्नमो रैद्रेणानीकेनेतिमन्त्रशेषोऽस्माकं रौरिकिणाश्च समान इत्यर्थ. । एवं शाखान्तरीयमुपस्थानम् ॥ ९ ॥

अथोपस्थानानन्तरकृत्यमाह—

४२०. [4]ऋतस्य द्वारौ स्थ इत्यपरौ द्वारबाहू सदसस्संमृज्य
मामा सन्ताप्तमिति प्रविशेयुः ॥ १० ॥

स्पष्टम् ॥ १० ॥

---

1. क. पुस्तके इद वाक्यद्वय नास्ति । 2. ब. सर्वान्ते यथा पूर्वं उक्तमुपस्थान तथा समस्तेन । 3 ब्रा–४–२–१७ । 4. ता-आ.१-२-१ ।

४२१. दक्षिणेनौदुंबरीं गत्वा तस्या उत्तरत उपविशेयुः,
[1]नमः सखिभ्य इति ॥ ११ ॥

इदमपि स्पष्टम् ॥ ११ ॥

४२२. पूर्वेण प्रस्तोतारं प्रतिहर्ता गच्छेत् ॥ १२ ॥

यदा दक्षिणेनौदुंबरीं गत्वा उपवेशनार्थमुदङ्मुखाः गच्छन्ति, तदा उद्गातुः सव्यपार्श्वं प्रतिहर्तापरित्यज्य प्रस्तोतुर्दक्षिणपार्श्वस्य उदङ्मुखो गच्छेदित्यर्थः ॥ १२ ॥

४२३. एतस्यां वेलायां समुपह्वयेरन् सर्वे सर्वेषु ॥ १३ ॥

उपह्वानमनुज्ञानम्। उपवेशनानन्तरं सर्वेषु यजमाना अन्योऽन्यं अनुजानीरन्। उपहूत इत्येवमनुज्ञाप्रदानम्। अनुज्ञानस्य च प्रार्थनापूर्वकत्वात् यजमाना उपह्वयध्वमिति प्रार्थनमर्थसिद्धम् ॥ १३ ॥

४२४. मिथोऽन्यत्र ॥ १४ ॥

सर्वेभ्योऽन्यत्र उद्गातॄणां मिथ एवोपह्वानं कार्यम्। नान्येषां अध्वर्य्वादीनाम्। तत्र उद्गाता प्रथम[2]मनुजानीयात्। ततः प्रस्तोतेतरौ। ततः प्रतिहर्तेतराविति ॥ १४ ॥

४२५. सर्वे यजमानम् ॥ १५ ॥

सर्वे त्रयोऽप्युद्गातारं यजमानमुपह्वयेरन्। उद्गातार उपह्वयध्वमिति यजमानेन प्रार्थितैस्सर्वैरुपहूत इत्यनुज्ञाः कार्या इति ॥ १५ ॥

---

1. आ-ब्रा-१-५-२। 2. क प्रथममितरौ।

४२६ द्वारबाहुसंमार्जनप्रभृत्येतत्सर्वं कुर्युः यदा धिष्ण्यानुपतिष्ठेरन् ॥ १६ ॥

यदा यदा धिष्ण्योपस्थानमुत्तरयो सवनयो क्रियते तदा तदा सर्वत्र तदनन्तर द्वारबाहु समार्जनप्रभृत्युपह्वानान्त कुर्यु ॥

॥ इति चतुर्थपटले तृतीय खण्ड ॥



अथ चतुर्थ खण्ड

अथोद्गातुरार्त्विज्यसमाप्ते प्रकार वक्तुमाह–

४२७. याजमानब्रह्मत्वे चेदुद्गाता कुर्यात् ॥ १ ॥

रोगादिना ब्रह्मयजमानयो स्वकार्याशक्तौ, तत् कर्म कर्तुमुद्गाता यदीच्छेदित्यर्थ । अत एवानुवादात् ज्ञायते, ऋत्विजामेकस्य कर्मान्तराचितरस्तत्कर्म कुर्यादिति ॥ १ ॥

अथ तत् प्रकारमाह––

४२८ *आग्नीद्ध्रीयमुपस्थाय पूर्वेण परिक्रामेत् ॥ २ ॥

आग्नीद्ध्रीयमुपस्थाय न पूर्वेण परिक्रामेत्–प्रदक्षिण मित्यर्थ ॥ २ ॥

४२९ सादस्यानुपस्थाय तत एवेक्षमाण पात्नीवतान्त ॥ ३ ॥

सदसि भवान् धिष्ण्या[1]नुपस्थाय तत एव सदसो द्वार्येव

* ४२७, ४२८, एतत सूत्रद्वय लाट्यायने एकमेव ।

1 ड होत्रीयप्रभृतीन ब्रह्मसदन पर्यन्तान इत्यधिक पाठ ।

४३७ निरस्त परावसुरिति दक्षिणातृण निरस्येत्[1] आवसो सदने सीदामीत्युपविशेत् ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

४३८. नमस्सखिभ्य पूर्वं सद्भ्यो नमो परसद्भ्यो भूर्भुवस्स्वर्बृहस्पतिः ब्रह्माह मानुषः ओमि- त्युक्त्वा औदुम्बरीं गत्वोपविशेत् ॥ १२ ॥

नम सखिभ्य इति मन्त्रजप ब्रह्मोपवेशनार्थ, बृहस्पतिर्ब्रह्माह मानुष इति मन्त्रलिङ्गात् । तेन ब्रह्मत्वविधान प्रकरणे पक्ष्यति, 'उक्त सदस्युपवशन'मिति[3] तत्सिद्ध भवति । अथ मन्त्रजपानन्तरमौदुवरी गत्वा समन्त्रकमौद्गात्रमुपवेशन कार्य- मिति ॥ १२ ॥

४३९ अनुपविशेयातामितरौ ॥ १३ ॥

[4]औद्गात्रोपवेशनमेवानुपविशयाता, न ब्रह्मोपवेशनकाल इत्यर्थ ॥ १३ ॥

४४० एतेनानुपूर्व्येण सर्वं यथासनञ्चिकीर्षेत् ॥ १४ ॥

योऽय सदस्युपवेशनक्रम अनेनैव क्रमेण सर्वं याजामान ब्रह्मत्वमौद्गात्रञ्च कर्तुमिच्छेत् । यथासनमिति स्वे स्वे स्थान इत्यर्थ ॥ १४ ॥

४४१ ग्लायेच्चेदप्यौदुम्बर्यैव ॥ १५ ॥

---

1 इ अत्र निरस्येदित्यनतरं आवसोरित्यत्र सूत्रम् ।

2. द्रा-४ ३ २ । 3 इ तत्र मन्त्रजपो ब्रह्मोपवेशनमिति निसिद्ध । द्रा-१५-३-१६ । 4 इ इतरौ-प्रस्तोतृ प्रतिहर्तारौ ।

यद्युपवेशनत्रय स्वे स्वे स्थाने गत्वा कर्तुमशक्तः, तदा औदुम्बर्यामेवोपवेशनत्रयमपि तत्तन्मन्त्रत कार्यमिति । अध्यौदुम्बरीति सप्तम्यर्थेऽव्ययीभावः ॥ १५ ॥

४४२. सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनु उपविशेत् ॥ १६ ॥

सदस्यो नाम षोडशभ्यो ऋत्विग्भ्योऽन्य. कर्मणामुपद्रष्टेत्यापस्तंबः[1], सोऽप्युक्तेन प्रकारेण धिष्ण्यानुपतिष्ठन् ब्रह्माणमनु[2]प्रविशेत् ॥ १६ ॥

४४३. ब्राह्मणाच्छंसिनं वा ॥ १७ ॥

स्पष्टम् ॥ १७ ॥

४४४. तेनास्य समुपहवस्स्यात् ॥ १८ ॥

तेन ब्रह्मणा ब्राह्मणाच्छंसिना वा सदस्यस्य समुपहवोऽन्योन्यमनुज्ञान स्यात्, ब्रह्मन्नुपह्वयस्व सदस्योपह्वयस्वेति उक्ते, उपहूत इति प्रतिवचनम् ॥ १८ ॥

४४५. भक्षश्च समानः ॥ १९ ॥

सोमभक्षोऽपि तयोरन्यतरेण सदस्यस्य समानः एकस्मिन् चमसे सह भक्षणं कार्यमित्यर्थः ॥ १९ ॥

४४६. बीभत्सेयातां चेन्नानाचमसौ स्याताम् ॥ २० ॥

यदि ब्रह्मसदस्यावेकस्मिन् चमसभक्ष[3]णे बीभत्सेयातां, तदा पृथक्चमसौ स्याताम् । अतएव अनुवादात् ज्ञायते, आस्य संस्पृष्टेन चमसेन सोमभक्षण कार्यमिति । अन्यथा बीभत्साऽ-

1. आप-सू-१०-१-१०,११ । 2. द. अनु सदः प्रविशेत् ।
3. द. चमसेसह भक्षणादिति पाठभेद ।

भावात्। न हि चमसाद्धारा स्रावयित्वा भक्षणे बीभत्सा गन्धोप्यस्ति ॥ २० ॥

४४७. सर्पत्सु न शून्य सदः कुर्यात् ॥ २१ ॥

विसस्थिते सवने यदा ऋत्विजो नि सर्पन्ति, तदा तेषु नि सर्पत्सु शून्य सदो न कुर्यात्। निस्सर्पणकाले स्वय सदस्येव तिष्ठेदशून्यत्वायेत्यर्थः ॥ २१ ॥

४४८. तस्य दधिभक्षान्तं कर्म ॥ २२ ॥

तस्य दधि द्रप्स भक्षणान्त सुत्येऽह्नि कर्मेत्यर्थं ॥ २२ ॥

४४९. स निर्वेत सत्रेषु ॥ २३ ॥

सत्रेषु सदस्यो न वरणीय इत्यर्थं ॥ २३ ॥

४५०. विसंस्थिते सवने पूर्वया द्वारान्तरेण होतुर्धिष्ण्य मैत्रावरुणस्य च सञ्चरः ॥ २४ ॥

विसस्थिते—असमाप्ते सवनें, सवनमध्ये इति यावत्। होतुर्मैत्रावरुणस्य च धिष्ण्ययो यदन्तराल तेन सर्वेषा सञ्चर इति ॥ २४ ॥

४५१. तथयेत तथयेतम् ॥ २५ ॥

तत् तदानी सवनमध्ये यथेतमेव पुन प्रवेश कार्य ॥ २५

इति चतुर्थपटले चतुर्थ खण्ड

इति छन्दोगसूत्रस्य दीपे [2]धन्विविनिर्मिते।
चतुर्थ पटलो वृत्त वासुदेव प्रसीदतु ॥

चतुर्थपटल समाप्त



---

2 क दीपेऽर्शमन् धन्विना कृते

॥ अथ पञ्चमः पटलः ॥

प्रथमः खण्डः

४५२. चमसं प्रतिगृह्य प्रस्तोता दक्षिणऊरावाधाय दक्षिणेन पाणिना पिधायाऽऽसीत ॥ १ ॥

सवनमुखीयं च[1]मसाऽध्वर्युणाऽऽहृतं उद्गातॄणां चमसं प्रस्तोता प्रतिगृह्य स्वस्य दक्षिणऊरावाधाय होतुर्भक्षणकालं प्रतीक्षमाण आसीत ॥ १ ॥

४५३. उपहूयमानायामिडायामनूपधारयेदनुपघ्नन् ॥ २ ॥

इडोपह्वानकाले स्वं चमसमिडापात्रवदास्यसंमितं धारयेत् चमसस्थं सोमरसमनुपघ्नन् अङ्गुलीभिरस्पृशन्नित्यर्थः ॥ २ ॥

४५४. वषट्कर्तुरनुभक्षं सर्वत्र भक्षयेयुः । ३ ॥

वषट्कर्त्रा चमसेषु भक्षितेषु पश्चादुद्गातारः स्वीयं चमसं भक्षयेयुः ॥ ३ ॥

४५५. *एवमेव सर्वत्र ॥ ४ ॥

न केवलमत्र, सवनमुखीय प्रकारे सर्वत्र ॥ ४ ॥

४५६. मिथ उपहूयोद्गाता प्रथमः ॥ ५ ॥

उपहूयेत्यन्तर्भावितण्यर्थोयं उपह्वानमनुज्ञानं, मिथोऽनुज्ञाप्य त्रयोऽपि भक्षयेयुः । तत्रोद्गाता प्रथमं भक्षयेत् । मिथ उपहूयेति वचनादुद्गातृचमसं वषट्कर्ता **न भक्षयेदिति

*एतत् सूत्रं जाट्यायने नास्ति ।

**देवानां वा एतद्यज्ञस्य मुखं, यदुद्गातृचमसं ।
तस्मादुद्गातृचमसं नान्यो भक्षयेत् ॥ –षड्विंशब्रा-२-७-८

1. ङ चमसं अध्वर्युणा ।

गम्यते । यदि स्यात्तस्याप्यनुज्ञापन अवश्य कार्यं, 'नानुपहूतेन सोम पातव्य' इति श्रुते ॥ ॥

४५७. दक्षिणमनुबाहुदण्ड कृत्वा श्येन[1] इत्यवेक्ष्येन्द्रविति द्वि-रल्प भक्षयेत्, यथासवन छन्दास्यादिशन् ॥ ६ ॥

आत्मनोदक्षिण बाहुमनु, चमसस्य दण्ड कृत्वा, तिर्यङ् चमस धारयित्वा श्येनोनृचक्षा इत्यवेक्ष्य इन्द्रविन्द्रपीतस्येति द्विर्भक्षयेदल्पमल्प सकृन्मन्त्रेण सकृत्तूष्णीम् । यथा सवन छन्दास्यादिशन्नित्यर्थ । त्रिष्टु[2]प्छन्दस इति माध्यन्दिने । जगच्छ[3]-न्दस इति तृतीय सवने तथैवो[4]त्तरमन्त्र पाठादिति ॥ ६ ॥

४५८ [5]ऊर्ध्व इति मुख्यान् प्राणनाभिमृशेत ॥ ७ ॥

भक्षणानन्तर ऊर्ध्वस्सप्तऋषीनिति सप्तमुख्यान प्राणान् चक्षुषी नासिके श्रोत्र मुखञ्चाभिमृशेता ॥ ७ ॥

४५९ सोम[6]राजन्वीति हृदय, सोम[7]गीर्भिरितिनाभिम् ॥ ८ ॥

अभिमृशेतेत्यनुषङ्ग ॥ ८ ॥

४६० एवमितरौ कुर्वाता प्रतिहर्तापश्चात् ॥ ९ ॥

एवमेवेतरौ प्रस्तोतृप्रतिहर्तारौ भक्षण कुर्याताम् । तयो प्रतिहर्ता पश्चाद्भक्षयेत् ॥ ९ ॥

४६१. त स आप्याययेदभिमृशप्याप्यायस्वे[8]त्येतया गायत्र्या ॥

त चमस प्रतिहर्ता आप्याययेत । द्रोणकलशात्सोमरसमादाय तेन वर्धन आप्यायन, मन्त्रेण अभिमर्शनमात्र वा, द्वय-

1 ता बा १ ५ ३ ४ । 2 ता बा १ ५ १३ 3 ता-बा-१ ५ १६ ।
4 इ उत्तरमन्त्रपाठान । 5 ता बा १ ५ ५ । 6 ता बा १ ५ ६ ।
7 ता बा १ ५ ७ । 8 ता बा १-५ ८ ।

मप्युक्तं [1]कात्यायनेन,* "भक्षयित्वा मन्त्रेणालभेरन्, सोमं वा सिञ्चेयु"रिति । गायत्र्येति वचनं उत्तरत्र, '[2]गायत्र्यैवानुसवन' मिति सूत्रे आप्यायस्व, समेतु त इति, मन्त्रप्रतिपत्त्यर्थम् ॥ १०

४६२. सर्वे वा ॥ ११ ॥

सर्वे वा त्रयोऽप्युद्गातारश्चमसमाप्याययेयुः ॥ ११ ॥

**तां तृतीयसवने द्विर्ब्रूयुः ॥ १२ ॥

[illegible]आप्यायस्वेत्येतामृचं तृतीयसवने द्विरुक्त्वाऽऽप्याययेत् [illegible] । जागतं हि तृतीयसवनमिति ॥ १२ ॥

सन्ते पयांसीति माध्यन्दिने ॥ १३ ॥

[illegible] पयांसीति त्रिष्टुभाऽऽप्याययेत् । त्रैष्टुभं हि माध्य-[illegible]ति ॥ १३ ॥

गायत्र्यैवानुसवनमाप्याययेदिति शाण्डिल्यः ॥ १४ ॥

अप्यायस्वेत्येतस्या एव पाठात् । एवं सर्वेषु चमसभक्षण-[illegible]षु सामान्येन भक्षणमुक्तम् ॥ १४ ॥

अथ विशेषमाह—

+द्वितीयाः सवनेषु नाराशंसाः ॥ १५ ॥

प्रतिसवनं यहवश्चमस[3]गणाः । तत्र द्वितीयाश्चमसगणाः [illegible] ॥ १५ ॥

*आप्यायस्वेति द्वाभ्यां चमसानालभन्ते ॥ सोमं वा [illegible] मन्त्रेणासमन्वात् इति कात्यायनश्रौतसूत्रे ॥

**सूत्रं ४६३,४६४, लाट्यायने एकमेव ।

+सूत्रं ४६६, ४६७, लाट्यायने एकमेव ।

1. कात्या-श्रौ-९-१२-४, ६ । 2. द्रा-६-१-१४ । 3. ञ चमसगणाः

गम्यते । यदि स्यात्तस्याप्यनुज्ञापनं अवश्यं कार्यं, 'नानुपहूतेन सोमः पातव्य' इति श्रुते ॥ ॥

४५७. दक्षिणमनुबाहुंदण्डं कृत्वा श्येन[1] इत्यवेक्ष्येन्दविति द्विरल्प भक्षयेत्, यथासवनं छन्दांस्यादिशन् ॥ ६ ॥

आत्मनोदक्षिण बाहुमनु, चमसस्य दण्ड कृत्वा, तिर्यङ् चमसं धारयित्वा श्येनोनृचक्षा इत्यवेक्ष्य इन्दविन्द्रपीतस्येति द्विर्भक्षयेदल्पमल्प सकृन्मन्त्रेण सकृत्तूष्णीम् । यथा सवन छन्दा स्यादिशन्नित्यर्थ । त्रिष्टु[2]प्छन्दस इति माध्यन्दिने । जगच्छ[3]न्दस इति तृतीय सवने तथैवो[4]त्तरमन्त्र पाठादिति ॥ ६ ॥

४५८ [5]ऊध्व इति मुख्यान् प्राणनाभिमृशेत ॥ ७ ॥

भक्षणानन्तर ऊर्ध्वंस्सप्तऋषीनिति सप्तमुख्यान् प्राणान् चक्षुषी नासिके श्रोत्रे मुखञ्चाभिमृशेता ॥ ७ ॥

४५९ सोम[6]चारन्धीति हृदयं, सोम[7]गीर्भिरितिनाभिम् ॥ ८ ॥

अभिमृशेतेत्यनुषङ्ग ॥ ८ ॥

४६०. एवमितरौ कुर्वातां प्रतिहर्तापश्चात् ॥ ९ ॥

एवमेवेतरौ प्रस्तोतृप्रतिहर्तारौ भक्षण कुर्यातिाम् । तयो प्रतिहर्ता पश्चाद्भक्षयेत् ॥ ९ ॥

४६१. तं ■ आप्याययेदभिमृश्याप्यायस्वे[8]त्येतया गायत्र्या ॥

त चमस प्रतिहर्ता आप्याययेत् । द्रोणकलशात्सोमरसमादाय तेन वर्धन आप्यायन, मन्त्रेण अभिमर्शनमात्रं वा, द्रव्य-

---

1 ता ब्रा १ ५ ३,४ । 2 ता ब्रा १-५-१३ 3 ता ब्रा–१-५-१६ ।
4 इ उत्तरसमन्त्रपाठात् । 5 ता ब्रा १ ५-५ । 6 ता ब्रा १ ५-६ ।
7. ता ब्रा १ ५-७ । 8 ता ब्रा १-५-८ ।

मप्युक्तं [1]कात्यायनेन,* "भक्षयित्वा मन्त्रेणालभेरन्, सोमं वा सिञ्चेयु"रिति । गायत्रेति वचनं उत्तरत्र, '[2]गायत्र्यैवानुसवन' मिति सूत्रे आप्यायस्व, समेतु त इति, मन्त्रप्रतिपत्त्यर्थम् ॥ १०

४६२. सर्वे वा ॥ ११ ॥

सर्वे वा त्रयोप्युद्गातारश्चमसमाप्याययेयुः ॥ ११ ॥

४६३. **तां तृतीयसवने द्विर्ब्रूयुः ॥ १२ ॥

तामाप्यायस्वेत्येतामृचं तृतीयसवने द्विरभ्यस्याऽऽप्याययेत् जगतीसंपत्त्यर्थम् । जागतं हि तृतीयसवनमिति ॥ १२ ॥

४६४. सन्ते पयांसीति माध्यन्दिने ॥ १३ ॥

सन्ते पयांसीति त्रिष्टुभाऽऽप्याययेत् । त्रैष्टुभं हि माध्यन्दिनमिति ॥ १३ ॥

४६५. गायत्र्यैवानुसवनमाप्याययेदिति शाण्डिल्यः ॥ १४ ॥

आप्यायस्वेत्येतस्या एव पाठात् । एवं सर्वेषु चमसभक्षणप्रकारेषु सामान्येन भक्षणमुक्तम् ॥ १४ ॥

अथ विशेषमाह—

४६६. +द्वितीयाः सवनेषु नाराशंसाः ॥ १५ ॥

प्रतिसवनं बहवश्चमस[3]गणाः । तत्र द्वितीयाश्चमसगणाः नाराशंसदैवत्याः ॥ १५ ॥

---

*आप्यायस्वेति द्वाभ्यां चमसानालभन्ते ॥ सोमं वा सिञ्चन्ति मन्त्रेणासम्भवात् इति कात्यायनश्रौतसूत्रे ॥

**सूत्रं ४६३,४६४, लाटचायने एकमेव ।

+सूत्रं ४६६, ४६७, लाटचायने एकमेव ।

1. कात्या श्रौ-९-१२-५, ६ । 2 द्रा-६-१-१४ । 3. क चमसगणाः

४६७. पूर्वयोश्च तृतीयौ ॥ १६ ॥

चकारोभिन्नक्रमः । पूर्वयोस्सवनयोः तृतीयौ च चमसगणौ नाराशंसाविति ।। १६ ॥

ततः किमित्याह—

४६८. *तेषामनवेक्ष्य भक्षणम् ॥ १७ ॥

तेषां नाराशंसानां श्येनो नृचक्षा इत्यनवेक्ष्य[1] भक्षणं कार्यम् ॥ १७ ॥

अथ तेषां भक्षणमन्त्रमाह—

४६९. अवमैरिति प्रातस्सवने ॥ १८ ॥

[2]अवमैरिति प्रातस्सवने नाराशंसभक्षणं, न पुनः इन्द्रपिन्वपीतस्येत्यनेन ॥ १८ ॥

४७०. ऊर्वैरिति माध्यन्दिने, काव्यैरिति तृतीयसवने ॥ १९ ॥

ऊर्वैः काव्यैरिति उत्तरयोः सवनयोः ।। १९ ।।

४७१. पितृभिरिति सर्वत्रानुसंहरेत् ॥ २० ॥

अवमैरित्यादि त्रिष्वपि मन्त्रेषु, पितृभिर्भक्षितस्येत्येतत् प्रत्येकं अनुषञ्जेत् ।। २० ।।

४७२. प्रत्यभिमर्शने यथाकामी ।। २१ ।।

नाराशंसे भक्षिते प्राणादि प्रत्यभिमर्शने याथाकाम्यं स्यात् ।। २१ ॥

४७३ **प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत् ।। २२ ।।

*४६८, ४६९, ४७० एक लाट्यायने ।

**४७३, ४७४ लाट्यायने एकमेव ।

1. इ पुस्तके अवमैरित्यादि तृतीयसवनेत्यन्तं एकसूत्रम् ।

2. ता-ब्रा-१-५-९ ।

पूर्वयो सवनयो प्रथमद्वितीयौ चमसगणौ भक्षणानन्तर आप्याययेत् । नेतरान् ।। २२ ॥

४७४ प्रथम तृतीयसवने ।। २३ ।।

तृतीयसवने प्रथमचमसभक्षणानन्तरमाप्याययेत् । नेतरानिति । अत्रोद्गातृभिरात्मीय चमसस्यैवाप्ययानम् । इतरैरपि यथा स्वमाप्यायनकार्यमिति । अत्र सर्वत्र सुब्रह्मण्यस्य न भक्षणम्, अनुक्त यात् । तस्य स्तुतावनन्वयाच्च । [1]जैमिनिकल्पे तु तस्यापि भक्षणमुक्त+म् । अयमेवकल्पकारयोर्मतभेद । प्राभाकरगुरोर्मीमासावार्तिककारस्य च विप्रतिपत्तेर्मूलमिति ॥

---

+उद्गातृ चमसमेक श्रुतिसयोगात् ॥ सर्वे वा सर्वसयोगात् ॥ स्तोत्रकारिणा वा तत्सयोगाद्बहुश्रुते ॥ सर्वे तु वेद सयोगात्कारणादेकदेशे स्यात् ॥ (जै सू ३-५-२३ to २६)

'प्रोद्गातॄणा' इत्यत्र उद्गीथकर्तृत्वस्य उद्गातृशब्दप्रवृत्तिनिमित्तस्य सत्वात् उद्गातुरेव भक्षण इति प्रथम पक्ष । बहुवचनस्य विद्यमानत्वात्, उद्गातृपलक्षिताना षोडशर्त्विजा भक्षण इति द्वितीय पक्ष । स्तोत्रकाले सर्वदा उद्गातृप्रस्तोतृ प्रतिहर्तार । तेषामेव प्रयोगकर्तृत्वात् तेषामेव भक्षणम् । बहुवचनमपि तत्रैव उपपन्नम् । उत्कर्षेण गायन्तीति योगेन उद्गातृशब्दग्रहणादिति तृतीय पक्ष ॥

रूढिर्योगमपहरतीति न्यायात् रूढ्या उद्गातैव गृह्यते । तेन बहुवचनोपपत्तये प्रत्यासन्ना उपलक्ष्यन्ते । प्रत्यासत्तिश्च यागे सुब्रह्मण्यस्यापि गानस्य विद्यमानत्वात तत्राप्यस्ति । तस्मात्

1 मीमासा सू ३ ५ २३ २६ ।

एवं भक्षणकथा समाप्याऽऽवृत्तिस्तोत्रेषु वक्तव्यमाह—

४७५. आवृत्तिषु तृणे प्रतिगृह्य प्रस्तोता प्रयच्छेत् यथा प्रस्तरम्॥२४॥

यत्र स्तोत्रीया: पुनः पुनरावर्तन्ते तान्यावर्तीनि पवमान-व्यतिरिक्तानि स्तोत्राणि। तेष्वध्वर्युणाऽऽहृतौ स्तोत्रोपाकरण-दर्भौ प्रतिगृह्य प्रस्तोता प्रयच्छेत्। कस्मै, कथं प्रयच्छेदित्य[1]-त्रोक्तम्। यथा प्रस्तरमिति [2]ब्रह्मन्नित्यादि मन्त्रमुक्त्वा प्रस्तर-वदुद्गात्रे प्रयच्छेदित्यर्थः ॥ २४ ॥

४७६. अनाह्रियमाणयोर्नमन्त्रं जप्यात् ॥ २५ ॥

यदा [3]दर्भयोः स्थाने [4]अरण्योराहरणं तदापि मन्त्रं [5]ब्रूयादित्यर्थं ॥ २५ ॥

४७७. *तथैव जंघामुपहृत्य युञ्ज्यात् स्तोमं दीक्षायै [6]तपसेमनसो वाच इति ॥ २६ ॥

यथा प्रस्तरेण तथैव तृणाभ्यां दक्षिणां जंघामुपहृत्य स्तोममुद्गातायुञ्ज्यात्। चतुर्भिर्मन्त्रैः दीक्षायै, तपसे मनसो, वाच इति पदचतुष्टयं मन्त्रचतुष्टयस्य प्रतीकोपादानम्। प्रति-मन्त्रं प्रजापतिस्त्वेत्यनुषङ्गं वक्ष्यति। तत्र दीक्षायै वर्णेन

---

सुब्रह्मण्येन सहिताः चत्वार उद्गातारः भक्षयेयुरिति भाष्यकार-मतम्। वार्तिककारस्तु, सदसः भक्षणस्थानत्वात् सदसि सुब्र-ह्मण्यस्य अप्रवेशात् तद्रहितास्त्रय एव भक्षयेयुरिति अभिप्रैति ॥

*सूत्र ४७७, ४७८ एक लाट्यायने।

---

1. य इत्यत्र उक्तम्। 2 ड द्रा-३-४ १६। 3 ड. पृष्ठचे पदहे।, 4 द्रा सू ९-१ ४। 5 ड मनुस्तोत्राय इति। 6. ता ब्रा-१-५-१०। द्रा-सू-३-४-१७। 7 द्रा ४ १-२८।

प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानायेति प्रथमो मन्त्रः। तपसो-रूपेण प्रजापतिस्त्वेति द्वितीयो मन्त्रः। मनसो महिम्ना प्रजापति-स्त्वेति तृतीयः। वाचो विभूत्या प्रजापतिस्त्वेति चतुर्थः। एतैश्च-तुर्भिरपिमन्त्रैः एकस्मि[1]न्नपि स्तोत्रे स्तोम योगः कार्य इति ॥ २६ ॥

पक्षान्तरमाह—

४७८. नानाधानञ्च्यो यत्रानन्तराणि चत्वारि ॥ २७ ॥

यत्राऽऽनन्तर्येण चत्वार्यावृत्तिस्तोत्राणि पूर्णानि लभ्यन्ते। तत्र चतुर्षु स्तोत्रेषु चतुरो मन्त्रान् क्रमेण पृथक् विभजेत्। (एव)न पुनः एकस्मिन् स्तोत्रे [2]मन्त्रचतुष्टयमिति। अनन्तराणीति वचनं विजातीयपवमानव्यवहितान्यावृत्तिस्तोत्राणि गृहीत्वा मन्त्रविभागो न कार्य इत्येवमर्थम्। तेन प्रातस्सवने सोमातिरेकनिमित्तमावृत्तिस्तोत्रमारभ्य माध्यन्दिनपवमानादुत्तराणि च त्रीणि गृहीत्वा तेषु मन्त्रविभागो न कार्य इति ॥ २७ ॥

४७९. अन्ता सर्वेषां [3]प्रजापतिस्त्वेति ॥ २८ ॥

सर्वेषां चतुर्णामपि मन्त्राणां प्रजापतिस्त्वायुनक्त्वित्ययम-मन्तो भवेत् अनुषङ्ग इत्यर्थः। इदं च पक्षद्वयसाधारणम्। २८॥

अथ यत्र चत्वार्यावृत्तिस्तोत्राणि पूर्णानि न लभ्यन्ते। यथा अग्निष्टोमसंस्थे, षोडशिसंस्थे च तत्रह्यावृत्तिस्तोत्राणां चतुष्काशो विभजने सति[4] त्रयमवशिष्यते तथा वाजपेये द्वौ, तत्र कथ स्तोम योग. अत आह—

४८०. *प्रथमेनाल्पीयस्सु ॥ २९ ॥

*एतत् सूत्रस्थाने सूत्रद्वयं किञ्चित् विकृतं लाट्यायने।

1. क एव 2. ई. सर्वेषु पृष्ठ्येषु उक्थ्येषु सवनियेषु चेति।
3. ता ब्रा १-४-१० । 4. इ सति एवं रम्

अल्पीयस्सु चतुर्भ्यो न्यूनेषुस्तोत्रेषु प्रथमेनैव मन्त्रेण स्तोमं युञ्ज्यात् ॥ २९ ॥

४८१. तत्प्रभृतीनि रात्रौ ॥ ३० ॥

रात्रिपर्यायेषु प्रत्येकं चतुर्षुस्तोत्रेषु प्रथमप्रभृतींश्चतुरो मन्त्रान् क्रमेण विभजेत्। ननु च यत्रानन्तराणि चत्वारीत्येतेनैव सिद्धमेतत्। सत्य, अषोडशिकेऽतिरात्रे सिद्धम्। यदा पुनः षोडशिमानतिरात्रः तदा षोडशिनमुपक्रम्य चतुर्षु चतुर्षु मन्त्रविभागः स्यात्। तथासत्युपक्रमे द्वितीयो मन्त्रस्स्यात्, तन्निवृत्त्यर्थमुक्तं प्रथमप्रभृतीनेव मन्त्रान् रात्रौ विभजेदिति। तदापि षोडशिनं प्रथमेनैवानुमन्त्रणं प्रथमेनाल्पीयस्स्विति वचनादिति ॥ ३० ॥

४८२ तथातिरिक्तस्तोत्रेषु ॥ ३१ ॥

अप्तोर्यामेऽतिरिक्तस्तोत्रेष्वपि चतुर्षु तथैव प्रथमप्रभृतीनेव मन्त्रान्विभजेत्तदा सन्धिस्तोत्रमारभ्य विभागे प्राप्ते तन्निवृत्यर्थं वचनम् ॥ ३१ ॥

एवं धानञ्जय्यमतं समाप्य मतान्तरमाह—

४८३. सर्वैरेकैकं यथाम्नायं शाण्डिल्यः ॥ ३२ ॥

दीक्षार्थधर्णेनेति चतुर्भिरपि मन्त्रैरेकैकं स्तोमं युञ्ज्यात्। प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽप्रानायेत्येतत् यथाम्नायमेव सकृदन्ते नियोज्य, न प्रतिमन्त्रमनुषङ्ग इति विशेषः ॥ ३२ ॥

४८४. आवृत्तिन्यायस्सन्धौ ॥ ३३ ॥

आवृत्ति स्तोत्राणां यो धर्मः स सन्धिस्तोत्रेऽपि स्यात्। तस्यानावृत्तित्वादेवमुक्तम्। तेन स्तोमयोग कुशास्तरणमित्या-

दयो धर्माः स्युः । तथा प्रथमेनाल्पीयस्स्विति प्रवर्तत इति ॥

४८५. उपवसथ्येऽहनि न समामनेरन् ॥ ३४ ॥

सुत्यायाः पूर्वदिवसे न स्वाध्यायमधीयीरन् । सुत्येऽहनि वाचोग्लानि' मा भूदित्येवमर्थमिति निदानकारः ॥ ३४ ॥

॥ इति पञ्चमपटले प्रथमः खण्डः ॥



अथ द्वितीयः खण्डः

४८६. *प्रस्तोता तु **कुशाः कारयेद्यज्ञियस्य ×वृक्षस्य ॥ १ ॥

औपवसथ्येऽहनि इत्यनुवर्तते । कुशा नाम स्तोत्रीयागणनार्था. काष्ठा. । ता. [1]यज्ञियस्य वृक्षस्यायवस्थादेस्सवनि ानीः कारयेत् ॥ १ ॥

---

*४८६, ४८७, ४८८, ४८९ एतत् सूत्रचतुष्टय एकसूत्र लाटघायने ।

**औदुम्बरीर्वा पालाशीर्वा योवान्यो यज्ञियो वृक्षः प्रादेशमात्री. कुशपृष्ठाः त्वक्तः समा मज्जत. अङ्गुष्ठपर्व पृथुमात्री प्रजाताग्राः कारयित्वा गन्धैः प्रलिप्य, सर्पिषा सत्रेषु, खादिरी दीर्घसत्रेषु वैष्टुतेन वसनेन परिवेष्ट्य औदुंबरीमध्येऽधिवामयेत् क्षौमं शाणं कार्पासमिति वसनविकल्पाः, इति निदानसूत्रे प्रपाठक –१ खण्ड.-११ ॥

×यज्ञार्हस्य । तदर्हतीत्यर्थे यज्ञर्त्विग्भ्यां घखञौ (पा-५-१-७१) इति घप्रत्यय. तस्येयादेश - पा-७-१-२

---

1. ट. यज्ञार्हस्य

४८७. खादिरस्य दीर्घसत्रेष्वेके ॥ २ ॥

स्पष्टम् ॥ २ ॥

क्रियाप्रकारमाह—

४८८. प्रादेशमात्रीः कुशपृष्ठास्त्वक्तस्समामज्जतः अंगुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः ॥ ३ ॥

कुशपृष्ठास्त्वक्त इति त्वक्प्रदेशे कुशतृणवदुन्नतपृष्ठा स्यु । समामज्जत इति काष्ठान्तर्गतो रसो मज्जा, तदवस्थानदेशे समा स्यु । काष्ठं भित्वा तदन्तःप्रदेशेसमं तक्षयेदित्युक्तं भवति । प्रज्ञाताग्रा इति यदेव वृक्षेऽवस्थि[1]तस्य काष्ठस्याग्रं तदेवेदानीं अपि प्रज्ञातं कार्यमिति ॥ ३ ॥

४८९. कारयित्वा ता गन्धवतीभिरोषधीभिरनुलिप्य सर्पिषा सत्रेष्वेके कुशविधानेन **वसनेन परिवेष्टय क्षौमशाणकार्पासानां केनचिदुपर्यौदुम्बर्यावासयेत् ॥ ४ ॥

एवं कारयित्वा हरिद्राचन्दनादिभिः ओषधीभिरनुलिप्य क्षौमशाणकार्पासानामन्यतमेन कुशास्तरणेन वाससा परिवेष्टय सदस्यौदुम्बर्या उपरिवासयेत् । कुशा विधीयन्ते स्तीर्यन्ते अस्मिन्निति कुशाविधानं सत्रेषु सर्पिषाऽनुलेपनमेक आहुरिति ॥ ४ ॥

४९०. तांश्वोभूते कुशैरूर्ध्वाग्रैः परिवेष्टयैवं जातीयेन वसनेन प्रदक्षिणमूर्ध्वदशेन परिवेष्टय स्पृष्टोऽनपश्रित उद्गायेदिति गौतमः ॥ ५ ॥

इदमुद्गातुः कर्म । श्वोभूते सुत्येऽहनि तामौदुम्बरी-

**वेष्टुतेनवसनेनेति लाटयायने ।

1. स्थितस्यास्यस्याप

मुद्गाता कुशैर्दर्भैः ऊर्ध्वाग्रैः परिवेष्टयैवंजातीयकेन पुर्वोक्तेन क्षौमादीनामन्यतमेन वाससा चोर्ध्वदशेनपरिवेष्ट्य तां + स्पृष्ट्या-ऽनपश्रित उद्गायेत् । तस्यां शरीर[1]भारमनिक्षिप्य स्पर्शन-मात्रमेव कृत्वेत्यर्थः । स्पृष्ट इति कर्तरि निष्ठा ॥ ५ ॥

अनपश्रयण हेतुमाह—

४९१. *धिष्ण्योऽयं भवति न धिष्ण्यमासादयेत् ॥ ६ ॥

औदुंबर्यपि कश्चित् धिष्ण्योऽग्निरेव । तथा च धिष्ण्यो-

+ 'विरोधेत्वनपेक्षं स्यात् असतिह्यनुमानम्' (जै सू-१-३-३) अत्र 'औदुंबरी सर्वावेष्टयितव्या' इति स्मृत्या सर्व-वेष्टनं प्रतीयते । 'औदुंबरीस्पृष्ट्वोद्गायेदिति' श्रुत्या स्पर्शः श्रूयते । अतः सर्ववेष्टनं न सम्भवति । अत्र संशये विचार्यते, सर्ववेष्टन स्मृत्या सर्ववेष्टनं कर्तव्यं, अष्टकादिस्मृतिवत् मूल-श्रुत्यनुमापकत्वेन तस्याः प्रामाण्यं इति पूर्वपक्षः । स्पृष्ट्वो-द्गायेदिति श्रुत्या स्पर्शः कर्तव्यः । अनया प्रत्यक्ष श्रुत्या बाधि-तत्वात् सर्ववेष्टम स्मृत्या अनुमातुं न शक्यत इति सिद्धान्तः ॥

औदुंबरीमुद्धृत्य न विसृजेत् आछदिपोऽप्यूहनात् यवो भूत एनां ऊर्ध्वाग्रैः कुशैः वेष्टयित्वा एवं जातीयेनैवोर्ध्वदशेन वसनेन प्रदक्षिणं परिवेष्ट्य अस्पृष्टो अनपश्रित उद्गायेदिति गौतमः धिष्ण्योयं भवति न धिष्ण्यमासादयेदिति । धृष्टगपश्रयेतेति धानञ्जय्यः इति निदानसूत्रं प्रपाठक १ खण्ड ११ ॥

*इदं सूत्रं लाट्यायने नास्ति ।

1. शरीरभारमनाक्षिप्य

पस्थाने तदुपस्थानम[1]प्युक्तम् । न च धिष्ण्यमग्निं कश्चिदा-
सादयितुमर्हतीति । तस्मादनपश्रित एव गायेदिति ॥ ६ ॥

४९२. धृष्टमपश्रयेतेति धानञ्जय्यः ॥ ७ ॥

धृष्टं - निर्भयं धिष्ण्योऽयमग्निरिति भीतिर्नकार्येत्यर्थः ॥ ७ ॥

कुत इत्याह–

४९३. 'स [2]एव तदूर्जिश्रितः प्रजाभ्य ऊर्जं विभजतीति ह्याह ॥८॥

'[3]ऊर्म्वा उदुम्बरस्सामर्वदेवानामन्नमिति च प्रकृत्य ब्राह्मणं, स एव तदूर्जिश्रित प्रजाभ्य ऊर्जं. विभजतीति । ऊर्मू-पायामौदुम्बर्यां अपश्रित ऊर्मूपं सामोद्गाता देवेभ्यो विभजतीति ब्राह्मणार्थ. । एतदुक्तं भवति, यदिदमौदुम्बर्यामपश्रितः उद्गायति तदिदमन्नमवष्टम्भ्यान्नं देवेभ्यो ददातीति । यद्यनपश्रित उद्गाये देवेभ्योऽन्नमदत्वा स्वय रिक्त एव स्यादिति ॥ ८ ॥

४९४. स्तोष्यमाणानां मध्ये वैष्टुतं वसन प्राक्समासं वोदक्समासं वोपविदशमास्तीर्यप्रस्तोता *कुशान्विदध्यात्प्रस्तावान्तेषु ॥ ९ ॥

---

*प्राक्समासं वोदक्समासं वा उपरिदशमास्तीर्य प्रस्तोता विष्टुतीर्विदध्यात् । उदगग्राभि. प्रथम विष्टाव प्राक्संस्थं प्रत्यक्संस्थं वा इत्येके । पश्चात् प्रथमस्य विष्टावस्य प्रागग्राभिः उदक्संस्थं द्वितीय, प्रत्यगग्राभिरित्येके । पश्चादेवास्य मध्यमस्य विष्टावस्य उदगग्राभिः प्रत्यक्संस्थं तृतीय, एतयाऽऽवृता पर्या-यान् विदध्यात् दक्षिणार्धं प्रथम, अनुपूर्वमुदीचः, संहतान् विष्टावपर्यायान् विदध्यात् इतरेष्वितरेण शिरसि कुशाऽनुविधी-मेरन्नित्येके" इत्यादि निदानसूत्रे प्रपाठक-१-ख-११ ॥

---

1. ञा-४-२-११ । 2 ता-ब्रा-६-४-१२ । 3. ता-ब्रा-६ ४-११ ।

आ[1]वृत्तिभिस्तोष्यमाणानामुद्गातॄणां मध्ये विष्टुतिगणनार्थं कुशास्तरणवासः प्राक्समासंवोदक्समासंवोपरिदशमास्तीयं तत्र प्रोस्तोता कुशाः विदध्यात्—प्रस्तावभक्त्यन्तेषु ॥ ९ ॥

४९५. आद्येऽनेकप्रस्तावासु ॥ १० ॥

अनेकप्रस्तावयुक्तासु स्तोत्रीयासु महानाम्न्यादिषु, प्रथमप्रस्तावान्ते कुशाविधानमिति ॥ १० ॥

४९६. *अप्रस्तावास्वादौ ॥ ११ ॥

सन्तनिधनवादौ प्रस्तावभक्तिरहितासु स्तोत्रीयासु स्तोत्रीयोपक्रम एव कुशाविधानम् ॥ ११ ॥

४९७. उदगग्रं प्रथमं विष्टावं प्राक्संस्थं प्रत्यग्वा ॥ १२ ॥

विष्टावो नाम, पर्यायस्य त्रेधाविभक्तस्यैकैको भागः स्तोत्रीयाभ्यासरूपः । तेषु प्रथम विष्टावं उदगग्रं प्रागपवर्गं प्रत्यगपवर्गं वा कुर्यात् । उदगग्राभिः कुशाभिः क्रमेण पुरस्तात् प्रत्यग्वा निहिताभिः गणयेदित्यर्थः ॥ १२ ॥

४९८. तं पश्चिमेन मध्यदेशेनोदक्संस्थं प्रागग्रं प्रत्यग्वा ॥ १३ ॥

तस्य प्रथमविष्टावस्य मध्यदेशतः पश्चादुदगपवर्गं प्रागग्राभिः प्रत्यगग्राभिर्वा द्वितीयं विष्टावं गणयेत् ॥ १३ ॥

४९९. **तं पश्चिमेनोदगग्रं प्रत्यक्संस्थम् ॥ १४ ॥

स्पष्टम् ॥ १४ ॥

५००. एवं विधाः पर्याया उत्तरोत्तराः ॥ १५ ॥

*इदं सूत्रं लाट्यायने नास्ति ।

**सूत्र ४९९, ५०० लाट्यायने एकमेव ।

1. आवृत्तिस्तोत्रैः ।

एवं [1]त्रयोविधाः पर्यायाः उत्तरतः उत्तरतः कुशाविधाने कार्याः ॥ १५ ॥

५०१. मिथः पर्यायविष्टावान् सन्दध्यात् ॥ १६ ॥

इतरेतर विष्टावेषु कुशाः संश्लेषयेत्, पर्यायेषु च । १६ ॥

५०२. पर्यायादिषु हिंकारं स्तुवीरन् ॥ १७ ॥

*हिंकारमिति णमुलन्तत्ययान्तः, प्रतिपर्यायं हिंकृत्यहिंकृत्ये-त्यर्थः* । पर्यायो नाम त्रेधाविभक्तस्य स्तोमस्यैकैको विभागः । अत्र त्रिवृदादि स्तोमाना पर्यायविष्टावक्लृप्तिः ब्राह्मणेनैवो[2]क्तेति न सूत्रकारस्य कृत्यमस्ति । यद्येवं, हिंकारोऽपि तत एव सिद्ध इति न सूत्रकारेण वक्तव्य. । सत्यं; तिसृभ्यो हिंकरोतीत्येकत्व-श्रुतेः उद्गातुरेवहिंकारे प्राप्ते त्रयाणामपि प्राप्त्यर्थं 'हिंकारं स्तुवीरन्' इत्युक्तम् ॥ १७ ॥

५०३. उत्तमां प्रस्तुर्थ्येपेति शंसिष्यन्तं ब्रूयात् ॥ १८ ॥

उत्तमां स्तोत्रीयां प्रस्तोता प्रस्तुत्यैपेति शंसिष्यन्तं प्रति ब्रूयात् । [3]स्तोत्रशस्त्रयोः सन्तत्यर्थम् ॥ १८ ॥

५०४. स्तुतस्य स्तुतमसीति यजमानवाचनम् ॥ १९ ॥

स्तोत्रे समाप्ते इति शेषः ॥ १९ ॥

५०५. सवनसंस्थासु प्रशास्त्रोक्ताः यथैतमपरयाद्वारा निष्क्रम्य पश्चि-मेनाग्नीध्रीयं बर्हिर्वेदिमूत्रं कुर्युः ॥ २० ॥

प्रशास्त्रा–मैत्रावरुणेन सर्पतेत्युक्ताः । अयंप्राप्तस्य मूत्र-करणस्य कालनियमोयम् ॥ २० ॥

1. ड त्रयोविधपर्यायाः उत्तरोत्तरतः । 2. ता-ब्रा-अध्यायः-२ ।
3. ड. असमाप्त एव स्तोत्रे शस्त्रारम्भ प्रबोधनार्थम् ।

५०६. यावं गच्छेयुः यावदुदक्याः स्युः ॥ २१ ॥

यावदुदकाचमनेन शुद्धाः *तावद्वाग्यताः स्युः ॥ २१ ॥

५०७. एतन्मृगतीर्थम् ॥ २२ ॥

आग्नीद्ध्रीयस्यपश्चाद्योदेशः स मृगतीर्थं इति नामेति ॥

५०८. तेन न भूयः शम्यापरासाद्गच्छेयुः ॥ २३ ॥

तेन मृगतीर्थेन[1] । हस्तेन वेगयुक्तेन शम्याप्रास्ता यावन्तं प्रदेशं गच्छेत् स शम्यापरास इति ॥ २३ ॥

५०९. यो भूयो जिगमिषेदाप्नानेन स गच्छेत् ॥ २४ ॥

यस्तु शम्यापरासादतिरिक्तं गन्तुमिच्छति स आप्नान तीर्थेनैव गच्छेत् इति ॥ २४ ॥

इति पञ्चमपटले द्वितीयखण्डः

॥ अथ तृतीयः खण्डः ॥

५१०. **अथ धिष्ण्यानुपतिष्ठेरन् ॥ १ ॥

सवनसंस्थाऽनन्तरं निष्क्रान्ताः कृतावश्यकाः पुनराप्नान-तीर्थेन प्रपद्य यथापूर्वं धिष्ण्योपस्थानं कुर्युः ॥ १ ॥

५११. समस्तेनोत्तरयोः सवनयोरिति गौतमशाण्डिल्यायनौ ॥ २ ॥

उत्तरयोः सवनयोः प्रातमाग्नय इति समस्तेनैव मन्त्रेणोपस्थान, नेतरैरित्येक मतम् ॥ २ ॥

*शास्त्रान्तरेण प्राप्तस्य आचमनस्य अनुवचनं अन्वर्थं इति मन्तव्यम् ।

**सूत्र ५१०, ५११, द्वयमप्येकं लाट्यायने ।

1. द शम्यापरासादतिरिक्तं देशं न गच्छेयु ।

५१२. सर्वैर्वेति धानञ्जय्यः ॥ ३ ॥

सर्वेण सर्वैरपि मन्त्रैः यथास्वमुपस्थानमिति मतान्तरम् ॥

५१३. अनुपस्थानं शाण्डिल्यः ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

५१४. एवमेव निष्क्रम्यपृथक्स्तोत्रेभ्यस्समस्तेनोपतिष्ठेरन्यान्यूर्ध्व-मुक्थ्येभ्यः ॥ ५ ॥

तृतीयसवने उक्थ्यस्तोत्रेभ्य ऊर्ध्वं यानि स्तोत्राणि षोडशिसामादीनि तदर्थमेवापरया द्वारा निष्क्रम्य पुन प्रविश्य पात्रमाप्रय इति समस्तोपस्थान प्रतिस्तोत्र कार्यमिति ॥ ५ ॥

तत्र विशेषमाह—

५१५ पर्यायेभ्यस्तु रात्रेः ॥ ६ ॥

रात्रिसम्बन्धिभ्य पर्यायेभ्य एव पृथक्पृथगुपस्थान न पुनः प्रतिस्तोत्रमिति । तेन षोडशिस्तोत्रे वाजपेये च बृहत्स्तोत्रे सन्धौ च पृथक पृथगुपस्थानम् । तथातिरिक्तस्तोत्रेष्वपि प्रतिस्तोत्रमुपस्थानमिति [1]पूर्वसूत्रेणोक्त भवति ॥ ६ ॥

५१६ यथाऽऽसनं उपविश्य प्रस्तोता हविर्द्धानं गच्छेत् माध्यन्दिने ॥

यथासनमुपविश्य यजमानोपहवे च कृते गमनम् । '[2]एतस्यैव कुर्युर्यदाऽध्यानुपतिष्ठेर'न्निति वचनात् । यद्येव तेनैव सिद्धत्वाद्यथासनमुपविश्येति न वक्तव्यम् । तथा हविर्धानं गच्छेदित्यपि न वक्तव्यम् । एतत् सर्वं कुर्यादुत्तरयो पवमानयोरित्यतिदेशात् ।

---

1. द्रा ५-१ ३० । 2 द्रा-४ ३-१६ ।

सत्यम्; नियमार्थमेतत्सूत्रम्। प्रस्तोतैव गच्छेन्नेतराविति एको नियमः। तथा उपवेशनानन्तरं गच्छेन्नपूर्वमित्यपरो नियमः, अन्यथा प्रस्तोतुरुपवेशनस्य दृष्टप्रयोजनाभावात्, उपस्थाने कृते तदानीमेव हविर्धानगमनं स्यात्। तन्निवृत्त्यर्थमुपविश्यैवेति वचनमदृष्टार्थमिति ॥ ७ ॥

५१७. हुत आदित्यग्रहे प्रतिहर्ताऽऽर्भवे ॥ ८ ॥

इदमपि नियमार्थम्। आर्भवे पवमाने प्रतिहर्तैव गच्छेद्यथासनमुपविश्यादित्यग्रहहोमानन्तरम् ॥ ८ ॥

५१८. उभयत्र सर्वे सर्पेयुः ॥ ९ ॥

सर्वेपूभयत्रार्भवे माध्यन्दिने पवमाने च त्रयोऽप्युद्गातारः हविर्धानं गच्छेयुः। [1]सर्वेहोतृ मैत्रावरुण धिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीध्रीयं हविर्धानं गच्छेयुः [2]दक्षिणेनोत्तरयोः सवनयोः यदा हविर्धानमिति वचनात्। गत्वा, [3]ररराटद्यालंभनादि [4]प्रभुर्कैतु देवीमन्त्रजपान्तं [5]कृत्वा निःसर्प्य प्रसृत होमौ च [6]हुत्वा, सदस्यागत्य मोम आत्मेरयुपवेशनान्तं [7]कृत्वा पवमानस्यऋग्जपादि कर्तव्यमिति। अत्र सर्पणवेलायां उद्गातृप्रतिहर्त्रोः अपि सर्पणं कार्यम्। एतत्सर्वं कुर्यादुत्तरयोः पवमानयोरिति वचनात्। तथा उपग्रन्थकारेण उभयोर्वा सर्पणयोः प्रतिहर्ताऽन्वच्छिद्येतेति माध्यन्दिनेऽपि सवने प्रतिहर्तुः सर्पणं कर्तव्यम् इति। आपस्तम्बोप्याह — 'बहिष्पवमानवन्माध्यन्दिनपवमाने सर्पन्ती'ति ॥ ९ ॥

---

1. ब. सर्वेऽ। 2. द्रा-४-२-६। 3. द्रा-३-१-१। 4. द्रा-३-३ ११।
5. ब. पवित्रनिष्पीडनान्तं। 6. द्रा-३-३-१७।
7. द्रा-३-३-२७।

५१९. पवमानयोः उत्तरयोर्धिष्ण्यविहरणे मार्जालीयं हरन्तः पश्चिमेन यजमानं हृत्वा तेनैव प्रतिहरेयुः ॥ १० ॥

सदसः पूर्वया द्वारा प्रविश्य यजमानं पश्चिमेन मार्जालीयं हृत्वा तेनैव पुनः प्रहृत्य मार्जालीयस्थाने निदध्युः अदृष्टार्थमेतत् । इदञ्चाध्वर्यव विकल्प्यते अध्वर्युसूत्रेऽनुक्तत्वात् ॥ १० ॥

५२०. माध्यन्दिनेन स्तुत्वा सर्वेषु [1]दधिघर्मभक्षयेषुरसमुपहूय [2]दधिक्राव्ण इति ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

५२१. तस्या उत्तमं पाद दशमेहन्यभ्यस्येयुः ॥ १२ ॥

दशमेऽहनि [3]'परोक्षमनुष्टुभमुपयन्ती'ति ब्राह्मणेन प्रत्यक्षमनुष्टुभो परिहरणीयत्वात् । तदर्थोऽभ्यास ॥ १२ ॥

५२२. पूर्वेण पत्नीशालामन्तरेणाग्नीद्ध्रीयं सदश्चतीर्थेन दक्षिणानयेयुः ॥ १३ ॥

दक्षिणादानकाले महावेदेर्दक्षिणपार्श्वे पूर्वमेव दक्षिणा स्थाप्याः । ता पूर्वेण पत्नीशालामुदीचीनीत्वा पुनराग्नीद्ध्रीय सदश्चान्तरेण प्राची नीत्वा पुन *तीर्थेनोदीची नयेयु ॥ १३ ॥

५२३. सर्वासां [4]देवस्यत्वेति पुरस्ताज्जपः ॥ १४ ॥

सर्वदक्षिणानां प्रतिग्रहे देवस्यत्वेति पुरस्ताज्जप कार्यं ॥१४॥

५२४. [5]वरुणस्त्वेति यथा देवतं प्रतिगृह्णीयात् ॥ १५ ॥

---

*तीर्थेन - आप्लानेन ।

1. द- दधिघर्मस्य । 2 ऋ ६-३-३० । 3. ता ब्रा ४ ८-७ ।
4. ता-ब्रा-१-८-१ 5 ता-ब्रा-१-८-२ ।

यथादेवतमिति - यस्य द्रव्यस्य या देवता प्रतिग्रहमन्त्रेषु पठिता तामादिश्य तत्प्रतिगृह्णीयात् यथा वरुणायाश्वं, अग्नये[1] हिरण्यमित्यादि ॥ १५ ॥

५२५. यथाजाति मृगान् ॥ १६ ॥

[2]वायवे मृगमिति मृगप्रतिग्रहमन्त्रे यथाजाति मृगानादिशेत्, वायवे हरिणं वायवे [3]खड्गमिति । एवं सर्वस्वदक्षिणे क्रतौ मृगस्यापि दानमस्ति* ॥ १६ ॥

५२६. अप्राणश्च ॥ १७ ॥

उ[4]त्तानायाङ्गीरसायाप्राणदितिमन्त्रेण अप्राणानपि यथाजात्यादिश्य प्रतिगृह्णीयात् । तद्यथा उत्तानायाङ्गीरसायाऽनश्शय्यामासनमित्येवम् ॥ १७ ॥

५२७. पुंवन्मिथुनान्यन्यत्राजाभ्यः ॥ १८ ॥

मिथुनप्रतिग्रहे पुंस इव मिथुनानां देवतामादिशेत् । यथा वरुणायाश्वावित्यादि, अन्यत्र अजाभ्य इति वचनं अजमिथुने स्त्रियाश्च पुंसश्च पृथक्देवताम्नानात् । तद्यथा [5]अग्नये अजमग्नीषोमाभ्यामजामिति ॥ १८ ॥

५२८. तेन कद्दमित्युपरिष्टाज्जपः ॥ १९ ॥

[6]तेनामृतत्वमश्यामित्यादि प्रतिग्रहीत्रे इत्यन्तं, तथा[7]कइदं कस्मा अदादित्यादि कामैतत्ते इत्यन्तं द्वयमप्युपरिष्टाज्जपेत् ॥

*ङ पुस्तके, अत्र हरिणादे. गृहे विद्यमानस्येत्यधिक ।

1. ता ब्रा-१-८-५ । 2. ता ब्रा-१ ८-१३ । 3 ङ खगम् ।
4 ता ब्रा १-८-११ । 5 ता-ब्रा-१ ८-४,६ । 6 ता-ब्रा-१-८ २ ।
7. ता-ब्रा- १-८-१७ ।

५२९. *तत्रोहापादीनि पदानि ॥ २० ॥

तेषु मन्त्रेषु यानि पदान्यूहमापद्यन्ते तानि[1] पदानि वक्ष्याम इत्यर्थः ॥ २० ॥

तान्येवाह—

५३०. त्वा, देवि, दक्षिणे ॥ २१ ॥

वरुणस्त्वा नयतु देवि दक्षिणे इत्यत्र पदत्रयं यथार्थमूह्यं। वरुणो वो नयतु देव्यो दक्षिणा इत्येवम् ॥ २१ ॥

५३१. अद इति चयत्तत्स्याचेन दात्रे, इदं, आविश एतत्ते मुञ्चामि [2]हिंसीरिति च ॥ २२ ॥

अद इति च यत्तत्स्यादित्यस्य अयमर्थः – अद इति द्वितीयान्तस्य पदमूह्यं [3]यज्जातीयं यल्लिङ्गञ्च [4]द्रव्यं स्यादिति। ननु च अद इति द्वितीयान्तं **पदं नास्तीति। सत्यं; वरुणायाश्वं नयत्वित्यादिषु प्रतिग्राह्य द्रव्यवचनानां द्वितीयान्तानां एतदुपलक्षणम्। तेन अश्वमश्वानित्यादि लिङ्गवचनोहः कार्यः। तेनामृतत्वमशीय वयोदात्रे इत्यत्र तेन दात्र इति पदद्वयमूह्यं। ताभ्यां अमृतत्वमशीय वयोदातृभ्यान्दातृभ्य इति दातृशब्दो यजमानवाची। तथा कइदं कस्मा अदादित्यत्र इदं आविश, एतदिति पदत्रयमूह्यम्। इदमिममिमामिति। अत्र [5]कामं समुद्रमाविशेति तैत्तरीयाणां मन्त्रपाठः। छन्दोगानामपि नूनं शाखान्तरे

*५२९, ५३०, ५३१ सूत्रत्रयं लाट्यायने एकमेव।

**वरुणस्त्वा इति मन्त्रे।

1. ब. ऊहापादीनि। 2. ता-ब्रा-१-८-७। 3. ब. यत्तत्स्यं। 4. ब तत्द्रव्य तेनाकारेणोह्यमिति। 5. तैत्तरीय-आर-३-१०-२।

तथैव पाठः [1]स्यात्, तत्पक्षे आविशेत्यस्याख्यातस्य दक्षिणापरत्वाद्यथार्थमूहः । आविशतमाविशतेति । [2]अस्माकन्तु, कामः समुद्रमाविशदिति पाठः । तदानीमाविशदित्यस्य कामपरत्वादूहो नास्ति । तथाहि; [3]काम एव समुद्रः (आविशत्) *तद्रूपस्महिता दक्षिणानिर्मयमाविशत् नाहमिति मन्त्रार्थः । तथा कामैतत्त इत्यत्रापि एतच्छब्दस्य यथार्थमूहः । कामैतत्ते कर्मैषत इत्यादि; कामैतत्त इत्यत्र ते शब्दस्य नास्त्यूहः, एतच्छब्दप्रदर्शनार्थः, तस्यसहपठितस्य सूत्रेणोपादानमिति । तथाऽन्नस्यान्नपतिः प्रादादित्यस्मिन्मन्त्रे भुञ्जति हिंसीरिति च पदद्वयमूह्यं, यथा भुञ्जत्यो मा मा हिंसिष्टेति ॥ २१ ॥

५३२ **अश्वरथश्चेद्दद्यात् ॥ २२ ॥

यद्यश्वैर्बहुभिर्युक्तं रथं यजमानो दद्यात्, तदा विशेषं वक्ष्याम इत्यर्थः ॥ २२ ॥

५३३. पूर्वेणाग्नीद्ध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा, दर्भमुष्टिनाऽश्वमुखानि संमृज्यात् द्वाभ्यां द्वाभ्यां अश्वनामभ्यामेकैकस्य [4]अश्वोऽसीत्येवत्प्रभृतिमिह्दक्संस्थमिति धानञ्जय्यः ॥

*काम समुद्रमाविशेत्याह, समुद्रइव कामयते, नहि कामस्यान्तोऽस्ति, नहि समुद्रस्य–इति सायनभाष्ये–१-८-१७ ॥

**५३२, ५३३ इदं द्वयमपि सूत्रं एकं लाट्यायने ।

1. क. पाठे, यतः सूत्रकारेण एवमुपात्तम् इत्यधिकः । 2. ता-ब्रा-१। ८-१७ । 3. क. 'काम एव समुद्रः तद्रूपप्रभूतां दक्षिणामाविशत्' ।
4. ता-ब्रा १-७-१

*अश्वोस्यत्यो[1]सीत्यश्वनामान्यष्टौपदानि पठितानि विभज्य द्वाभ्यां द्वाभ्यां एवं क्रमश्चधुरमुदगपवर्गं समृज्ज्यात् तेन सामर्थ्याच्चतुर्भिरश्वैर्युक्तस्य रथस्य प्रतिग्रहे अयं धर्मः । उदक्संस्थमिति वचनात्, प्राङ्मुखः प्रत्यङ्मुखो वा रथोऽवस्थाप्यः ॥२३॥

५३४ धुर्यौ प्रथममित्यपरम् ॥ २४ ॥

धुर्यौ अभ्यन्तरौ अश्वौ प्रथमं सम्मृज्यादिति अपरं मतम् ।

५३५ दक्षिणं पूर्वम् ॥ २५ ॥

धुर्ययोरपि दक्षिणं प्रथमं समृज्यात् ॥ २५ ॥

५३६ तथा प्रष्टी ॥ २६ ॥

तथैव प्रष्टी बहिर्युक्तावश्वौ समृज्यात् तयोरपि दक्षिणं पूर्वमित्यर्थः । अस्मिन्नपि मते यथापाठमेव मन्त्रक्रमः ॥ २६ ॥

५३७ सर्वाण्येकैकस्मिन्नुदक्संस्थमिति शाण्डिल्यः ॥ २७ ॥

अष्टावप्यश्वनामानि प्रत्येकमश्वेषु प्रयुञ्ज्यात् । उदगपवर्गम् ॥ २७ ॥

५३८ सर्वाण्येकस्मिन् तूष्णीमितराणीत्यपरम् ॥ २८ ॥

अष्टावप्यश्वनामानि एकस्मिन्नेव दक्षिणेऽश्वे प्रयोज्यानि, तूष्णीमितरान् समृज्यादिति ॥ २८ ॥

५३९ एतान्येवाश्वास्वश्वतरेष्वश्वतरीषु च यथार्थमूहेत् ॥ २९ ॥

तत्र वडवासु स्त्रीलिङ्गमात्रस्योहः । यथा अश्वासि अत्या-

---

*अश्वोसि, अत्योसि, मयोसि, हयोसि, वाज्यसि, सप्तिरसि, अर्वासि, वृषासि, इत्यष्टौ नामानि ॥

[1] क मयोऽसि हयोऽसि

सीति, वृषासीत्यस्य स्थाने *स्त्यसीत्यूह् । मयोसीति मय-शशब्दः सकारान्त सुखवचनः सुखमसीत्यर्थं । तदनूह्यमेव । अत्योसीति सन्ततगमनार्थशब्द । शिष्टानि पञ्चनामान्यश्वजाति-वाचकानि । तत्स्थाने अश्वतरेविषये अश्वतरशब्दः कार्यः । तत्रापि स्त्रियामश्वतरी असीत्याद्यूह्यम् ॥ २९ ॥

५४०. त्रिभिश्चेदर्द्धान्येकस्मिन्नर्द्धानिद्वयोः ॥ ३० ॥

यद्यश्वरथस्त्रिभिरश्वं युक्तःस्या तदानीमर्द्धानि चत्वा-र्यश्वनामान्येकस्मिन् ब्रूयात्, इतराणि चत्वारि द्वयोरश्वयोः समं विभज्य ब्रूयात् ॥ ३० ॥

५४१. द्वैधंद्वयोः ॥ ३१ ॥

यदि द्वाभ्या अश्वाभ्या रथोयुक्त स्यात्, तदा द्वयो-रश्वयोः द्वैधमश्वनामानि सम विभजेत् ॥ ३१ ॥

इति पञ्चमपटले तृतीय. खण्ड



अथ चतुर्थः खण्डः

५४२. [1]आदित्यानामिति रथशिर आलभ्य जपेत् ॥ १ ॥

संमार्जनानन्तरमादित्यानामिति जप ॥ १ ॥

५४३. यद्यस्य स्या[2]द्वायोरिति चर्मण्य प्रतिगृह्णीयाभ्क्षत्राणामि-स्य[3]स्थिमयं म्[4]यम्येस्ययो लोहे हिरण्यश्च ॥ २ ॥

*स्त्यसीत्यत्र वृष्टिरसीत्यपिस्त्वापि भाष्यम् ॥

1. ता-ब्रा-१-७-२ । 2. ता-ब्रा-१-७-३ । 3 ता-ब्रा-१-७-३ ।
4. ता ब्रा-१-७-३ ।

यत्र यद्द्रव्यं रथाङ्गं चर्मलोहहिरण्यादिनिर्मितं स्यात्, तत्र वायोरिति चर्मविकारं प्रतिगृह्णीयात् । अस्थिमयं गजदन्तादिनिर्मितं, अयोलोहे हिरण्य इति आयसं ताम्रं सौवर्णञ्चेत्यर्थः ॥ २ ॥

५४४. द[1]क्षिणेनरथंगत्वा रथन्तरमसीतिदक्षिणञ्चक्र मालभते ॥३॥

स्पष्टम् ॥ ३ ॥

५४५. [2]वामदेव्यमसीत्यधिष्ठानम् ॥ ४ ॥

अधिष्ठान–उपवेशनस्थानम् ॥ ४ ॥

५४६. बृहदसीत्युत्तरं चक्रम् ॥ ५ ॥

गतम् ॥ ५ ॥

५४७. अं[3]कान्यङ्कू इति चक्रे एन संमृश्याद् ॥ ६ ॥

ये एव पूर्वमालब्धे चक्रे त एव पुनरपीति एव शब्दार्थः ॥६॥

५४८. वै[4]श्वानरइति दक्षिणेन पादेनारोहेत् ॥ ७ ॥

रथमिति शेषः ॥ ७ ॥

५४९. *तदपि वेदितमवपन्नं दक्षिणश्चक्रन्निर्वर्त्यस्यमन्वीक्षयेत् पूर्वस्यान्तेन तेनत्वाऽऽय इति ॥ ८ ॥

तच्चक्र अङ्कादिनाऽवपन्न विनष्टं यजमानेनाऽऽवेदितञ्चेत् दक्षिणञ्चक्रमक्षन्निर्वर्त्यं निष्कृष्य तस्य चक्रस्य आरं यज-

*५४९, ५५०, ५५२ एतत् सूत्रत्रय लाट्यायने नास्ति ।

1. ला-श्रौ-१-७-४ । 2. ला-श्रौ-१-७-४ । 3. ला-श्रौ-१-७-५ ।
4. ला-श्रौ-१-७-६ ।

मानं दर्शयेत् प्रतिगृहीता, पूर्वस्यमन्त्रस्य अन्तेन, 'तेनोऽग्नयः पप्रयः पारयन्त्वित्येतेन । तत्र 'न' इत्यस्मच्छब्दस्य स्थाने '[1]ते त्वाग्नय' इति युष्मच्छब्दं यजमानमभिप्रेत्य प्रयुञ्ज्यात् ॥ ८ ॥

५५०. [2]तेमा, इतीतरो ब्रूयात् ॥ ९ ॥

इतरो–यजमानः, तेमा अग्नयः पप्रयः पारयन्त्विति ब्रूयात् ॥ ९ ॥

५५१. आरुह्य जपेत् गिर्द[3]पत इति ॥ १० ॥

स्पष्टम् ॥ १० ॥

५५२. तदपि वेदितं शमरथं शाखास्तंबमालभ्य अन्तरा[4]वर्त्मनी एतेनैवान्वीक्षेत ॥ ११ ॥

शमरथ.–शान्तरथ ·जीर्णोरथ इत्यर्थः । यजमानेन जीर्णो रथ इति निवेदितं रथं चक्रवर्त्मनोः मध्येनावकाशेन गिर्दपत इत्येतेनैव निरीक्षेत । तदिति नपुंसकलिङ्गं छान्दसम् ॥ ११ ॥

५५३. [5]कृशेति सव्यानभीशूनायच्छेत् ॥ १२ ॥

सव्यान*भीशून्रश्मीनायच्छेत् ॥ १२ ॥

५५४. दासेति दक्षिणानवगृह्णीयात् ॥ १३ ॥

दक्षिणानभीशून् ॥ १३ ॥

५५५. अवरुह्य सकृद्वारुणमुक्त्वा यथादेवतमादित्योपस्थानं जपेदिति गौतमः ॥ १४ ॥

*अभीशु प्रग्रहे रश्मावित्यमरः

1. ता-ब्रा-१-७-४ । 2. ता-ब्रा-१-७-४ । 3. ता-ब्रा-१-७-७ ।
4. क. चक्रवर्त्मनी । 5. ता-ब्रा-१-७-८ ।

रथादवरुह्य वरुणस्त्वानयतु देवि दक्षिणे इत्येतं वारुण-मन्त्रं [1]बहुवचनोहेन सकृदुक्त्वा यथादेवतमश्वांश्चरथञ्चादिश्य तेनामृतत्वमशीयेति उपरिष्टाज्जपमूहेन सकृद्ब्रूयात्। तद्यथा वरुणो वो नयतु देव्यो दक्षिणा वरुणायाश्वान्। उत्तानायाङ्गिरसाय रथं तैरमृतत्वमशीयेति ॥ १४ ॥

५५६. सम्मार्जनप्रभृत्येतत्सर्वं कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टाज्जपौ वारुणमश्वेभ्यो रथायचेति धानञ्जय्यः ॥ १५ ॥

अश्वसम्मार्जनप्रभृत्यवरोहणा[2]न्तं कर्म कृत्वा, रथाश्वान् विमुच्य, पृथगेव [3]पुरस्ताज्जपः उपरिष्ठाज्जप वारुणञ्चेति मन्त्रत्रय अश्वेभ्यो रथाय च कार्यम्। न तन्त्रेणेत्यर्थ ॥ १५ ॥

५५७. ग्लायेच्चेद्यथासनं चैतत् सर्वं जपेत् ॥ १६ ॥

यद्यश्वग प्रतिगृहीता स्यात् तदा यथासन-सादस्यासीन एवाश्वनामप्रभृति मन्त्रान् जपेत् ॥ १६ ॥

५५८. पृष्ठ्यञ्चेद्दद्यात् प्राग्वारुणादश्वनामानि जपेत् ॥ १७ ॥

*पृष्ठ्यञ्चेद्दद्यात्—यदि पृष्ठ्य-लक्षणयुक्तं श्रेष्ठ अश्वं दद्यात् तदा वरुणस्त्वानयत्वित्यतः प्रागश्वनामानि जपेत् ॥ १७ ॥

*द पृष्ठे साधु पृष्ठ्य पृष्ठेन वहने शिक्षित इत्यर्थं तञ्चेद्दद्यात्तदा वरुणस्त्वानयत्वित्यतः प्रागश्वनामानिजपेदिति। द्विविधोऽश्व। पृष्ठेदान्त, वहने दान्त इति। तथा च आपस्तंब, 'मातृमन्त पितृमन्त पृष्ठे वहे च दान्त'मिति। आप सू-२०-२-१०।

1 ला २ ३ १७। 2 गा-ब्रा-४ ३ २३ ५ ४-१४।
3 ता-ब्रा-२ ३-१४. १९।

५५९ पुरस्ताज्जपाद्वा ॥ १८ ॥

स्पष्टम् ॥ १८ ।

५६० तथा दान्तेषु ॥ १९ ॥

+दान्तेषु—सुशिक्षितेष्वश्वेषु तथैव [1]अश्वनामजप युर्यु ॥ १९ ॥

५६१ यद्र॰य स्यात्तेन तत्प्रतिगृह्णीयात् ॥ २० ॥

यद्रथगत व्रीहियवादिक तत्सर्वं रथमन्त्रेणैव प्रतिगृह्णीयात् । रथप्रतिग्रहणनेव तत्प्रतिगृहीत भवति न पृथक प्रतिग्रह कार्यं इत्यर्थ । यत्पूर्वमुक्त, वायोरिति चर्मण्य प्रतिगृह्णीयादिति तत अपृथग्भूते रथावयवे मन्त्रविशेषविधायक अत्र तुपृथग्भूत व्रीहीयवादिक रथ्यमित्युच्यते ॥ २० ॥

५६२ अजस्येति[2] प्राग्वारुणा[3]उजपेत्, पुरस्ताज्जपाद्वा ॥ २१ ॥

अजप्रतिग्रहे क्रियमाणे वरुणस्त्वा नयतु देवीत्यत' प्राग-नस्याजपतिरिति मन्त्र जपेत् । पुरस्ताज्जपाद्वतिस्पष्टम ॥ २१ ॥

५६३. [4]मनास्त्वाक्रन्तमिति वसनस्य ॥ २२ ॥

वसनस्य प्रतिग्रहे मनास्त्वाक्रन्तमिति मन्त्र प्राग्वारुणा उजपेत, पुरस्ताज्जपाद्वा ॥ २२ ॥

---

+अस्मिन् सूत्रे अग्निस्वामि भाष्य—तथा अदान्तेषु अश्वेषु यथा पूर्व्य तेन प्रकारेणति । तथा रुद्रस्कन्द वृत्तौ—अदान्तेषु—अशिक्षितेष्विति, तथा किशोराणामपि ग्रहणार्थम ।

---

1 द्र नाम्ना अश्व प्राप । 2 ता-ब्रा-१ ४ ७ । 3 द्र वारुणादवे
4 ता ब्रा १ ८ ६।

५६४. तद्दुदस्येद्तान्त्वे ॥ २३ ॥

कार्पासतन्तुविकारस्तान्तव अतान्तवादो [1]वस्त्रे ग्नास्त्वा-कृन्तन्निति मन्त्र त्यजेत् ॥ २३ ॥

५६५. हिर[2]ण्यमल्पीयो भोगादागच्छेदौदुम्बर्यामाश्लेषयेत् ॥ २४ ॥

उपभोगाय अपर्याप्त हिरण्यमेकमान द्विमानवा यच्छेत् । सदसस्थूणायामौदुम्बर्यामाश्लेषयेत् ॥ २४ ॥

५६६. आग्नीध्रीयेवा जुहुयात् ॥ २५ ॥

तूष्णीमग्निमुद्दिश्य त्यजेत् ॥ २५ ॥

५६७ समस्तान्व्रीहियवानेकक्रतौ [3]प्रतिगृह्णीयात् ॥ २६ ॥

एकस्मिन् क्रतौ ये व्रीहियवाः दत्ता[4]स्तानुभयान् समस्यैव — तन्त्रेण, प्रजापतये व्रीहियवानिति, मन्त्रेण प्रतिगृह्णीयात् । न पृथक् पृथक्प्रजापतये व्रीहिन्यवानिति । समस्यैव मन्त्राम्नानात् । [5]यत्र पुन व्रीहियवयोरेक एव दीयते तत्र मन्त्रो व्यासेन प्रयोज्य । प्रजापतये व्रीहीन प्रजापतये यवानिति । एकक्रताविति वचन क्रतुभेदेन दत्ताना व्रीहियवाना समस्य प्रतिग्रहनिवृत्यर्थम् ॥ २६ ॥

५६८ तथा [6]तिलमाषान् ॥ २७ ॥

तथा तिलमाषानपि क्षेत्रपतये तिलमाषानिति मन्त्रेण समस्यैव प्रतिगृह्णीयात् ॥ २७ ॥

---

1 इ वल्कलादी । 2 ता-ब्रा-१८५ । 3 ता ब्रा-१८-१४ ।
4 इ एक क्रतौ दत्ता । 5 अन्यथा प्रजापतये व्रीहीन् प्रजापतये यवानिति व्यसस्यैव आम्नानं स्यात । 6 ता ब्रा-१८१५ ।

५६९. प्राजापत्येनानादिष्टदेवताः प्रतिगृह्णीयात् ॥ २८ ॥

अनादिष्टदेवता दक्षिणाः प्राजापत्येन प्रतिगृह्णीयात् । गर्दभादिकं-प्रजापतये गर्दभं, प्रजापतये महिषमिति ॥ २८ ॥

५७०. तूष्णीमयज्ञे दक्षिणा इति धानञ्जय्यः ॥ २९ ॥

श्रौतसंबद्धं यत्कर्म स यज्ञः, तस्मादन्यत्र स्मार्तादिषु तूष्णीमेव दक्षिणाप्रतिग्रह इति धानञ्जय्यः । तथा च आपस्तम्बः, [1]इमे नानातृणां दक्षिणानां प्रतिग्रहणाः स्युरिति ॥ २९ ॥

५७१. भूर्भुवस्स्वरिति गौतमः *ओमिति वा ओमिति वा ॥ ३० ॥

व्याहृतिभिः प्रणवेन वा स्मार्तादौ प्रतिग्रह इति, न मन्त्रान्तरमिति ॥ ३० ॥

इति पञ्चमपटले चतुर्थः खण्डः

इति छन्दोगसूत्रस्य पञ्चमः पटलोऽधुना ।
व्याख्यातो धन्विना सम्यगनुगृह्णन्तु सूरयः ॥

इति पञ्चम. पटलः समाप्तः



*इदमेव प्रमाणमुपजीव्य 'पूर्णपात्रं दक्षिणा' (खादिर-गृ २·१·३०) इति स्थालीपाकप्रकरणसूत्रे पूर्णपात्रं ब्रह्मणे दक्षिणां दद्यात्, स च तूष्णीं ओमिति वा प्रतिगृह्णीयादिति रुद्रस्कन्देन व्याख्यातम् ॥

1. आप-सू-१४-१२ १ ।

## अथ षष्ठ पटलः

### प्रथम खण्ड

५७२ भूतं नाराशंसं भक्षयित्वाऽऽङ्ग्रनीये प्रत्नोना पृष्ठहोमं जुहु-
याद्यत्पृष्ठस्यात्तदादिश्यादः पिबतु सोम्यं मध्वायुर्दधद्यज्ञ-
पतावविहुतमिमं यज्ञमभिसंवसाना होत्रास्तृप्यन्तु सुमनस्य
मानां स्वाहेति पूर्वाम् ॥ १ ॥

भरत्सतोयशस्नानन्तर प्रथम नाराशस भक्षयित्वा तस्या-ऽऽप्यायन च कृत्वा होतृ मैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीद्ध्रीयमाहवनीयगत्या[1]ऽद. पिबस्यिति मन्त्रेण पृष्ठहोम जुहुयात्। [2]यत्साम, रथन्तर बृहद्वा पृष्ठस्तुति-साधन स्यात्, अद पिबस्यिति तदादिश्य जुहुयात्। तद्यथा, रथन्तर पिबतु सोम्य, बृहत्पिबतु सोम्यमित्यादि ॥ १ ॥

५७३. स्वाहाकारेणोत्तराम् ॥ २ ॥

केवल स्वाहेति द्वितीयाहुति. कार्या ॥ २ ॥

५७४. द्वैधं जुहुयादिति धानञ्जय्यः ॥ ३ ॥

अद. पिबस्यिति मन्त्र द्वेधा विभज्य जुहुयादित्यर्थं ॥ ३ ॥

त विभागमेवाह—

५७५. *अदः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतं स्वाहेति
पूर्वाम् । इम यज्ञमित्युत्तरां होतृक पृष्ठेभ्य इति ॥ ४ ॥

*ट पुस्तके पूर्वामित्यन्त एक सूत्र इममित्यादि पृष्ठेभ्य इत्यन्तमपरम् ।

1. ऋग्वेदे-१०-१७०-१। 2. ड पुस्तके यत्सामेति वाक्यं नास्ति।

इम यज्ञमिति मन्त्रखण्डेनोत्तरा जुहुयात् । होतृकपृष्ठेभ्यो वामदेव्यादिभ्य इति । होतृके मैत्रावरुणादिभिः वामदेव्यादीनामनुशंसनाद्धोतृकपृष्ठव्यपदेशः । चत्वारि हि पृष्ठसामानि, होतुः पृष्ठं प्रथममिति ॥ ४ ॥

५७६. रेवतीषु वारवन्तीयमिति षष्ठे पृष्ठादेशं गौतमः ॥ ५ ॥

पृष्ठ्यषडहस्य षष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवतीति [1]ब्राह्मणम् । तत्र रेवतीषु वारवन्तीयं पिबत्विति पृष्ठादेशः कार्यः । ननु च वारवन्तीयं पिबत्विति साममात्रमादेष्टव्यम् । किमर्थं रेवतीष्विति ऋगादेशः क्रियते? उच्यते—नैवायमृगादेशः, किन्तु सामादेश एवाऽयम् । निमित्तसप्तमी चैवेयं रेवती साम्नि-निमित्ते रेवतीसामार्थं वारवन्तीयं पिबत्वित्यर्थः । कुत एतत्[2]? षष्ठेऽहनि रेवतीसाम्न एव पृष्ठत्वात्, तथा च रथन्तरादि पृष्ठसाम्नां सृष्टिवर्णने [3]'स रेवतीरसृजत, तद्‌वामदेव्योऽन्वसृजते'ति ब्राह्मणं रेवतीनामेव पृष्ठत्वमाह । तथा +निदानकारेणाऽपि योनिद्वारेण रेवतीनामेव पृष्ठत्वमिति वर्णितम् । केनचित्तु दोषेण पृष्ठस्थानात् प्रच्याव्य पवमाने स्थापिता आपो वै रेवत्यः (आ) यत्पृष्ठं कुर्युरपशुर्यजमानस्स्यात् तस्मात् [4]पवमाने कुर्वन्तीति ब्राह्मणेन पवमाने स्थिताऽपि [5]स्तोत्रीयामुखेन पृष्ठकार्यं

+ अथषष्ठेऽहनि रेवतीषु वारवन्तीयं पृष्ठं भवति तदेके प्रत्यक्ष ब्रुवते इत्यादिना विस्तरतः प्रतिपादितम्, निदानसूत्रे प्रपा-४-ख-४ ।

1. ता-ब्रा-१३-६-४ । 2. ङ वारवन्तीयमेव पृष्ठं तत्किमन्यार्थमिति, नैवम् । 3. ता-ब्रा-७-८-१३ । 4. ता-ब्रा-१३-९-१६ । 5. ङ योनिद्वारेण

कुर्वन्ति। यथा राजा स्वयं असन्निहित एव स्वकीयैः पुरुषैः लोक-रक्षणं करोति गृह्णाति च निर्येश, तद्वत्, तेन वारवन्तीयद्वारेण रेवत्यः पिबन्त्विति आदेशस्यार्थ इति ॥ ५ ॥

५७७. महाव्रतमिति व्रते ॥ ६ ।

महाव्रतेऽहनि महाव्रतं पिबत्वित्यादेशः। गायत्र बृहद्रथन्तर भद्रराजनानां समुदायो महाव्रतम् ॥ ६ ॥

५७८. रेवत्यश्च वारवन्तीयश्चेति धानञ्जय्यः ॥ ७ ॥

यद्यपि रेवतीसामैव स्वयोनिमुखेन पृष्ठं। तथापि वारवन्तीयमपि साक्षात्तत्र भवति द्वयमप्यादेष्टव्यमिति ॥ ७ ॥

५७९. यावन्ति [1]पृष्ठस्थानि स्युः सर्वाण्येव प्रतश्नुयीत ॥ ८ ॥

यावन्ति पृष्ठस्तुतौ सामानि भवन्ति तानि सर्वाणि स्वरूपेणैव [2]अप्तोर्यामादौ निर्दिशेत्। यथाऽप्तोर्यामे गर्भकारस्तवने बृहद्वैराजे पिबतामिति ॥ ८ ॥

५८०. पिबतु दधदिति यथार्थमूहेत् ॥ ९ ॥

*पिबतां पिबन्तु दधतो दधन्तीति ॥ ९ ॥*

५८१. बृहता रथन्तरेण वा स्तोष्यमाणः प्रास्तोषयोमादृशन्या-हृतीर्मनसा ध्यायेत् [3]ऐरमिति ॥ १० ॥

ऐर वै बृहदैडरथन्तरमित्यादि, असौ वै लोकोबृहदयं रथन्तरमित्यन्तं ब्राह्मणपठितादश व्याहृतय.। तत्र रथन्तरस्य पञ्चव्याहृतयः बृहत. पञ्च। उभयोरपि ध्यातिपनतः ता.सर्वा अपि उभयोर्मानि प्रत्येकं मनसा ध्यायेत् ॥ १० ॥

1. ड. पृष्ठस्थानानि। 2. ड स्वरूपेणैवनिर्दिशेत्। 3. ता-ब्रा-७-६-१७।

५८२. रथन्तरएवर्च [1]यस्ते गोष्विति ॥ ११ ॥

यस्तेगोष्वित्यृचं रथन्तरगान एव व्याहृत्यनन्तरं ब्रूयात् ॥ ११ ॥

५८३. युक्त्वा स्तोममेतद्ब्रूयादिति शाण्डिल्यः ॥ १२ ॥

स्तोमयोगानन्तरं यस्ते गोष्वित्येतत् ब्रूयात् ॥ १२ ॥

५८४. *ऋचं पूर्वं व्याहृतिभ्यः ॥ १३ ॥

तत्रापि व्याहृतिभ्यः पूर्वं ऋचं ब्रूयात् । तत उत्तरं व्याहृतिभिः मनसैवेति शाण्डिल्य इति ॥ १३ ॥

५८५. इतरत् धानञ्जय्यः ॥ १४ ॥

इतरत्—पूर्वोक्तं धानञ्जय्यमतमिति ॥ १४ ॥

५८६. रथन्तरे प्रस्तुयमाने सर्वत्र संमीलेत् ॥ १५ ॥

सर्वासु अपि स्तोत्रीयासु रथन्तरप्रस्तावे संमीलनमुद्गातृकार्यं । [2]स्वर्दृशं प्रति वीक्षेतेति ब्राह्मणात्, प्रथमायामेवर्चि संमीलनं स्यादित्याशंक्य तन्निवृत्त्यर्थं सर्वत्र इति वचनम् ॥ १५ ॥

५८७. एकैकं मनसाक्षरं स्तोभैर्वाचा युगपत् संयुञ्ज्यात्, भकारादिभिरकारान्तैः अक्रान्तैः प्रथमस्वरैरुत्तमो द्वितीयःस्वर प्राक् प्रतिहारादक्षरं त्रिष्टुप्वा ॥ १६ ॥

प्रस्तावानन्तरं आर्चिकमेकैकमक्षरं मनसा स्मरन् तत्तत्स्थाने वाचोच्चार्यमाणे स्तोभे युगपदेव संयुञ्ज्यात् । कीदृशैः स्तोभैरित्याह - भकारादिभिरकारान्तैरिति । भ भ भ भेत्येवं रूपैः अक्रान्तैर[3]विलम्बितैरित्यर्थः । कुत पुन विलम्बशंका ? रथ-

*ड. पुस्तके ५८३, ५८४ सूत्रं समस्यैकीकृतं ।

1. ता ब्रा-७-७-११ । 2. ता ब्रा ७-७-१२ । 3. ड. असंक्रान्तैः ।

कुर्वन्ति। यथा राजा स्वय असन्निहित एव स्वकीयै पुरुषै लोकरक्षण करोति गृह्णाति च निर्वेश, तद्वत्, तेन वारवन्तीयद्वारेण रेवत्य पिबन्त्विति आदेशस्यार्थ इति ॥ ५ ॥

५७७. महाव्रतमिति व्रते ॥ ६ ।

महाव्रतेऽहनि महाव्रत पिबत्वित्यादेशः। गायत्र बृहद्रथन्तर भद्रराजनाना समुदायो महाव्रतम् ॥ ६ ॥

५७८. रैवत्यश्च वारवन्तीयश्चेति धानञ्जय्यः ॥ ७ ॥

यद्यपि रेवतीष्वामैव स्वयोनिमुखेन पृष्ठ। तथापि वारवन्तीयमपि साक्षात्तत्र भवति द्वयमप्यादेष्टव्यमिति ॥ ७ ॥

५७९. यावन्ति [1]पृष्ठस्थानि स्यु सर्वाण्येव प्रसङ्ख्यायीत ॥ ८ ॥

यावन्ति पृष्ठस्तुतौ सामानि भवन्ति तानि सर्वाणि स्वरूपेणैव [2]अप्तोर्यामादौ निर्दिशेत्। यथाऽप्तोर्यामे गर्भकारस्तवने बृहद्वैराजे पिबतामिति ॥ ८ ॥

५८०. पिबतु दधदिति यथार्थमूहेत् ॥ ९ ॥

पिबता पिबन्तु दधती दधन्तीति ॥ ९ ॥

५८१. बृहता रथन्तरेण वा स्तोष्यमाणः प्रावस्तोमयोगाद्दशव्याहृतीर्मनसा ध्यायेत् [3]ऐरमिति ॥ १० ॥

ऐर वै बृहदैडरथन्तरमित्यादि, असौ वै लोकोबृहदय रथन्तरमित्यन्त ब्राह्मणपठितादश व्याहृतय। तत्र रथन्तरस्य पञ्चव्याहृतय बृहत पञ्च। उभयोरपि व्यस्तिपक्ता ता सर्वा अपि उभयोर्गाने प्रत्येक मनसा ध्यायेत् ॥ १० ॥

---

1 ड पृष्ठस्थानानि। 2 ड स्वरूपेणाप्तोर्यामादिषु निर्दिशेत्। 3 ता-ब्रा-७-६-१७।

५८२ रथन्तरएवर्चं [1]यस्ते गोष्विति ॥ ११ ॥

यस्तेगोष्वित्यृच रथन्तरगान एव व्याहृत्यनन्तर ब्रूयात् ॥ ११ ॥

५८३. युक्त्वा स्तोममेतद्ब्रूयादिति शाण्डिल्यः ॥ १२ ॥

स्तोमयोगानन्तर यस्ते गोष्वित्येतत् ब्रूयात् ॥ १२ ॥

५८४. *ऋचं पूर्वं व्याहृतिभ्य । १३ ॥

तत्रापि व्याहृतिभ्य पूर्वं ऋच ब्रूयात् । तत ऊत्तर व्याहृतिभि मनसैवेति शाण्डिल्य इति ॥ १३ ॥

५८५. इतरत् धानञ्जय्यः ॥ १४ ॥

इतरत्—पूर्वोक्त धानञ्जय्यमतमिति ॥ १४ ॥

५८६. रथन्तरे प्रस्तूयमाने सर्वत्र संमीलेत् ॥ १५ ॥

सर्वासु अपि स्तोत्रीयासु रथन्तरप्रस्तावे समीलनमुद्गातृ कार्यं । [2]स्वर्दृश प्रति वीक्षेतेति ब्राह्मणात्, प्रथमायामेवर्चि समीलन स्यादित्याशङ्कय तन्निवृत्त्यर्थं सर्वत्र इति वचनम् ॥ १५ ॥

५८७. एकैक मनसाक्षरं स्तोभैर्वाचा युगपत् संयुञ्ज्यात्, भका रादिभिरकारान्तैः अक्रान्तैः प्रथमस्वरैरुत्तमोऽद्वितीयःस्वर प्राक् प्रतिहारादुत्तरक्षर शिष्ट्वा ॥ १६ ॥

प्रस्तावानन्तर आर्चिकमेकैकमक्षर मनसा स्मरन् तत्तत्स्थाने वाचोच्चार्यमाणै स्तोभै युगपदेव सयुञ्ज्यात् । कीदृशै स्तोभैरित्याह—भकारादिभिरकारान्तैरिति । भ, भ, भ, भ, भेत्येव रूपं अकान्तैर[3]विलम्बितैरित्यर्थं । कुत पुन विलम्बशङ्का ? रथ-

*इ पुस्तके ५८३, ५८४ सूत्र सामञ्जस्यैकीकृत ।

1 ता ब्रा ७-७-१९ । 2 ता ब्रा ७ ७ १५ । 3 इ

न्तरमधिकृत्य, [1]अक्षरेणाक्षरेणप्रतिष्ठापयतोद्गेयमिति सामान्य-वचनात्। प्रत्यक्षरं प्रतिष्ठाप्य गाने विलम्ब स्यात्। तन्नि-वृत्त्यर्थं अक्रान्तैरिति वचनम्। तेषामुत्तमस्तोभो द्वितीय स्वरं, अन्ये प्रथमस्वरा। प्राक्प्रतिहारभक्तेश्चतुरक्षरं शिष्ट्वा तत पूर्वमेव स्तोभप्रयोग ॥ १६ ॥

५८८. तत्सर्वत्र प्रतिवीक्षेत ॥ १७ ॥

ततश्चतुरक्षरं गीयमानं प्रतिवीक्षेत। तदानीं सम्मीलनं न कार्यमित्यर्थं। स्वदेशं प्रति वीक्षेतेति उपलक्षणमिति दर्शयितु सर्वत्रेति वचनम् ॥ १७ ॥

५८९ स्तुत्वा वरश्चोदयेत् ॥ १८ ॥

[2]वरो मे देय इति ॥ १८ ॥

५९०. तस्यापृष्ठस्य सतो निर्गतेरन् धर्मा, सहस्तोभैरिति गौतमः॥ १९॥

तस्य रथन्तरस्य पृष्ठादन्यत्र पवमानादौ स्थितस्य स्तो-भैस्सह धर्मा [3]पृष्ठहोमादयो वरचोदनान्ता न कार्या। तथा ब्राह्मणोक्तनाश्च धर्मा "[4]वागित्यादेय" "[5]क्षिप्रगेय"मित्यादयो-ऽपि ॥ १९ ॥

५९१. स्तोभा एवान्यीष्विति धानञ्जय्यः ॥ २० ॥

पृष्ठादन्यत्र स्तोभा एव प्रवर्तेरन्। इतरे निवर्तेरन्निति धानञ्जय्य ॥ २० ॥

५९२ अग्निष्टोम मन्निपाम्नोरेवाशुं स्तोभैरिति शाण्डिल्यः ॥२१॥

1 ता ब्रा-७ ७-१२। 2. य रथन्तरेण स्तुत्वा यजमान वरं चोदयेत्।
3 द्रा १ १-१। 4 ता ब्रा-७ ७ १। 5. ता-ब्रा-७ ७ १२।

अपृष्ठभूत रथन्तर अग्निष्टोम मन्धिस्तोत्रयोरेव स्तोभेत् ।
न पवमानगतमिति शाण्डिल्य ॥ २१ ॥

५९३ सर्वत्राऽस्वस्तोत्रीय न स्तोभेदिति स्थविरो गौतमः ॥ २२ ॥

सर्वत्र पृष्ठस्थाने ततोऽन्यत्रापि । [1] स्वस्तोत्रीयासु रथन्तर न स्तोभेदिति स्थविरो गौतम । तन्मते कयानश्चित्र-आभुवदित्येतासु पृष्ठस्थानेऽपि रथन्तरस्य स्तोभनिवृत्तिरिति ॥

इति षष्ठपटले प्रथम खण्ड

---

अथ द्वितीयः खण्डः

५९४ वामदेव्येन स्तोष्यमाण प्राङ्स्तोमयोगात् गावो अश्वा अजावयो व्रीहयो यवा इति मनसा ध्यायेत् ॥ १ ॥

वामदेव्येन स्तोष्यमाणो गावो अश्वा इति मन्त्र मनसा ध्यायेत् । अत्र [2]अनिरुक्त गेयमिति ब्राह्मणम् । तत् कयानश्चित्र आभुवदिति स्तोत्रीयस्य अनिरुक्तदैवतस्य प्रशसार्थं, तद्व्यतिरिक्तानि त्रीण्यपि पृष्ठस्तोत्राणि निरुक्तानि, तेषु प्रत्यक्षमिन्द्र पदश्रवणात् । तलवकारास्तु गायत्रसामवत् प्रणवेनैवानिरुक्त वामदेव्य गेयमित्याहु । १ ॥

५९५ ब्रह्मसामनि यः कामो यजमानस्य स्यात् स सिद्ध्यत्विति ध्यायन्नुपासीत ॥ २ ॥

ब्राह्मणाच्छसी यत्सामानुशसति तत् ब्रह्मसाम, तृतीय पृष्ठ नौधस श्यैतादि, तस्मिन गीयमाने यजमान स्वाभिलषित सिद्ध्यत्वित्युपासीत ॥ २ ॥

---

1 द स्वस्तोत्रीयविधुरम । 2 ता ब्रा ७ ९ १७ ।

५९६. तथेतर उद्गायेत् ॥ ३ ॥

इतरोप्युद्गाता तथैव उपासीत ॥ ३ ॥

५९७. आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डं त्रीन् त्रीन्वाऽपरया द्वारा हविर्द्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्युः, यदा सन्नाः स्यात् [1]अत्र पितरोमादयध्वं यथा भागमावृषाय ध्वमिति ॥ ४ ॥

तृतीयसवने आर्भवेण पवमानेन स्तुत्वा नाराशंससादनानन्तरं उत्थाय पुरोडाशादेकैकं[2] त्रीन् त्रीन्वा गृहीत्वा अपरया द्वारा हविर्द्धानं प्रविश्य स्वस्य चमसस्य अधस्तान्निर्वपेयु । यदासन्नः स्यादिति - यदा स्वीयचमसभक्षणानन्तर सन्न. सादितः स्यात्तदेतदित्यर्थः ॥ ४ ॥

५९८. तमाह्रियमाण प्रतिमन्त्रयेरन्[3]मीमदन्त पितरो यथा भागमावृषायिषतेति ॥ ५ ॥

त नाराशसं स्वीयच्चमस भक्षायाऽऽह्रियमाणमित्यर्थः ॥५॥

५९९ सौम्यमाहृतमुद्गाताऽवेक्षेत [4]आयुर्मेप्राण इति ॥ ६ ॥

सौम्य चरुमाहृतम् ॥ ६ ॥

६०० पुनरस्मासु दधमसीत्यन्तम् ॥ ७ ॥

आयुर्मे प्राणइत्यस्यमन्त्रस्य पुनरस्मासु दधमसीत्यवसानम् । ननु किमर्थं मन्त्रान्तोपादान? उत्तरसूत्रे तच्छब्देन

1. मन्त्र ब्रा-२ ३ ६, आश्व २-७ १,द्रा ७ २-१३, गोभि गृह्य-४-३-११, खादिर-३-२-१७ । 2 ए शकल । 3 मन्त्र ब्रा २-३ ७ गोभि ४-३-१२, आश्व-२-८-४, द्रा १ २-१३ । 4 ता ब्रा १-५-१७ ।

तत्परामर्शार्थम् । किञ्च अनुवृत्ते मन्त्रान्ते येनाह्याजिमिति उत्तर मन्त्रोपादानात् ततः प्राक् सर्वमेको मन्त्रःस्यात्, तन्निवृत्यर्थं वचनम् । नन्वेव यन्मे यमं वैवस्वतमिति उत्तरमन्त्राम्नानं किमर्थमुच्यते? [1]यन्मे मनो यमं गतमिति पूर्वेण मन्त्रेण सह तुल्यार्थत्वाद्विकल्प्यते, आम्नानबलादित्यभिप्रायः ॥ ७ ॥

६०१. तं दशमेऽहन्यभ्यस्येत् ॥ ८ ॥

पुनरस्मासु वध्मसीति मन्त्रान्तं दशमेऽहन्यभ्यस्येत् । प्रत्यक्षानुष्टुप्त्वनिवृत्यर्थं दशमेऽहनि परोक्षमनुष्टुभमुपयन्ति । [2]यत्प्रत्यक्षमुपेयुः प्रजापतिमृच्छेयुरिति ब्राह्मणात्, प्रत्यक्षानुष्टुभो वर्जनीया इति ॥ ८ ॥

६०२. यन्मेयममित्येके ॥ ९ ॥

दशमेऽहनीत्यनुवर्तते । दशमेऽहनि यन्मेमनो यम गतं इति पूर्वमन्त्रस्य स्थाने [3]यन्मे यमं वैवस्वतमित्येतदेव कुर्यात्, न विकल्पः कार्यः इत्येके । कुतः? उत्तरो हि मन्त्रः स्वरूपत एवानुष्टुब्भवति पञ्चपदत्वात्, पूर्वस्तु स्वरूपतोऽनुष्टुप् । स किमभ्यासेनान्यथाकृत्य प्रयुज्यत इति ॥ ९ ॥

६०३. पूर्वेणत्वेवावेक्षेत ॥ १० ॥

तु शब्दः पूर्वमतनिरासार्थः । एवकारो भिन्नक्रमः । दशमेऽहनि पूर्वयाऽनुष्टुभाप्यवेक्षणं विकल्पेन कार्यमेवेत्यर्थः । कुतः, तस्मिन्नहनि दधिघर्मभक्षणादावभ्यासेनैव [4]प्रत्यक्षाऽनुष्टुप्त्वं परिहृत्य प्रयोगदर्शनादिति ॥ १० ॥

1. ता-ब्रा-१-५-१७ । 2. ता-ब्रा. ४-८-९ । 3. ता-ब्रा-१-५-१८ ।
4. ता-ब्रा-५-३-११, १२ ।

६०४. तस्मिन्नङ्गुली अवधायाङ्गुष्ठानामिके इत्येके अक्षिणी विमृजीत येना[1]ग्नाविमिति ॥ ११ ॥

तस्मिन् सौम्येचरौ द्वे अङ्गुलीवाऽङ्गुष्ठानामिकेवाऽव-
धाय ताभ्यामक्षिणी विमृजीत ॥ ११ ॥

६०५. एवमितरौ कुर्यातां प्रतिहर्ता पश्चात् ॥ १२ ॥

अवेक्षण, अक्षिणीविमार्जन च कुर्याताम् ॥ १२ ॥

६०६. तमुत्तरेण प्रतिहर्तारं हरेयुः ॥ १३ ॥

त सौम्य चरु प्रतिहर्तारं उत्तरेण हरेयु ॥ १३ ।

६०७ *द्रव्येप्सुर्भक्षीतैन गच्छत्यन्यतरां रोगार्तोवा अहतेन वाससा प्रच्छाद्य दक्षिणार्धं सदसो गत्वा ॥ १४ ॥

यद्यर्थलिप्सुरुद्गाता**स्यात्तदिद चरु भुञ्जीत[2] अन्यतरा
वां काञ्चित्समृद्धि प्राप्नोति । रोगार्तो वा भुञ्जीत अरोगो
भवति । उभयोरपि सदसो दक्षिणार्धं गत्वाऽहतेन वाससा
प्रच्छाद्य भोजन । ––––– न ––––– दिति ॥ १४ ॥

६०८. यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातावेक्षेत ॥ १५ ॥

यज्ञायज्ञीयस्तुतिकाले सामावयवभूत हिंकार प्रति

*एतत् सूत्र लाट्यायने नास्ति

**त चरु द्रव्येप्सु रोगार्तो वा अहतेन वाससा प्रच्छाद्य
दक्षिणार्धं सदसो गत्वा भुञ्जीत, इति कल्पभाष्ये । द्रव्येप्सु. येन
केनच । रोगार्तोवा अहतेन वाससा प्रच्छाद्य भुञ्जीत, इति
भाण्डपिल्लं प्रयोगे च । उभयत्र उद्गातृपद नास्ति ।

1. ला-श्रौ-१-५ १९ । 2 स रोगार्तोवाभुञ्जीत । अन्यतरामसौ गति गच्छति, अरोगो वा स्यात् म्रियेत वा । न पुन व्याधिनाभिभूयत इत्यर्थ, ॥

पत्नीमुद्गातेक्षेत । न पुनः पर्यायादि भूत हिंकार प्रति । कुत एतत्? हिंकार प्रति संख्यापयन्ति, [1]आतृतीयाया. संख्यापयन्तीति ब्राह्मणं । तिसृषु स्तोत्रीयासु तत्र तत्र हिंकारे वीक्षण-विधानात् । यद्येवं तेनैव सिद्धे किमर्थमिद सूत्रम्? उच्यते — उ[2]द्गात्रा संख्यापयन्तीति ब्राह्मणं अध्वर्यूणामवेक्षण प्रति प्रयोजकव्यापारं विधत्ते इति गम्यते । तन्माभूदिति सूत्र, न प्रयोजकव्यापारविधौ तात्पर्यं किन्तु-उद्गातुरेवेक्षणविधान इति भाव: ॥ १५ ॥

६०९. निधनं प्रति पत्नी दक्षिणमूरुमभि[3]पिञ्चेत ॥ १६ ॥

स्पष्टम् ॥ १६ ॥

६१०. तृतीयायां स्तोत्रीयायां प्रस्तुतायां सर्वं तदुदकं निनयेत्॥१७॥

प्रथमे पर्याये यज्ञायज्ञावो अग्नय इत्यस्या ऋचस्तृतीयेऽभ्यास इत्यर्थः ॥ १७ ॥

६११. उत्तमायां स्तोत्रीयायां भुवद्वाजाइ भुवद्वाजेदित्यभ्यस्येत्, नामिति च निधनमनुष्टुभ[4]मुत्तमामक्षरे[5]णान्तत इतिह्याह॥१८॥

एकविंशात् कृत्वो यज्ञायज्ञीयमभ्यस्यते । तत्र उत्तमेऽभ्यासे भुवद्वाजा इति चतुरक्षरमभ्यस्येत्अनुष्टुप्त्व सिद्धयर्थम् । तथा उतत्रातातनूनामिति ऋगन्त्याक्षर 'नाम्' इत्येत-न्निधनं कुर्यात् । न पुन यथाधीत वाङ् निधन । उभयत्रापि प्रमाणमाह । अनुष्टुभमुत्तमा सपादयति अक्षरेणान्ततः प्रति-

1. ता-ब्रा-८-८-१३, १४ । 2. ता-ब्रा-८-७-१२ ।
3. ता-ब्रा-८-७-१० । 4 ता-ब्रा-८-७-२ । 5. ता-ब्रा-८-६-१३

ष्ठाप्यमिति ब्राह्मणमादिशति । [1]इतो वै प्रातश्छन्दांसि छन्दांसीत्यारभ्य अनुष्टुभमुत्तमां सपादयतीत्यन्तं ब्राह्मणम् -तस्यायमर्थः—[2]'गायत्रं प्रातःसवनं त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवनम्'[3]मित्येवमारूढानां छन्दसां यज्ञायज्ञीयस्तोत्रे प्रथमायामृचि प्रत्यवरोहात् उत्तमायाश्चानुष्टुप्त्व संपादनात् अस्मिन् लोके यजमानः प्रतिष्ठितो भवति । इतरथा छन्दसामारोहात् स्वर्ग एव स्थितः स्यान्नेमं लोकमागच्छेदिति । तथा यस्य वै यज्ञाः वागन्ता भवन्तीति उपक्रम्याक्षरेणान्ततः प्रतिष्ठाप्यमिति ब्राह्मणं । तस्यायमर्थः—यज्ञायज्ञीयस्य वाङ्निधनत्वात् [4]ततः ऋतुर्वागन्तो भवेत् । तदानीमनृतव[5]चनात् यज्ञो नश्येत् । किं पुनरनृतम्? गकाररहितस्य वाशब्दस्य प्रयोगः, वागिति प्रयोक्तव्ये गकाररहितं वाशब्दं प्रयुञ्जानः [6]शब्दानृतं करोति । तथा च किमनृतं किमक्षरमिति प्रस्तुत्य + निदानकारो 'गकारलोपं ब्राह्मणक्षिपती'ति । तत्परिहारार्थं वागिति-कृत्स्नमेवाक्षरमन्ततः कार्यमित्येके । सूत्रकारस्त्वार्चिकमेवान्त्यमक्षरमक्ष[7]रेणेति उक्तं मन्यते । [8]'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौती'त्यादौ अक्षरशब्दस्य आर्चिकविषयत्वादिति ॥ १८ ॥

---

+ किमनृतं किमक्षरमितिवत्येतदक्षरं, वकारादि आकारः गकारान्त इत्येके आहुः । तस्य गकारलोपं ब्राह्मणं क्षिपतीति । इति निदाने पट-२-ख-१० ।

---

1. ता-ब्रा-८-७-१ । 2. ता-ब्रा-८-४-६ । 3. ङ- इत्येवं प्रातःसवनमारभ्य । 4. ङ. ततन्तः । 5. ङ. वदनात् ।
6. ता-ब्रा-३-६-१३ । 7. ङ अक्षरमक्षरमेवेति । 8. ता-ब्रा ७-७-१ ।

६१२. *अनभ्यासं त्वाचार्याः ॥ १९ ॥

तु शब्दः पक्षनिवृत्यर्थः । अभ्यासमकृत्वा यथाऽधीतमेव गायेत् । कुतः? अनुष्टुभमुत्तमामित्येतत् ब्राह्मणं, यज्ञायज्ञावो अग्नय इति एतामृचं, स्वरूपतो बृहतीं अनुष्टुभंकृत्वा प्रशंसति । तथाहि—य[1]ज्ञायज्ञावोअग्नये गिरा चदक्षमइति द्वादशाक्षरमित्यादिना यज्ञा, गिरा,प्रइत्यक्षरपञ्चकं केवलमभ्यस्यते । नाक्षरान्तराण्यधिकानि इत्यनुष्टुबेवेयं इति प्रशंसा क्रियते । +यद्यप्येकमक्षरमूनं तथापि [2]नवाएकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामिति श्रुतेः अनुष्टुबेवेयमिति । अथवा, वागिति निधनाक्षरेण सह द्वात्रिंशदक्षरा, तथा च निदानकारः, कथं द्वादशस्तोत्रेषु अनुष्टुभो भागः स्यादित्युपक्रम्य आह, यथैतद्ब्राह्मणं, द्वा[3]दशाक्षरमेकादशाक्षरमष्टाक्षरं वा द्वात्रिंशी"ति । ×उत्तमामित्यस्य अयमर्थः, द्वादशस्तोत्रेषु उत्तमस्तोत्रगतां यज्ञायज्ञावो अग्नय इत्येतामृचमिति ॥ १९ ॥

---

*सूत्रं ६१२, ६१३, एकमेव लाट्यायने

+त्रय.श्छन्दः पादाः भवन्ति अष्टाक्षरएकादशाक्षरो द्वादशाक्षर इति । ... अष्टाक्षर आपञ्चाक्षरनाया प्रतिक्रामति । विश्वेषां हित इति निदानसूत्रं १-१ । अथ निचृत भुरिजः या एकेनाक्षरेणोना तानिचृत ,याएकेनज्यायस्य ताभुरिजः । नि॰ सूत्रं–प॰ १-ख॰ ६ एकाक्षरोनत्वे, निचत्व-अतएव प्रसिद्धगायत्र्याः ष्यं-इति एकाक्षरोनत्वात् निचृत् गायत्रीति व्यपदेशः ।

×अनुष्टुभमुत्तमां संपादयति । इयं वाऽनुष्टुप् अस्यामेव प्रतितिष्ठति । इति अनन्तरब्राह्मणम् ॥

---

1. ता-ब्रा-८-७-१ । 2. ऐ-ब्रा-१-६-२ । 3 ता-ब्रा-८-७-१ ।

६१३. निधनञ्च यथाऽऽम्नाय शाण्डिल्यः ॥ २० ॥

निधनमपि यथाऽधीतमेवेति शाण्डिल्य । अक्षरेणान्तत प्रतिष्ठाप्यमित्यत्राक्षरशब्द स्वरमाह । अष्टाक्षर द्वादशाक्षर-मित्यादौ स्वरैरेवाक्षरगणनात् । तेनायमर्थं — 'यद्यपि वागिति प्रयोक्तव्ये गकारलोपादनृततापत्ति तथापि [1]वाकारेण अक्षरेण स्वरेण समापनान्नासौ दोष इति ॥ तथा इडिति[2] नि[3]धने सामनि अर्द्धेडाप्रयोगे सर्वथाऽनृतपरिहारो नास्ति, व्यञ्जनेन समापनात् ।

नैवम, अत्र स्वरेणसमापनादिति । यथाऽधीतमेव निधन ब्राह्मणमभि[4]नन्दतीति तथाच निदानकार *स्वरतन्त्राण्यक्षराणि भवन्ति स्वरान्ततामेव अ[5]क्षरस्येप्सेत् ब्राह्मणमवोचदिति ॥ २० ।

६१४ तद्यदाऽनुशमन् होताऽपोहिष्ठीयाब्रूयात्दैनमन्वालभेरन् अपावृण्वानाः ॥ २१ ॥

यज्ञायज्ञीय स्तोत्रमनुशसन् होता यदा आपोहिष्ठीया शसति, तदा तमन्वालभेरन्, शिर प्रावरणानि अपावृत्य उदगा तार । तत पूर्वं स्तोत्रोपाकरणप्रभृति कर्णवर्जं शिरो वेष्टयित य [6]आकर्णाभ्यामिति वचनात् ॥ २१ ॥

६१५. अन्यस्थानगतस्य सतो निगतस्न् धर्मा ॥ २२ ॥

अग्निष्टोमस्तोत्रादन्यत्र पवमानादौ गतस्य यज्ञायज्ञीयस्य

*निदान-पट २ ख १० ॥

1 ए वाकारेण । 2 ए इडानिधने । 3 ना २१ १ ४ । 4 निन्दतीति । 5 ए प स्वरमेतद्ब्राह्मणमेवमवोचत । [illegible] ता ब्रा ८ ७ ७ ।

शिर प्रावरणादयो धर्मा निवर्तेरन्। स्तोत्रप्रयुक्ता ×धर्मा न सामप्रयुक्ता इत्यर्थ ॥ २२ ॥

इति षष्ठपटले द्वितीय खण्ड



अथ तृतीयः खण्डः

६१६. यदन्यदग्निष्टोम साम स्यात्तस्य स्यु. ॥ १ ॥

यज्ञायज्ञीयादन्यत् बृहदाद्यग्निष्टोमसाम स्यात्। तस्यापि पत्न्यवेक्षण शिर प्रावरणादि धर्माः स्यु ॥ १ ॥

६१७ अहिंकारेऽपि प्रतिहारवेलायां पत्नीमुद्गातेक्षेत ॥ २ ॥

तत्र हिंकाराभावेऽपि तत्तत्साम्न प्रतिहारवेलायां पत्न्यवेक्षणम्। सत्यपि हिंकारे तमनादृत्य प्रतिहारवेलाया अवेक्षण, प्रतिहारवेलायामिति वचनात् ॥ २ ॥

६१८ अनु ब्राह्मणमार्चिकान् सन्नामान् सर्वत्र कुर्यु अप्यन्यस्मिन् साम्नि ॥ ३ ॥

[1]ऐर कृत्तोद्वेय पत्री वयमिति वक्तव्य, सुश सिपमिति वक्तव्यमित्येवमादीन् आर्चिकान् सन्नामान् यथा ब्राह्मण कुर्यु ।

×अग्निष्टोमस्तोत्रे एते धर्मा स्यु॰, न तु यज्ञायज्ञीये साम्नि। अतएव अग्निष्टोमस्तोत्रे सुवश्रश्वा इति वारवन्तीय प्रयुज्यते ऋत्वन्तरवाजपेये। तत्रापि प्रतिहारे पत्न्यवेक्षणादिधर्मा प्रवर्तन्ते। तत्रैव क्रतौ यज्ञा यज्ञीयसाम आर्भवे वर्तते तत्र धर्मा नसन्ति अत अन्वयव्यतिरेकाभ्या स्तोत्रधर्मा एवएते, नसाम धर्मा इति मन्तव्यम्।

1 ता ब्रा ८ ६ १० ११ १२ ।

सर्वत्रेति वचनं रथन्तरादावपि अभ्यस्त इति वातन्त्र मुम्धुप इतिवेत्यादि [1]च ब्राह्मणोक्तविकारपरिग्रहणार्थं । अप्यन्यस्मिन् साम्नि पृष्ठस्थाने अग्निष्टोमस्थाने च यद्यपि रथन्तरादन्यत् साम स्यात्, तथापि विकारसिद्ध्यर्थम् । तेनाऽग्निष्टोमस्तोत्रे यज्ञायज्ञावोऽस्य इत्यत्र सामान्तरगानेऽपि आर्चिक सन्नामसिद्धि । स्थानप्रयुक्त सन्नाम, न सामप्रयुक्त इत्युक्त भवति ॥ ३ ॥

६१९ तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयुः [2]ऋतस्य त्वेति ॥ ४ ।

तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु सोम भक्षणानन्तर स्तोमविमोचन कुर्यु । ऋतस्य त्वेति मन्त्रजप एव स्तोमविमोचक' तत्र विमुञ्चामीति पदसमन्वयात् ॥ ४ ॥

६२० दक्षिणैः पाणिभिः कुशाः संलोमयेयु ॥ ५ ॥

सर्वेषु स्तोत्रेषु समाप्तेषु इत्यनुवर्तते । [3]सलोभन कुशाना [4]समाहरण, अनेनैतत ज्ञायते, प्रथमस्तोत्रे यत्रस्थाने या कुशा विहिता सैव तत्रावधार्य स्तोत्रान्तरेषि [5]प्रयोज्येति ॥ ५ ॥

६२१. *प्रतियोज्ञनमेके यजमानयाचनादनन्तरम् ॥ ६ ॥

प्रतिस्तोमगोग–प्रतिस्तोत्रमित्यर्थं, प्रतिस्तोत्र [6]स्तुतस्य स्तमसीति यजमानयाचनादनन्तर स्तोमविमोचन कुशाना सलोभनञ्च कुर्यादित्येके ॥ ६ ॥

---

*६२१ to ६२४ सूत्रचतुष्टय गद्यमेव लाटायन ।

---

1 ता ब्रा ७ ७ १६ । 2 ता ब्रा १ ६ ५ । 3 ङ स्तोमविमोचनानन्तर 4 ङ कुशानामेकोत्करण । 5 द्रा ५ २ ६ । 6 द्रा ५ २ १९ ।

६२२. अत्र वा ॥ ७ ॥

यजमानवाचनादनन्तरं इति अनुवर्तते । अत्र वा सर्वस्तोत्र समाप्तौ वा, यजमानवाचनादनन्तरं सोमभक्षणात् पूर्वमेव द्वय मपि कुर्यात् ॥ ७ ॥

६२३. यजमानं वाचयेत्तन्तवेमाज्योतिषेति ॥ ८ ॥

तृतीयसवने सत्तोभनादनन्तरं तन्तवेमा ज्योतिषेति, यजमानं वाचयेत् ॥ ८ ॥

६२४. असावनुमा तनुहि, ज्योतिषेति यथाज्येष्ठं पुत्रान् ॥ ९ ॥

असावनुमातनुहि ज्योतिषेति यथाज्येष्ठ पुत्रानादिश्य यजमान वाचयेत् । यथा नारायणशर्मन्ननुमा तनुहीति ॥ ९ ॥

६२५. जनिष्यमाणा इत्यजातेषु ॥ १० ॥

अजातेषु, जनिष्यमाणेषु पुत्रेषु जनिष्यमाणा अनुमा तनुत ज्योतिषेति बहुवचनं कृत्वा वाचयेत् ॥ १० ॥

६२६ जातेष्वजातेषु च पुत्रा इत्येव सर्वेषु ॥ ११ ॥

सत्र विषये जातेषु जनिष्यमाणेषु च पुत्रा अनुमातनुत ज्योतिषेति तन्त्रेण सकृद्वाचयेत् । न यथाज्येष्ठ पृथक् पृथगिति ॥

६२७. वषट्कृते हारियोजनस्य यथेतमपरया द्वारा निष्क्रामन्तो जपेयुः [1]सोमेहीति ॥ १२ ॥

६२८. [2]सुभूरसीत्यादित्यं उपतिष्ठेरन् ॥ १३ ॥

स्पष्टे ॥ १२ ॥ १३ ॥

---

1. सा. ब्रा-१-६-६ । 2. सा ब्रा १-६-७ ।

—कथमित्यत आह.

६४६. तस्याप्येवं यथा प्रथमस्य प्रवर्ग्यसाम्नः ॥ २ ॥

तस्य स एव गानप्रकारः, यथा प्रथमविहितस्य प्रवर्ग्योद्वासनसाम्नो गानं, 'पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्य[1]प्राइरिति गायेदित्यादिना यदुक्तं तत्सर्वमत्र कार्यमिति ॥ २ ॥

६४७. सर्वर्त्विजो निधनमुपेयुः ॥ ३ ॥

तत्र प्रवर्ग्योद्वासनसाम्नि प्रवर्ग्योपयुक्तानामेव [2]निधनवचनं, इह तु सर्व एव षोडशर्त्विजो यजमानः पत्नी च निधनमुपेयुः 'पुरुषः पुरुषो निधनमुपैतीति श्रुतेः ॥ ३ ॥

६४८. इष्टाहोत्रीयमभिषेचनीये [3]समस्येति वा ॥ ४ ॥

राजसूयेऽभिषेचनीयेऽहनि इष्टाहोत्रीयमवभृथ साम, *समस्येति वा साम ॥ ४ ॥

६४९. अश्वत्रिरात्रे नानावभृथान्यहानि ॥ ५ ॥

अश्वमेधोऽश्वत्रिरात्रः । तस्मिन् त्रीण्यप्यहानि पृथक् पृथगवभृथानि भवन्तीति केषाञ्चिदध्वर्यूणां सूत्रम् ॥ ५ ॥

६५०. तेषां प्रथमस्य सनादग्न इत्यवभृथ साम ॥ ६ ॥

तेषां प्रथमस्य अह्नः सनादग्न इत्यवभृथ साम ॥ ६ ॥

६५१. यद्वा ऊर्जिस्पतिरिति द्वितीयस्य स्यमाइरिति वा ॥ ७ ॥

स्पष्टम्, तृतीयस्याह्नः प्राकृतमेव साम विशेषावचनात् ७

*समस्यमन्यवेरयग्यो नद्यिचि गीयमानं साम ।

1. द्रा सू २-२-१ । 2. द्रा सू २-२-४ । 3. ऋ-वे-८-६-४ ।

६५२. अवभृथेष्टौसंस्थितायां [1]अवभृथनिचुंपुण निचेरुरसि निचुंपुणः। अव देवैर्देवकृतमेनोऽयासिषं अव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहीत्यप उपस्पृश्य त्रिरभ्युक्षेरन् ॥ ८ ॥

*उपस्पर्शनं–स्नानं तत्समन्त्रकं तूष्णीमञ्जलिना त्रिरभ्युक्षेरन् + केचित्तु विपरीतमाहुः ॥ ८ ॥

६५३. आदित्यमुपतिष्ठेरन् उद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरं स्वः पश्यन्त उत्तरं देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ॥

स्पष्टम् ॥ ९ ॥

---

*अत्र अग्निस्वामिभाष्ये "अनेन यजुषा स्नात्वा त्रिरभ्युक्षेरन् क्रियाध्याहारो राकृन्मन्त्रः" इति।

"पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्टयुपस्पर्शने सचेलोदकोपस्पर्शनाच्छुध्येत्" ॥ एतेषां स्पर्शने सचेलउदकोपस्पर्शनात्–स्नानात् शुध्येत् इति हरदत्तः। गोतमधर्मसूत्रे द्वितीयाध्याय (प्रश्न) पञ्चमखण्डे 27 सूत्रं। तथैव मस्करीपि उपस्पर्शनात् स्नानात् इति विवृणोति ॥

"सूतकं मातुरेव स्यात् उपस्पृश्य पिता शुचिः।
निरस्य तु पुमान् शुक्लं उपस्पृश्यैव शुध्यति" ।

उपस्पृश्य–स्नात्वा पिता शुचिः इति मनुवचनस्य अर्थः वैद्यनाथदीक्षितीये जननाशौच द्वैविध्यप्रकरणे 'स्पष्टमभिहित'। अतः उपस्पर्शनशब्दार्थः-स्नानमेवेति ज्ञायते।

+ तूष्णी स्नात्वा मन्त्रेण अभ्युक्षणमिति ॥

---

1. तै-सं-१-४-४५-२। तै-ब्रा-२-६ ६-३।

६५४. अस्तमितेऽग्नेदाहवनीयम् ॥ १० ॥

आहवनीयं - औत्तरवेदिकम् ॥ १० ॥

६५५. तस्मिन्समिध आदध्युः एधोस्येधिषीमहीति प्रथमां समिदसि समेधिषीमहीति द्वितीयां, यदेनश्चकृमा वयं यद्वान्यकृतमारिमाऽनया समिधा वयं सर्वं तदुपमृज्महे इति तृतीयाम् ॥ ११ ॥

स्पष्टम् ॥ ११ ॥

६५६. [2]सर्वत्रोद्गाता प्रथमः । १२ ॥

तस्य मुख्यत्वात् ॥ १२ ॥

६५७. तमेवोपतिष्ठेरन् अपोअद्यान्वचारिषं रसेन समगस्महि पयस्वानग्न आगमं तंमा संसृज वर्चसेति ॥ १३ ॥

स्पष्टम् ॥ १३ ॥

६५८. प्रागुदयनीयातिरात्रादप्सुषोमान्तमहस्सत्रेषु ॥ १४ ॥

सत्रेषु अन्त्यवर्जं सर्वाण्यहान्यप्सुषोमान्तान्येवस्युः । अन्त्येऽहनि प्रकृतिवत् [4]सर्वं कुर्युः ॥ १४ ॥

६५९. दधिभक्षान्तमहीनेषु ॥ १५ ॥

अहीनेषु तु अन्त्यवर्जं दधिभक्षान्तान्येवाहानि स्युः ॥ १५ ॥

६६०. यावन्त्यहानि राजानं भक्षयेयुः तावत्सु अब्राह्मणायोच्छिष्टं न दध्युः ॥ १६ ॥

सोमपान दिवसेषु सर्वेऽपि ऋत्विजः ब्राह्मणव्यतिरिक्ताय उच्छिष्टं न दद्युः ॥ १६ ॥

---

1. तै-स-२ ६-६ ४ । 2. इदं सूत्रं ट पुस्तके नास्ति । 3. ऋ-वे-२-६-६-४ । 4. ट आहवनीयोपस्थानान्तं सर्वं कुर्युः ।

६६१. अग्निर्वा प्रोक्ष्य दद्युः ॥ १७ ॥

यदावश्यमब्राह्मणाय देयं तदाप्रोक्ष्य दद्युः ॥ १७ ॥

अदानमेव सर्वथा श्रेय इत्यभिप्रायेणाह—

६६२. तदेषश्लोकः, सोममेवास्मिन्नत्र यत्किञ्चाश्नीत ब्राह्मणाः, माऽब्राह्मणायोच्छिष्टं दात मापात्सोममसोमपः इति ॥ १८ ॥

हे ब्राह्मणा ऋत्विजः सुत्यादिवसे यत्किञ्चाश्नं भुञ्जीध्व तत्सर्वं सोममेवयूयं पिबत । सोमपानमेतदित्यर्थः । तस्मादब्राह्मणेभ्यः क्षत्रियादिभ्य उच्छिष्टं मा दत्त, किमर्थमितिचेत्,तत्रोक्तं 'मा पात्सोममसोमप इति–असोमपः सोमपानानर्हः क्षत्रियादिर्मासोमं पिबत्वित्येतमर्थमिति । दाननिषेधोऽयं प्रकरणात् क्रत्वर्थं ॥ १८ ॥

६६३. एतं परिक्रमं सर्वक्रतुषु विद्यात् ॥ १९ ॥

ऋत्विगार्षेयोऽनूचान इत्युपक्रम्य यावदेतदनुक्रान्तं तत्सर्वंक्रतुषु कर्तव्यम् । विद्यादिति अतिदेशोऽयम् ॥ १९ ॥

६६४. *एष ज्योतिः ॥ २० ॥

एष सर्वक्रतूनां प्रकृति भूतो ज्योतिष्टोमः अस्माभिरनुक्रान्तः ॥ २० ॥

६६५. सर्वे कामाः सर्वे कामाः ॥ २१ ॥

अस्य ज्योतिष्टोमस्य फलं स्वर्गपुत्रपश्वन्नादयः सर्वे

*६६० ६६१ सूत्रद्वयं लाट्यायने नास्ति

कामाः इति नित्यस्यैव *ऋणसस्तुतस्य ज्योतिष्टोमस्य काम-सयोगोऽयमिति ॥ २१ ॥

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
समाप्तः पटल. षष्ठः प्रीयता देवकीसुत. ॥
इति षष्ठ पटले चतुर्थः खण्ड.[1]
षष्ठः पटलः समाप्तः

---

सप्तमः पटलः

प्रथम खण्डः

६६६. षोडशि साम्ना स्तोष्यमाणो पथासनमुपविश्य हविर्धानं गत्वा षोडशिग्रहमवेक्षेतोद्गाता[2] यस्मादन्य इति ॥ १ ॥

---

*जायमानो वै ब्राह्मण त्रिभिर्ऋणवा जायते इत्यत्र यज्ञेन देवेभ्यः इति अग्निष्टोमादि यागकरणेन देवऋणापाकरण श्रुतं। अतः अकरणे प्रत्यवायजनकत्वात् नित्यस्य ज्ञायते। नित्यस्य फलं नापेक्षणीयं, तथाऽपि—उद्यन्तमस्तंयन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणोविद्वान् सकलं भद्रमश्नुते इति श्रुत्या।

ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवाप्नुयुः।
प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च ॥

इति स्मृत्याच सन्ध्याकर्मणइव अस्याऽपि सर्वेष्टप्रापकत्वं इति मन्तव्यम् ॥

---

1. द. इति द्वितीयाध्याय. समाप्त. । 2. ता-ब्रा-१२-१३-१२ ।

ननु च अग्निष्टोमानन्तर उक्थ्ये वक्तव्ये कथं षोडशिनः प्रस्तावः ? उच्यते -- उक्थ्ये विशेषतो वक्तव्याभावात्, षोडशिनस्तद्भावाच्च प्रस्तावः । केचिदाहुः, अग्निष्टोमानन्तरं अत्यग्निष्टोमो नाम द्वितीया संस्था, साच ब्राह्मणस्य [1]नित्या, तत्र यज्ञायज्ञीयस्तोत्रानन्तरं षोडशिस्तोत्रमिति, तदनन्तरं प्रस्ताव इति । तदयुक्तं, तदानीं यथासनमुपविश्येत्यनुवादासंभवात्, तथाहि उक्थ्यानन्तरो यः षोडशी तस्यैव पृथक् धिष्ण्योपस्थानं यथासनमुपवेशनञ्च; न पुनरुक्थ्यात् पूर्वभूतस्य षोडशिनः । कुत. एतत् ? सम[2]स्तेनोपतिष्ठेरन्यान्यूर्ध्वमुक्थ्येभ्य इति वचनात् । तस्मात् यथोक्त एव प्रस्तावे हेतुः । किञ्च न वयमत्यग्निष्टोमं कल्पब्राह्मणैरधीमहे । येन तदभिप्रायेण प्रस्तावःस्यात्, न च स्वशाखाधीत दशरात्रस्य चतुर्थेऽहन्युत्पादिते (चतुर्थोत्पादे) षोडशिनि मन्त्रविनियोगसंभवे शाखान्तरीयमत्यग्निष्टोममभिप्रेत्य मंत्रविनियोगो युक्तः । न चासौ ब्राह्मणस्य नित्यः; कुतः ? स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पाः [3]आग्निष्टोम्यं उक्थ्यता आतिरात्र्यमिति, नित्यसंस्थाऽनुक्रमणे सूत्रकारेण तस्य अनुपादानात् सप्तसंस्थाविकल्पा इत्यत्र कल्पकारेणापि नित्येषु अनुपादानात् ॥

ननु च ब्रह्मत्वविधाने सूत्रकारः सप्तसंस्थास्वेनमप्यनु[4]क्रामति । सत्यं नानुक्रमण[5]मात्रान्नित्यत्वसिद्धिः ।

---

1. इ अनित्या । 2. द्रा-५-३-५ । 3. द्रा-२२-१-१७ । 4. द्रा-१३-४-१७ ।
6. द्रा म्भा १३-४ १७ ।

अनुक्रमणस्य ब्रह्मत्वविषयप्रदर्शनार्थत्वात् । ननु *च गौतमेन चत्वारिंशत्संस्कारेषु पाठान्नित्यः स्यात्, नैवं, राजन्यविषयतयापि पाठोपपत्ते. । राजन्यस्याप्यसौ वैकल्पिक एव (अस्माकमनध्ययनात्) । अप्यग्निष्टोमे राजन्यस्य गृह्णीयादिति शाखान्तरेऽपि वाक्यशेषात् विकल्पावगतेः, तैत्तरीयकश्रुतौ, स [1]एन वज्रोभूत्वा इन्धे निर्वादहतीति पाक्षिकदोषश्रवणाच्चेत्यलम[2]नेन । अक्षरार्थस्तु उक्थ्यचमसभक्षणानन्तर निष्क्रम्य धिष्ण्योपस्थानोपवेशने कृत्वा पुन. निष्क्रम्यषोडशिग्रहमवेक्षेतेति ॥ १ ॥

६६७. एवमेव प्रातस्सवने ॥ २ ॥

प्रातः सवनेप्येवमेवोपवेशनानन्तर पूर्वयाद्वारा निष्क्रम्यावेक्षेतेति ॥ २ ॥

६६८. यदि चोत्तरयोरपि गृह्णीयु ॥ ३ ॥

उत्तरयोरपि सवनयोः यदि षोडशिनमध्वर्यवो गृह्णीयुः, तदाप्यवेक्षण तत्रोपवेशनानन्तर कार्यम् । प्रात. सवने वा प्रतिसवन वा धाराग्रहाणामन्ते षोडशिनं गृह्णीयादित्यध्वर्युभि[3]रुक्तमिति ॥ ३ ॥

*अग्निष्टोमोऽत्यग्निष्टोमउक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम (गौत ध-अ. (प्र.) १-ख-८-सू-२२) इति चत्वारिंशत् संस्कारमध्ये सप्तसोमसंस्थाः अनुक्रान्ताः, इत्येते चत्वारिंशत् संस्काराः इति ॥

1. तै सं-6-6-11-4 । 2. तैत्तरीयक इत्यादि अलमनेनेत्येतदन्तं इ पुस्तके नास्ति । 3. का-सू-12-5-2-4 ।

६६९. [1]अश्वः कृष्णः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति शाण्डिल्यः ॥ ४ ॥

६७०. अपरस्यां प्राङ्मुख इति धानञ्जय्यः ॥ ५ ॥

स्तुतिकाले इति शेषः ॥ ४, ५ ॥

६७१. कृष्णाभावे श्वे[2]तः ॥ ६ ॥

६७२. तदभावे यः कश्चाश्वः ॥ ७ ॥

६७३. गौर्वाऽश्वो वा अश्वाभावे ॥ ८ ॥

स्पष्टानि ॥ ६ ॥ ७ ॥ ८ ॥

६७४. यो यः सामाङ्गं ब्रूयात् स हिरण्यं धारयेत् ॥ ९ ॥

यो यः प्रस्तोतोद्गाता प्रतिहर्ता वा सामांगं स्वां स्वां भक्तिं प्रब्रूयात् स हिरण्यं धारयित्वा गायेत् ॥ अथैकमेव हिरण्यमन्योऽन्यस्मै प्रदाय गायेत् । कुत एतत् ? हिरण्यं '[3]संप्रदायं षोडशिनास्तुवत' इति वचनात् । संप्रदायमिति णमुल् प्रत्ययान्त इति ॥ ९ ॥

६७५. उद्गाता निधनमुपयत्सु ॥ १० ॥

तेषु निधनमुपयत्सु हिरण्यमुद्गातैव धारयेदिति ॥ १० ॥

६७६. सर्वे वाऽभिमृशेयुः ॥ ११ ॥

अथवा निधनकालेऽपि तद्धिरण्यं सर्वे अभिमृशेयुः ॥ ११ ॥

६७७. *अपसर्पति प्रथमं पर्यायं गायेच्छन्नम् ॥ १२ ॥

अस्तमयार्थमादित्येऽपसर्पति सति, षोडशिनः प्रथमं पर्यायं छन्नमस्पष्टं गायेदिति ॥ १२ ॥

*अवसर्पतीति लाट्यायने ।

1. ता-ब्रा-21-13-24 । 2. द्र. श्वावः । 3. ता-ब्रा-12 13-25 ।

६७८. विपिते द्वितीय मध्यमेन ॥ १३ ॥

समया विपिते-अर्धास्तमिते सूर्ये, द्वितीय पर्याय मध्यम स्वरेण गायेदिति ॥ १३ ॥

६७९. अस्तमिते तृतीयमाविः ॥ १४ ॥

अस्तमिते सूर्ये तृतीय पर्यायमावि प्रकाशमुच्चै स्वरेण गायेत् । षोडशिन सन्धिस्तोत्रत्वात् एवमुक्तम् । अत्र तैत्तरीयक, समयाविपितेसूर्येषोडशिन स्तोत्रमुपाकरोतीति । व्याख्यातञ्चै[1]तत् बोधायनेनार्द्धास्तमिते [2]इत्येवमुक्त भवतीति ।

६८० यदोपाकुर्युः स्तुवीरन्नेवाहनि छन्नं रात्रावाविः ॥ १५ ॥

अथवा यदाऽस्यैव षोडशिन स्तोत्रमुपाकुर्वन्ति तदानीमेव स्तुवीरन्, न पुनर्यथोक्त काल प्रतीक्ष्य इत्यर्थ । तथा चाहनिचेदुपाकरण तदा छन्न, रात्रौ चेत् प्रकाश गेयमिति ॥ १५ ॥

६८१. उद्गात्रे दद्यादश्वहिरण्ये दक्षिणावत्सु ॥ १६ ॥

दक्षिणावत्सु-सत्रव्यतिरिक्तेषु क्रतुषु, स्तुत्यङ्गभूतमश्वञ्च हिरण्यञ्चोद्गात्रे दद्याविति ॥ १६ ॥

एव पञ्चविंशब्राह्मणे दशरात्रस्य चतुर्थेऽहन्युत्पादितस्य-षोडशिन स्तुतिप्रकार[3] उक्त । दशरात्रश्च द्विविध, सत्रमहीनञ्चेति । तत्र षोडशिग्रहचमसभक्षणे विशेषमाह–

६८२. सत्र एव ग्रहस्य भक्षयेयुरै[4]न्द्र सह इति ॥ १७ ॥

ऐन्द्रसह इति मन्त्रेण षोडशिग्रह भक्षयेत्तच्च सत्र एवेत्यर्थ ॥ १७ ॥

---

1 तै-स 6 6 11-6 । 2 द इत्येवेदमुक्त । 3 ता ब्रा 12-13 ।
4 ता ब्रा 1 6 1 ।

६८३ उदस्य हरिवद्धरिकासु चेत् स्तुवीरन् ॥ १८ ॥

यदि हरिशब्दवर्जितास्वृक्षु षोडशिना स्तुवीरन् तदानीं ऐन्द्रसह इति भक्षणमन्त्रेऽपि हरिवत्पदमुदस्य अपोह्य, ब्रूयु. अहरिकास्विति - हरिशब्दरहितास्वित्यर्थः ॥ १८ ॥

६८४ अनुष्टुप् छन्दसा चमसस्य ॥ १९ ॥

सत्र इत्यनुवर्तते । इन्द्रविन्द्रपीतस्येन्द्रियावत [1]अनुष्टुप्छन्दस इति षोडशिचमसस्य सत्रे भक्षयेयुरिति ॥ १९ ॥

६८५. *पूर्वेण वा ॥ २० ॥

ऐन्द्र सह इत्यनेन वा ऋचा चमसं भक्षयेयुरिति ॥ २० ॥

५८६. [2]तथा कुर्वन्निन्द्रश्चसम्राड्वरुणश्चराजा तौ ते भक्षं चक्रतुरग्र एतं तयोरहमनुभक्षं भक्षयामि वाग्जुषाणा सोमस्यतृप्यत्विति ग्रहस्य ॥ २१ ॥

तथा कुर्वन्निति - सत्रेषु पूर्वेण चमसभक्षणं कुर्वन्नित्यर्थः । तदानीमिन्द्रश्च सम्राडिति ग्रहभक्षणमिति ॥ २१ ॥

६८७ [3]इन्द्रमिद्धरीति शाण्डिल्यो वाग्देवी सोमस्य पिबत्वित्येतदधिकया ॥ २२ ॥

सत्र इति ग्रहस्येति च द्वयमप्यनुवर्तते । इन्द्रमिद्धरीत्यनया ऋचा वाग्देवीति यजुरधिकया ग्रहभक्षणं सत्र इति ॥ २२ ॥

एवं सत्रे ग्रहचमसयोर्भक्षणप्रकार उक्तः । अथ सत्रव्यतिरिक्ते आह—

"*पूर्वेण वा सत्र इत्येव" इति ङ पाठे ।

1 ता.ब्रा 1-6 2 । 2 मा.स-8 37 । 3 ऋ.वे 1-84 2 ।

६८८. ऐन्द्रं सह इति चमसस्यास्त्रे ॥ २३ ॥

ऐन्द्रं सह इत्येतेनैव मन्त्रेण सवन्यतिरिक्तेषु चमसभक्षणं, नानुष्टुप्छन्दसेति मन्त्रेणेति ॥

एवञ्चक्तुर्थोत्पन्नः पोडशी, सहैवधर्मैः अन्यत्रप्रवर्तते । द्वादशाहस्य षोडशिमन्त्रायतिरात्राविरयादाविति मन्तव्यम् ॥ २३॥

६८९. त्रि[1]ष्टुप्छन्दसा वाजपेयसाग्नि भक्षयेदिति गौतमः ॥ २४ ॥

६९०. अनुष्टुप्छन्दसेति पानक्षस्य शाण्डिल्यायनौ ॥ २५ ॥

चमसस्य इत्येव ॥ २४ ॥ २५ ॥

६९१. अनुष्टुप्छन्दसा रात्रौ ॥ २६ ॥

रात्रिपर्यायेषु अनुष्टुप्छन्दसेति चमसभक्षणं सर्वत्रेति १६

६९२. पृथक् तृचेष्वसन्धौ हिंकुर्युः ॥ १७ ॥

[2]रात्रौ सन्धिस्तोत्रे पृथगेव तृचानामुपक्रमे हिंकुर्यात् । सन्धेरनावृत्तिस्तोत्रत्वात् एकहिंकारत्वे प्राप्ते इदं वचनम् । अत्र तृचानां नानादेवतात्वात्, पृथक् हिंकार कार्यं इत्यभिप्रायः । सामभेदोवा देवता भेदो वा हिंकारस्य प्रयोजक इति ॥ २७ ॥

६९३. [3]हृष्टयजुष इति भक्षः ॥ २८ ॥

सन्धिस्तोत्रे हृष्टयजुष इति चमस भक्षणमिति ॥ २८ ॥

६९४. गा[4]यत्रछन्दसाऽतिरिक्तस्तोत्रेष्विति गौतमः ॥ २९ ॥

अप्तोर्यामेऽतिरिक्तस्तोत्रेषु गायत्रछन्दसा चमसभक्ष इति गौतमः ॥ २९ ॥

---

1. ता-ब्रा-1 5-13 । 2. इ. पुस्तके इदं रात्रौ 10 कुर्यात् इति नास्ति ।
3. ता-ब्रा-1-6-4 । 4. ता-ब्रा-1-5-4 ।

६९५. पृथक्भक्षश्छन्दोभिरनुपूर्वामिति धानञ्जय्यशाण्डिल्यौ ॥ ३० ॥

चत्वारि तावदतिरिक्तस्तोत्राणि, तेषु क्रमेण गायत्र्या- दीनि चत्वारि भक्षछन्दांसि पृथक् भक्षयेयुरित्यर्थं ॥ ३१ ॥

६९६ अनुष्टुप् छन्दसा वा ॥ ३१ ॥

चतुर्ष्वपि स्तोत्रेषु* [1]रात्रिवत् अनुष्टुप्छन्दसेति भक्षणम् । तेषां रात्रिवृद्धिमात्रत्वादिति ॥ ३२ ॥

६९७. अच्छन्दसा वा ॥ ३२ ॥

अथवा छन्दः शब्दरहितेन मन्त्रेण चमसभक्षणमिति ३२

६९८ सन्धिवद्वा ॥ ३३ ॥

यद्वा सन्धिस्तोत्रवदिष्टयजुष इति भक्षणम् । तदेवमति- रिक्तस्तोत्रेषु चमस भक्षणे [2]पञ्च पक्षा उक्ता इति ॥

प्रथम खण्ड समाप्त



अथ द्वितीयः खण्ड

एव तावत् सप्ताना सोम सस्थाना औद्गात्रमुक्त, [3]मह्न्मे वोच इत्यादि मन्त्रविनियोगश्चोक्त । रश्मिरसीत्यनुवा[4]कद्वय अवशिष्ट वहात्वविधाने विनियोक्ष्यते । अथयाजकस्य प्रसगात् प्रायश्चित्तमाह—

*क पुस्तके 'स्तोत्रेषु गायत्रेषु रात्रिवदिति' ।

1 ता 7 1-26 । 2 ङ पञ्चमसप्तमा । 3 ता 1-1 10 ।
4 ता-14 3 1 ।

६९९. *आहिताग्निरसोमयाजी परं सोमेन याजयित्वा परिभक्षं कुर्वीत ॥ १ ॥

स्वकीयानग्नीन् सोमेनानिष्ट्वा परयज्ञे यत्सोमभक्षणं+ तत् परिभक्षणं, वर्जनार्थे परिशब्दः परिभक्षणनिमित्तं प्रायश्चित्तमपि लक्षणया परिभक्षणं इत्युच्यते । यथाऽतिथिमाहूय तमभोजयित्वैव स्वयं परगृहे भुञ्जीत तादृशमेतत्, यदाहिताग्नेः असोमयाजिनः परयज्ञे सोमभक्षणं, स तत् परिभक्षणं नैमित्तिकं वक्ष्यमाणप्रायश्चित्तं कुर्यादिति ॥ १ ॥

७००. सोमयाज्यपीति शाण्डिल्यः ॥ २ ॥

सोमयाजिनोऽपि परयज्ञे सोमभक्षणं स्वकीयैरग्निभिः विना दुष्टमेवेति भावः ॥ २ ॥

७०१. हुतायां प्रातराहुतौ आज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत् ३

*श्रीनिवासदीक्षितीये; आहिताग्नेः परकीययज्ञे सोमभक्षणे (६६). इत्यत्र, आहिताग्निः असोमयाजी सोमयाजीवा यः परं सोमेन याजयति तस्य परयज्ञसमाप्त्यनन्तरं नैमित्तिकं परिभक्षाख्य कर्म कर्तव्यम् । परिभक्षकर्म करिष्ये इति संकल्प्य, स्वानग्नीन्विहृत्य अपां पुष्पमसीति मन्त्र त्रयेण तिस्र आहुतीः आहवनीये जुहोति । वयं सोमव्रते इत्यनेन आज्यशेष प्राश्य, अन्येन आज्येन देवेभ्यः पितृभ्य. स्वाहेत्यादि मन्त्रत्रयेण दक्षिणाग्नौ जुहुयात् इत्यादिना परिभक्षप्रायश्चित्तं उक्तम् ॥

+ अपरिभक्षमित्यग्निस्वामी । नैमित्तिकमिति साधु ।

हुते प्रातरग्निहोत्रे परिभक्ष सकल्प्य [1]प्रणयनपक्षेऽन्यमाह वनीय प्रणीधाज्याधिश्रयणमिति ॥ ३ ॥

८०२. कंसे चमसे वा द्रप्सान्नवधाय दक्षिणाग्नावुपसादयेत् ॥४॥

दारुमयश्चमसस्तच प्रणीताप्रणयनमभिप्रेत, तस्य नलुप्त-वात् । दधिसबन्धिनो द्रप्सा अभिप्रेता । आपस्तब[2]कल्पे तेपामेवो पदेशादिहापि विरोधाभावाच्चेति भाव । यवचिद्दधिद्रप्सानि-त्येव पाठ ॥ ४ ॥

७०३. स्कन्दर्भमुष्टी च ॥ ५ ॥

दक्षिणाग्नो उपसादयेदित्येवेति ॥ ५ ॥

७०४. पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीतीस्यात् ॥ ६ ॥

यावन्ति गृहीतानि अस्मेति यावद्गृहीती-यजमान । स यदि पञ्चावत्ती स्यात्, पञ्चगृहीतमाज्य गृह्णीयात् । यदि चतुर-वत्तीस्याच्चतुर्गृहीतमिति ॥ ६ ॥

७०५ तज्जुहुयादिमामग्नेशरणिंमीमृषोनइममध्वान यमगामदूरात् आपिः पिता प्रमति सोम्यानां भृमिरस्यृषिकृत् [3]मर्त्यानां स्वाहेति ॥ ७ ॥

स्पष्टमिति ॥ ७ ॥

७०६ एवमेव गृहीत्वाऽऽ"पांशुप्यपस्योपधीनां रसोग्ने प्रियतमावनू-रिन्द्र[4]स्य प्रियतमंहवि स्वाहे"ति ॥ ८ ॥

---

1 इ पुस्तके प्रणयनपक्षे इति न । 2 आप श्रौ 13 18 1 ।
3 ऋग्वे 1-31-14 । 4 तै ब्रा 3 7-14-2 3 ।

एवमेवेति स्रुवेण चतुर्गृहीत पञ्चगृहीत वेत्यर्थः ॥ ८ ॥

७०७ आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्नउत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति ॥ ९ ॥

जुहुयादित्येव आज्यस्य पूर्वास्त्रीन् ग्रहान् गृहीत्वादध्नश्चतुर्थं ग्रहं गृह्णीयाच्चतुरवत्ती *पञ्चावत्ती पञ्चम ग्रहमिति ॥ ९॥

७०८ दधिशेषं स्रुच्यानीयोदपात्रस्य प्राश्नीयाच्चमोमग्रते यदं मनस्तनूषु पिप्रत [1]प्रजावन्तो अशीमहीति ॥ १० ॥

स्पष्टम् ॥ १० ॥

७०९ प्रक्षाल्यस्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीतीभूत्वाऽपउपस्पृश्य दक्षिणा दक्षिणाग्नेः स्थण्डिलं समूह्य अद्भिः संप्रोक्ष्य स्फयेन सकृदुल्लिख्योल्मुखमुपनिधाय दर्भानुपस्तीर्याप उपनिनीय, अमीषां द्रप्सानां निपृणुयादथमेभ्य पितृभ्यः स्वधासदमक्षेभ्य, इति प्रथममिति ॥ ११ ॥

निपृणुयात् - निवपेदित्यर्थ. ॥ ११ ॥

७१०. और्वेभ्यः काव्येभ्य इत्येवमेव दक्षिणा पृथक् ॥ १२ ॥

पूर्वन्युप्तस्य दध्नो दक्षिणत और्वेभ्यः पितृभ्यः स्वधेति निपरणम् । तस्य दक्षिणत काव्येभ्य पितृभ्य. स्वधेति ॥ १२ ॥

---

*यदिपञ्चावत्ती चत्वार आज्यस्य गृहीत्वा पञ्चम विश्वेभ्य इतिमन्त्रेण दध्न इत्यग्निस्वामी ॥

---

[1] 1. तै-ब्रा-3-7-14-23 ।

हुते प्रातरग्निहोत्रे परिभक्ष सकल्प्य [1]प्रणयनपक्षेऽन्यमाह' वनीय प्रणीयाज्याधिश्रयणमिति ।। ३ ॥

८०२. कंसे चमसे वा द्रप्सानवधाय दक्षिणाग्नावुपसादयेत् ॥४॥

दारुमयश्चमसस्तस्य प्रणीताप्रणयनमभिप्रेत, तस्य कॢप्त-त्वात् । दधिसम्बन्धिनो द्रप्सा अभिप्रेता । आपस्तम्ब[2]कल्पे तेषामेवो पदेशादिहापि विरोधाभावाच्चेति भाव । क्वचिद्दधिद्रप्सानि-त्येव पाठ ।। ४ ॥

७०३. स्फ्यदर्भमुष्टी च ॥ ५ ॥

दक्षिणाग्नौ उपसादयेदित्येवेति ।। ५ ॥

७०४. पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीती स्यात् ॥ ६ ॥

यावन्ति गृहीतानि अस्येति यावद्गृहीती यजमान । स यदि पञ्चावत्ती स्यात्, पञ्चगृहीतमाज्यं गृह्णीयात् । यदि चतुर-वत्तीस्याच्चतुर्गृहीतमिति ॥ ६ ॥

७०५ तज्जुहुयादिमामग्नेशरणिंमीमृषोनऽस्ममभ्यानं यमगामदूराव् आविः पिता प्रमति सोम्यानां भूमिरस्यृषिकृत् [3]मर्त्यानां स्वाहेति ॥ ७ ॥

स्पष्टमिति ॥ ७ ॥

७०६. एवमेव गृहीत्वाऽऽ"पोकृष्णमस्योषधीनां रसोऽग्ने प्रियतमातनू-रिन्द्र[4]स्य प्रियतमंहवि स्वाहे'ति ॥ ८ ॥

---

1 क पुस्तके प्रणयनपक्षे इति न । 2 आप श्रौ 13 18 1 ।
3 ऋ-वे 1-31-14 । 4 तै ब्रा 3-7-14-2 3 ।

एवमेवेति स्रुवेण चतुर्गृहीतं पञ्चगृहीतं वेत्यर्थः ॥ ८ ॥

७०७ आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्नउत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति ॥ ९ ॥

जुहूप्रभृतिष्वेव आज्यस्य पूर्वांस्त्रीन् ग्रहान् गृहीत्वा दध्नश्चतुर्थं ग्रहं गृह्णीयाच्चतुरवत्ती *पञ्चावत्ती पञ्चमं ग्रहमिति ॥ ९॥

७०८ दधिशेषं स्रुच्याजीयोदहाहृत्य प्राश्नीयाच्चरसोमव्रते यन् मनस्तनुषु पिप्रत [1]प्रजावन्तो अशीमहीति ॥ १० ॥

स्पष्टम् ॥ १० ॥

७०९ प्रक्षाल्य स्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीतीभूत्वाऽपउपस्पृश्य दक्षिणा दक्षिणाग्नेः स्थण्डिलं समूह्य अद्भिः संप्रोक्ष्य स्फ्येन सकृदुल्लिख्योल्मुकमुपनिधाय दर्भानुपस्तीर्याप उपनिनीय, अमीषां द्रव्याणां निपृणुयादवमेभ्य पितृभ्यः स्वधास्तस्मक्षेभ्य, इति प्रथममिति ॥ ११ ॥

निपृणुयात - निवपेदित्यर्थः ॥ ११ ॥

७१० ऊर्वेभ्यः काव्येभ्य इत्येवमेव दक्षिणा पृथक् ॥ १२ ॥

पूर्वन्युप्तस्य दक्षो दक्षिणतः ऊर्वेभ्य पितृभ्य स्वधेति निपरणम् । तस्य दक्षिणतः काव्येभ्य पितृभ्य स्वधेति ॥ १२ ॥

---

*यदि पञ्चावत्ती चत्वारः आज्यस्य गृहीत्वा पञ्चमं विश्वेभ्य इतिमन्त्रेण दध्न इत्यग्निस्वामी ॥

---

[1] I. तैआ 3 7 14 23 ।

७११. अ[1]त्र पितरो मादयध्वं यथाभागमावृषायध्वमित्युक्त्वोदङ्ङा वृत्याऽऽसित्वायावन्मन्येत तावत् ॥ १३ ॥

यावन्तं कालं लोके पुरुषस्य दध्यशनाय पर्याप्तं मन्येत तावन्तं कालं पितृनपश्यन्नासित्वेत्यर्थः । यदि पश्येल्लज्जया पितरो नाश्नीयुरिति तैत्तिरीयकैराम्नातम् । *प[2]राङावर्तेते ह्लीकाहि पितर ? इति ॥ १३ ॥

७१२. अभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमनन्त[3]-रिताः पितरः सोमपीयात् ॥ १४ ॥

तत आभिमुख्ये, तद्धिद्रप्सान् पर्यावर्तमानो जपेदिति ॥

७१३. तान् दर्भान् द्रप्सांश्चदक्षिणाग्नौ प्रहरेत् ॥ १५ ॥

येषु दर्भेषु ये दधि द्रप्सा: पितृभ्यो दत्ता. तानुभयानपि प्रहरेदिति ॥ १५ ॥

इति द्वितीय. खण्डः

*उदङ्ङावर्तेत सव्य बाहुमुपसंहृत्य प्रसव्यमावृ य । उपताम्य कल्याण ध्यायन् । अभिपर्यावर्तमानो जपेदमीमदन्तपितर इत्यादि । (खादिरगृ. सूत्रे-३-५-१७) । उदङ्मुखो भूत्वा यथाशक्ति निरुच्छ्वासः आसीत । यदात्मनः अभिलषितं तन्मेऽस्त्विति ध्यायन् इति रुद्रस्कन्दः ॥ अत्र पर्यावृत्यमध्यमपिण्डं पश्यन्ति केचित् तत्र प्रमाण मृग्यम् । अत्र पितृन् अपश्यन्नासित्वा, यदि पश्येत् लज्जया पितर· नाश्नीयुरिति "ह्लीकाहि पितरः" इति हि तैत्तरीयका, इत्यादिना पिण्डदर्शननिषेधः स्पष्टमुक्त. ॥

1. ब्रा–6-2-4 । 2. तै-सं-1–3-10-5–6 । 3 ब्रा-6-2–5 । तै ब्रा-3–7-14-4 ।

अथ तृतीयः खण्ड

७१४. यज्ञोपवीती भूत्वाऽप उपस्पृश्य गृहान् व्रजन् जपेद्[1]पशिवेन मनसा गृहा[2]नैमि मानुषान्, गृहा मा बिभीत मा वेपिद्‍ध्वमूर्जं बिभ्रत एवमस्यूर्जं बिभ्रद्वस्सुमनास्सुमेधा गृहानैमि, मनसा दैवेन एषामद्ध्येति प्रवसन्येषु सौमनसो बहुर्गृहानुपह्वयामहे ते नो जानन्तु जानत उपहूता इह गाव उपहूता अजावयोऽथो अन्नस्य यो रस उपहूतो गृहेषु च ना ॥ १ ॥

अन्यगारान्निष्क्रम्य स्वीयान्गृहान्व्रजञ्जपेदिति ।। १ ।।

७१५. पश्चाच्छालाग्नेरुपविश्य [3]जपेदिह गाव। प्रजायध्वमिहाश्वा इहपूरुषाः इहो सहस्रदक्षिणोऽपि पूषा निषीदतु इति ॥ २ ।

शालाग्निरौपासन इति ॥ २ ॥

७१६. अग्नेस्तृणानि प्रत्युह्य यः सुहृत्, तमभिभाषेत ॥ ३ ॥

औपासनाग्नेः परिस्तरण तृणानि अपचित्य सुहृन्द्भाषणं कार्यमिति ॥ ३ ॥

७१७. गोषु गाअपिसृजेद्[4]पेदमुपपर्चनमासु गोषूपपृञ्चतामुपऋषभस्य रेतस्युपेन्द्र तव-वीर्ये, इति* ॥ ४ ॥

---

*स्वीयानां-यज्ञे प्रतिग्रहेण स्वीकृतानां, अपिसर्ग-मिश्रणम् याः अस्य स्वाः गावः तासु या दक्षिणाप्राप्ताः ता. मिश्रयेत् उपेदमितीत्यस्मिस्त्वाभिभाष्यम् ॥

---

1. वाज-स-3-41, 42. 43 । 2. क-गृहानेमि । 3. मन्त्र ब्रा 1-3-13 ।
4. ऋ-वे-6-28-8, तै-ब्रा-2-8 8-12 ।

अथरवीयाना गवा[1] गृहगतेषु गोष्वपिसर्गं [2]मन्त्रत कुर्यादिति ॥ ४ ॥

७१८. *[3]इमे मा इन्द्रयावो तरिपान्मा आसांगोपक्रिरीपन्मासाम-मित्रयुर्जन इन्द्रमास्तेन ईशतेति ॥ ५ ॥

गा निरीक्ष्य जपेदिति शेष ॥ ५ ॥

एतदन्त प्रायश्चित्तमिति । अथ कल्पकारेण प्रथम क्लृप्त गवामयनमनुसधास्यन् सर्वेषु सत्रेषु सत्रिणा तावद्धर्मानाह—

७१९. मन्त्राय दीक्षिष्यमाणास्संवदेरन् [4]सहनस्साधुकृत्या, [5]नाना पापकृत्या, यदस्मिन् सत्रेऽथ यत्पुरा चकृमकर्तास्मश्च पश्चो-परिस्थितमेव नस्सत् ॥ ६ ॥

अस्मिनसत्रेऽस्माकमन्यतमेन यत्क्रियते तद्यदि साधु तत्सर्ववास्माक अस्तु । यद्यसाधु तद्यत्नैव तत्तस्यैवेत्यर्थ ॥ अथ यत्सत्रस्य पुरस्तादुपरिष्टाच्चवय कृतवन्त करिष्यमाणाश्च तद्यथोपस्थित यथा प्राप्तमेवास्तु । येन यत्साधु असाधु वा कृत तत्तस्यैवेत्येकस्सवाद इति ॥ ६ ॥

सवादान्तरमाह—

७२०. **यो नोऽत्ययश्चरेददीक्षितोनस्सदीक्षितान्याजयेत् ॥ ७ ॥

*७१८ एतत् सूत्र लाट्यायने नास्ति । इत पर चत्वारि मूत्राण्यधिकानि विद्यन्ते ॥

**७२०, ७२१ सूत्रद्वय लाट्यायाने नास्ति ।

1 क ग्रामगतेषु । 2 ङ आप्तत । 3 ङ मेमा । 4 तस ब्रा 4-6 13 5 । 5 कात्या श्रौ-12-2-8 ।

सवदेरग्निरित्यनुषङ्ग । दीक्षाङ्ग भूतस्सत्यवदनब्रह्मचर्यादि-नियमो व्रत, तद्विरुद्धमव्रत्य तद्यदि कश्चित् कुर्यात् सोऽदीक्षित एवाऽस्तु [1]केवलमस्माकमितरेषां याजकमात्र । नासौ सत्रफल-भागित्यर्थ इति ॥ ७ ॥

यद्येव सवादादेव परकीयदोषास्पर्श, स्तर्हि [2]अविज्ञातवृत्ते नापि पुरुषेण सहदीक्षाया नदोषः स्यात्, नेत्याह—

७२१. संवत्सरह स्म पूर्वेऽन्योन्यस्य क्रोधमाक्रोशन्निभृत शील-मिति सविज्ञाय दीक्षन्ते ॥ ८ ॥

ऋषय पूर्वे सवत्सरमेकैक अन्योन्यगुणदोषौ परीक्ष्यैव दीक्षन्ते । तस्मात् परीक्षितगुणेन सुवृत्तेनैव सह दीक्षितव्यमिति क्रोधाक्रोशौ प्रसिद्धौ निभृत दम शील अनसूयादीति ॥ ८ ॥

७२२. तेषां दीक्षा प्रभृति पत्नीशालायां भोजनसंवेशने स्याताम् ९

७२३. उपसदभ्यःप्रभृति आग्नीध्रीये ॥ १० ॥

७२४. सन्धिवेलयोर्वाचं यच्छेयुः ॥ ११ ॥

स्पष्टानि ॥९॥१०॥११॥

७२५. विचक्षणान्तां वाच भाषेरन् ॥ १२ ॥

अज्ञातमन्तवश्च [3]नसित विचक्षणमिति नामधेयान्तेषु निद-धातीति यथा देवदत्त विचक्षण इत्येवमादीनि ॥ १२ ॥

७२६. न कञ्चनाभिराद्वयेरन् ॥ १३ ॥

---

1 ट केवल सत्यमस्माक इतरेषायाजकमात्र 2 क विज्ञात,

3 आप सू १०-१२ ७ ।

७२७. न शूद्रेण संभाषेरन्निति ॥ १४ ॥

स्पष्ट इति ॥१३॥१४॥

७२८. नाधिष्ण्य उत्तपेरन् ॥ १५ ॥

आहवनीयादयो धिष्ण्याः, तद्व्यतिरिक्ते लौकिकेऽग्नौ नोत्तपेरन्, भेषजार्थानां हरीतकीलाजादीनां भर्जनमुत्तपनमिति। अथवा शीतापनोदनार्थं हस्तादि प्रतितपन उत्तपनमिति ॥ १५॥

७२९. न प्रतीच्या द्वारा पत्नी[1] शालायाः निष्क्रामेयुः ॥ १६ ॥

स्पष्टमिति ॥ १६ ॥

७३०. प्राङ्मुखदङ्खं वोष्मारं कुर्वीरन् ॥ १७ ॥

देवयजनात्प्राग्देश उदग्देशे वा मूत्रपुरीषोत्सर्गं कुर्युः। *प्राङ्मुखा उदङ्मुखा वेति केचिद्व्याचक्षत इति ॥ १७ ॥

७३१. न बहुवदेयुरिति ॥ १८ ॥

७३२. न दन्तान् दर्शयेरन्निति ॥ १९ ॥

हासादौ न दन्तान्दर्शयेयुरिति ॥ १८ ॥ १९ ॥

७३३. **नोच्चैर्जक्षुः ॥ २० ॥

उच्चैर्हासो न कार्य इति ॥ २० ॥

७३४. नाहुतस्याश्नीयुः ॥ २१ ॥

---

*उभे मूत्रपुरीषे दिवाकुर्यादुदङ्मुख सन्ध्ययोश्च, रात्रौ तु दक्षिणामुखः ॥ गौतमधर्म-सू-प्र-१-ख-९ सू-४१।०४३

**७३३ इदं लाट्यायने न।

---

1. क. शाला।

अहुतशिष्टं न कदाचिदश्नीयुः शरीरधारणाशक्तौ त्वैन्द्रं पञ्चशरावमोदनं[1]निर्वपेत् यथो[2]दनीयन्तीति वाजसनेयक* सूत्रमिति ॥ २१ ॥

७३५. नैनानन्योऽश्नतः पश्येत् ॥ २२ ॥

अन्येनादर्शनंमतं । सत्रिणामेव साद्गुण्यार्थं [3]प्रकारान्तरात्, यथा श्राद्धस्यापपातैः अदर्शनमिति ॥ २२ ॥

७३६. सर्वेषां सवनानां प्राश्नीयुः ॥ २३ ॥

त्रिष्वपि सवनेषु प्राश्नीयुरनुष्ठानाशक्तौ इति ॥ २३ ॥

७३७. क्रोधानृतेऽप वर्जयेयुः ॥ २४ ॥

स्पष्टम् ॥ २४ ॥

७३८. एतानि व्रतानि दीक्षासु ॥ २५ ॥

दीक्षादिवसेष्वेवैतानि व्रतानि, न सत. परमित्यर्थः ।

उदयास्तमय वेलाया न बहिर्वेदि गच्छेयुः । तथाबहिर्वेदि गते आश्रावणञ्च न कुर्युरित्यर्थः ॥ २५ ॥

७३९. दीक्षोपसत्सु वा ॥ २६॥ ७४०. वा सन्त्रान्तात् ॥ २७ ॥

अथवा आसत्रसमाप्तेः एतानि व्रतानि स्युरिति । उदयास्तमयाबभ्याश्रावणञ्च बहिर्वेदि प्रसृते वर्जयेत् ।

सप्तमपटले तृतीयः खण्डः

---

*एकपुरोडाशेषु अत्यासंभवात् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा यथोदनीयन्ति यथापूर्पीयन्तीति, श्रुतेः ॥ कात्यायन श्रौत सूत्रं । १२-२-१२

1. का-सू-१२-२-१२ । 2. द. पा. ओनदीयन्ती । 3. द. प्रकरणान् यथा श्राद्धस्यापरपातैः अदर्शनमिति ।

## अथ चतुर्थः खण्डः

७४१ तेषाञ्चेदेनांस्त्रयाणां किञ्चिदेयादृगृहपत्या उपहवमिच्छेरन् ॥ १ ॥

तेषामुदयास्तमयाऽऽश्रावणानां त्रयाणां मध्ये किञ्चिदेकमेनान् सत्रिणो बहिर्वेदिगताम् अयजनीयमुपनमेत, तदा गृहपतावनुज्ञामिच्छेयु, गृहपत उपह्वयस्वेति ॥ १ ॥

७४२ तच्चेदुद्गातरि ॥ २ ॥

गृहपति चेत्त्रयाणां किञ्चिदुपनमत् तदाऽसौ गृहपतिरुद्गातर्युपहवमिच्छेदिति ॥ २ ॥

कुत इत्याह—

७४३ [1]एष वै यजमानस्य प्रजापति यदुद्गातेत्याह ॥ ३ ॥

गतम ॥ ३ ॥

७४४ दीक्षानुपूर्वेण वा [2]सर्वेषु ॥ ४ ॥

अथवा सर्वेषु सत्रिषु प्रत्येक दीक्षाक्रमेणोपहवमिच्छेदिति ॥ ४ ॥

७४५ परिहृतासुवसतीवरीषु सविशेयुः ॥ ५ ॥

स्पष्टम ॥ ५ ॥

७४६ तेषाञ्चेत्कश्चित् श्रेयादर्तायैन निर्हृत्याऽऽहार्येणाहिताग्निं दहेयु· पत्नी चैवम् ॥ ६ ॥

तेषां सत्रिणां मध्ये यदिकश्चिन्म्रियेत स यद्याहिताग्निः स्यात्तमाग्नीध्रतीर्थादन्येन मार्गेण वेदेर्निर्हृत्याऽऽहार्येण—लौकिकमग्निमाहृत्य, तेन दहेयु, तथैव तत्पत्नीमपि ॥ ६ ॥

---

1 ता-ब्रा ७ १९ १६ । 2 ख सत्रेषु ।

७४७. अरण्योरग्नीन् समारोप्यते आप्नानेन निर्हृत्य निर्मन्थ्येनाहि-
तान्निमिति ॥ ७ ॥

× यद्याहिताग्नि स्यात्तस्याग्नीनरण्यो समारोप्य, ते अरण्यावाप्नानतीर्थेननिर्हृत्य, निर्मन्थ्येन, त दहेयुरिति । एव सत्रधर्मा उक्ता ॥ ७ ॥

अथ गवामयनमनु सघत्ते । गवामयन घर्मा —

७४८. मध्यमस्य रात्रिपर्यायस्य दैवोदासं होतृपामस्यादौर्ध्वं
सधनं वा ॥ ८ ॥

अत्र कल्पकारेण "क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽपोड-शिक" इत्युक्त, ब्राह्मणेनैव क्लृप्तइत्यर्थ । [1]ब्राह्मणे च मध्यमे रात्रिपर्याये दैवोदासमौर्ध्वं सधनञ्चेति सामद्वय होतृपामत्वेन विहितम् । तत्राहीनगतेऽतिरात्रे दैवोदास, सत्रगतेत्वौर्ध्वसधन-मिति निदा[2]नकार । सूत्रकारो योनियदिच्छ[3]न् न त्रिशेपाद्वि-कल्पमाह । ननु च औध्वंसधनमपि शर्वरीषु प्रोहन्तीति

× कथ अनाहिताग्नेः सत्रासनमिति? न विद्यत इति शाण्डिल्यायन । सर्वइष्टप्रथमयज्ञा पृथक् सत्रोपकरणानि इष्ट्वा समाध्याग्नीन् सत्रमासित्वा उदवसानीयान्ता नुग्निर्मा कृत्वा पृथक् पृष्ठशमनीयं यंजेरन्निति नो विधानमित्यारन्य, य एतेन अनिष्ट्वेति तदेतदनाहिताग्नी साधिष्ठमुपपद्यत इति विद्यत इत्यपर–इत्यादिना । एतेन अनाहिताग्नीना सत्रासन-मुक्त, अथापि ब्राह्मणमेव भवति इत्यादिना च अनाहिताग्नर्दरि सत्रयाग उक्त इति निदाने प्रपाठक ५-ख-१३ ॥

1 ता-ब्रा ९-१-१२ 2 ता-ब्रा ९ २-१२ भाष्ये ।
3 ड अनिच्छन्, अनिच्छन्नपि ।

ब्राह्मण[1] सत्रविषय नैव। न तावत् प्रोहन्तीति बहुवचनात् सत्र-विषयत्व, [2]ऐडेन बृहतीमारभन्त इतिवत्सत्रव्यतिरिक्तेऽपि बहुवचनोपपत्ते। न चापि शर्वरीशब्द सत्रवचन, रात्रिगत-स्तोत्रीयावचनत्वात्, याभि स्तोत्रीयाभि देवाश्शर्व[3]र्या अप्यसुरा-नपानुदन्त न केवलमहस्ता अपि शर्वर्या इति बह्वृच ब्राह्म-णोक्त। अपि शर्वर्या अ[4]नुग्मसोरयश्नुवन् तदपि शर्वराणामपि शर्वरत्वमित्यादि। तेनायमर्थः। औध्वंसद्यन पुरोजितीवो अधस इति पाथमान्यामुत्रमपि पवमानस्यमतिलङ्घ्य अपि-शर्वरीषु रात्रिस्तोत्रीयासु [5]भ्रातृव्यनिरसनार्थं प्रोहन्तिब्रह्म-वादिन इति। नेन न सत्र विषयमेतद्वचन। ननु च स्य आय[6]तने सत्र मास्त इति वाक्यशेषात् सत्रविषयत्व, तदपि न, तस्य प्रशसार्थत्वात्। कथं दीर्घसत्रेष्वौध्वंसद्यनेनैव विघ्नकराञ्छ-त्रूनिहन्ति। किं पुनरन्यत्रेति ॥ ८ ॥

अथाभिप्लवस्य द्वितीयेऽहनि कल्पकार, पवीतोपिश्वता-सुतमिति माधुच्छन्दसस्य भर्गश्च यशोवेति, भर्गयशसी विकल्प-यति ॥

तत्र सूत्रकारो मतभेदेनाह—

७४९. अभिप्लवस्य द्वितीयेऽहनि भर्गोयश इति प्राग्विषुवतो व्यत्यासं स्याताभिति गौतमः ॥ ९ ॥

विषुवत प्राक् तयोविंशतिरभिप्लवास्तेषां प्रथमे भर्गो द्वितीये यश पुनस्तृतीये भर्गश्चतुर्थे यश इत्येव व्यत्यस्येदिति॥९।

1 ता-ब्रा ९-२-१०। 2 ता-ब्रा ७-३-१४। 3 ख शर्वर्यं। 4 ऐ-ब्रा ४-५-५। 5 ख असुरनिरसनार्थं। 6 ता ब्रा ९-२-१२।

७५०. ऊर्ध्वंश्च त्रिष्वभिप्लवेषु ॥ १० ॥

विषुवत ऊर्ध्वमपि त्रिष्वभिप्लवेषु भर्गो यश इति व्यत्यस्येदिति ॥ १० ॥

७५१. यशो भर्ग इति परेषु ॥ ११ ॥

ततः परेषु अष्टममासप्रभृति यशोभर्ग इति व्यत्यासः स्यादेव गौतममतमिति ॥ ११ ॥

मतान्तरमाह—

७५२. सकृद्विर्वा यशः पुरस्तात्सयोपरिष्टाद्भर्ग इतरेष्वित्यपरम् ॥ १२ ॥

विषुवत. पुरस्तात् सकृद्विर्वा यश स्यात् विषुवत उपरिष्टादपि सकृद्विर्वा यश स्यादन्यत्र सर्वत्र भर्ग एव स्यादिति ॥ १२ ॥

मतान्तरमाह—

७५३. भर्गः पूर्वस्मिन् पक्षसि यश उत्तरस्मिन्नित्यपरम् ॥ १३ ॥

स्पष्टमिति ॥ १३ ॥

अथाभिप्लवस्य चतुर्थेऽहनि वीक शुद्धाशुद्धीयं वेति कल्पकार, तत्राह—

७५४. एतास्वप्युक्ते वींकशुद्धाशुद्धीये · १४ ॥

भर्गयशोन्याय तत्राप्यनुसन्धेय इत्यर्थ ॥ १४ ॥

७५५. विषुवत ऊर्ध्वं वींकमेव स्यादिति धानञ्जय्यः ॥ १५ ॥

गतम् ॥ १५ ॥

अथाभिप्लवस्य पञ्चमेऽहनि कल्पकार., "अग्नीसोमद्युम[1]त्तम इति गायत्रञ्च यथवञ्चापत्यसन्तनिशाक्वरवर्णान्तानि उत्तरेष्वभिप्लवेषु" ।

1. ऋ-से-9-65-19 ।

तस्यायमर्थ । प्रथमेऽभिप्लवे गायत्रादूर्ध्वं यण्व उत्तरेषु द्वितीयतृतीयचतुर्थेष्वभिप्लवेषु अपत्य, सन्तनि, शाक्वरवर्णमिति क्रमेण स्यादिति, तत्र प्रथमो यण्वयुक्त स्यात्, [1]द्वितीयोऽपत्ययुक्त स्यात्,तृतीय सन्तनियुक्त स्यात्,तुरीय शाक्वरवर्णभाक् । तत्र सूत्रकार आह—

७५६ पञ्चमेऽहनि यदह॰ ग्रामेगेय [2]सन्तनि स्यात् मानवात् पूर्वं वाभ्र स्यात् ॥ १६ ॥

यदहरिति, यदातृतीयेऽभिप्लवे पञ्चमेऽहनि ग्रामेगेय सन्तनि स्यात्तदा बृहत्यां मानवात पूर्वं वाभ्र स्यादन्यथा सन्तनि मानवयोस्तुल्यत्वात्तयो सन्निपाते जामिदोष स्यात्तथा च वक्ष्यति,"[3]सर्वेषां तुल्या॰न्तसन्निपातेजामी"ति । नन्वेव, आनूपमपि पूर्वं स्यात, न केवल वाभ्र । नैव, ऐडे[4]न बृहतीमारभन्त-इति [5]प्रकृत शास्त्रोक्त सपत्ते । एव वाभ्रेणैव बृहत्यारभस्त स्येडानिधनत्वात इति । अत्र यण्वादि सामचतुष्टय सन्तानगुण-योगात सन्तनीति व्यपदेष्टु शक्यम् । तत्रैपस्यधारया सुत इन्य त्रोत्पन्नस्य सन्तनिन परिग्रहार्थं ग्रामेगेयमिति विशेषण स्पष्टार्थ-मिति ॥ १६ ॥

अथाऽभिप्लवस्य षष्ठेऽहनि कल्पकार इन्द्रायेन्दो मरुत्वत इति गायत्र्याश्वसूक्तश्च सकृदिपोवृधीय कुर्यात मृज्यमानस्सु हस्त्येति औक्ष्णोरन्ध्र, त्रिणि रन्ध्राऽस्यास्य सवृत्समन्त कुर्या

1 ट द्वितीयोऽत्र यपुग्मन्वेत् । तृतीय सन्तनि स्यात चतुर्थ शाक्वर वर्णयुक ।
2 ड सन्तनि । 3 ला–18 1 ९ । 4 ता–ब्रा–7–3–14 ।
5 ट प्राकृतशास्त्रोक्तसपत्तये वाभ्रेणव बृहत्यारम । अयमेवसाधु ।

दिति । प्रतिमास सकृत् सकृदित्यर्थ । कदा पुनः तदितिचेदत आह सूत्रकार —

७५७ इषोवृधीय समन्ते पृष्ठ्यानन्तर्ये षष्ठे ॥ १७ ॥

षष्ठेऽहनि इषोवृधीय समन्ते पृष्ठाऽऽनन्तर्ये सति कुर्यात् । पृष्ठ्यषडहात् पूर्वस्मिन्नभिप्लवे इत्यर्थ । एवन्तावत् यण्वादि-सन्ततिभेदात् सामान्तराणा केषाञ्चिद्भेदाच्च, चत्वारोऽभि-प्लवा परस्पर भिन्ना । तत्र चतुर्थो यौक्ताश्व, यश शुद्धा-शुद्धीय, शाक्वरवर्णेपोवृधीय, समन्ते षड्भि सामभि प्रथ-मादभिप्लवाद्भिद्यते । प्रथम[1]श्च मौक्षभर्गवीकयण्वैश्चतुर्भि, तस्माद्भिद्यते । एव मध्यमावपि । तत्र पूर्वस्मिन् पक्षसि षष्ठे-मासे त्रिष्वेवाभिप्लवेषु रर्तव्येषुसत्स्वेकोऽभिप्लवो लोप-नीय ॥ १७ ॥

क पुनरसाविति चेदत आह—

७५८ पूर्वस्मिन् पक्षसि त्रिषु चतुर्थोऽभिप्लवो लुप्येत ॥ १८ ॥

'अन्ताल्लोपोविवृद्धिर्वे'ति न्यायाविति [2]चतुर्थश्शाक्वरवर्ण-भाग्लुप्यते, इति ॥ १८ ॥

७५९ एत एवाऽऽवृत्ता ऊर्ध्वं विषुवतोऽभिप्लवाः ॥ १९

एत एव चत्वारोऽभिप्लवा उत्तरस्मिन् पक्षस्यावृत्ता स्यु । कथ? प्रथम शाक्वरवर्णयुक्त स्यात्, द्वितीयस्सन्ततियुक्त स्या, तृतीयोऽत्ययुक्त, श्चतुर्थो यण्वयुक्त इति ॥ १९ ॥

७६० तेषा प्रतिलोममहान्युपेयु ॥ २० ॥

1 प्रथमश्च हाविष्मत । 2 इद ट पुस्तके नास्ति ।

७७१ अत्र वा गो आयुषी दशरात्रमित्युपाहरेत् संवत्सर[1]प्रवृह-सद्मा[2]स्वाहतमिति च ॥ ४ ॥

अत्रैव कल्पे गो आयुषी दशरात्र च आवपेत् तस्य संवत्सरप्रवृह इति शाखान्तरे मद्मा, शाखाहृतमितिचेति ॥ ४ ॥

७७२ नानाहोभिर्वय कल्पयामो यथैतत् ब्राह्मणम् ॥ ५ ॥

पृष्ठ्याभिप्लवादीना नानाभूतैरहोभि वय कल्पयाम । यथैतत् [3]पञ्चविंशब्राह्मणमधीमह इति ॥ ५ ॥

७७३ अतिरात्रमुभयसामान दुर्ध्वान्घीगवादुत्तरे औदलबृहती॥६॥

अथ शाखान्तरे अतिरात्र उभयसामा स्यादिति ब्राह्मण । तस्य क्लृप्तिरतेनोच्यते । उभयसामान बृहद्रथन्तरसामान कर्तुमिच्छन्नान्घीगवस्योपरिष्टादौदलबृहती कुर्यात् । [4]औदलस्य क्लृप्ति स्तोमसख्या अविरोधार्था । अविरोधश्च दर्शयिष्यतीति ॥

७७४ षोडशिमाश्चेदौदलस्थाने नानदम् ॥ ७ ॥

यदि षोडशिमानुभयसामाचातिरात्र स्यात्तदानीमौदल-स्थाने नानद कुर्यादिति ॥ ७ ॥

नन्वेव आभवेपवमाने सप्तदशस्तोमातिरेक स्यादधिक-सामाना स्यात् । अत आह—

७७५ पूर्वो बृहत. सामतृच. ॥ ८ ॥

यदा तृचे सामत्रयमन[5]स्यामृचि पृथगानन्तर्येण गीयते तदा तत् सामतृच इत्युच्यते । बृहत पूर्व सामतृच कार्य,

---

1 ङ प्रवह । 2 ग शाखाहृत । 3 पञ्चविंश ब्रा 24 20-1 ।
4 ङ औदल इत्यादि नास्ति । 5 ङ पूर्वकस्या ।

तद्यथा पूरोजिती वो अन्धस इति श्यावाश्व प्रथमायां, आन्धीगवं द्वितीयायां, औदलं तृतीयायां बृहत् निसृष्विति । एवं बृहतः पूर्वाणि त्रीणि सामान्येकर्चानि कुर्यादित्यर्थः ॥ ८ ॥

७७६. चतुर्विंशमरथन्तरमेके ॥ ९ ॥

चतुर्विंशं द्वितीयमहः, तद्रथन्तररहितमेक इति ॥ ९ ॥

७७७. रथन्तरपृष्ठं वा बृहदनुष्टुप्कम् ॥ १० ॥

अथवा चतुर्विंशं रथन्तरपृष्ठं कृत्वा बृहदनुष्टुप्कं कुर्यात् । पुरोजितीवो अन्धस इति अनुष्टुभि बृहत्साम यस्य तत् बृहदनुष्टुप्कमिति । तत्र क्रौञ्च स्थाने बृहत्कार्यं, न पुनरधिकं, स्तोमविरोधात् ॥ १० ॥

अथ चतुर्विंशमहरग्निष्टोमउक्थ्योवेति [1]ब्राह्मणे विकल्पितम् । तत्राग्निष्टोमपक्षे यथा स्तोत्रीयाभिरन्तर्भावितोऽ[2]यमहः स्यात्तथा दर्शयति—

७७८. अग्निष्टोमसंस्थश्चेत्त्रिंशान्याज्यानिषट्त्रिंशानि पृष्ठानि ॥ ११ ॥

उक्थ्यपक्षेत्रीणि शतानि षष्टिश्च स्तोत्रीया भवन्ति । अग्निष्टोमेऽपि तथैव ताः संपादयेत् । कथम्? त्रिंशान्याज्यानिस्यु षट्त्रिंशानि पृष्ठानि स्युरितराणि चत्वारि चतुर्विंशान्येवेति ॥ ११ ॥

पुनरपि प्रकारचतुष्टयं चतुर्भि सूत्रैराह—

७७९. षट्त्रिंशानित्रा होतृकसामानि ॥ १२ ॥

1- ता-ब्रा-4-2-11, 13 । 2. [illegible]

होतृकाः - मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाः, तेषां अनुशंसनीयानि यानि सामानि पूर्वयोस्सवनयोः त्रीणित्रीणि तानि षट्त्रिंशानि स्युः । इतरानि षट्,चतुर्विंशान्येवेति ॥ १२ ॥

७८०. पृष्ठानां [redacted] अष्टाचत्वारिंशानि ॥ १३ ॥

होतृकसामानीत्यनुवर्तते । चतुर्णां पृष्ठानां मध्ये यानि होतृकसामानि तानि अष्टाचत्वारिंशानि स्युः । इतराणि नवस्तोत्राणि चतुर्विंशान्येवेति ॥ १३ ॥

७८१. सर्वाणि वा त्रिंशानि स्तोत्राणि ॥ १४ ॥

सर्वाणि द्वादशस्तोत्राणि त्रिंशानिवा स्युरिति ॥ १४ ॥

७८२. व्यत्यासं वा त्रिणवत्रयस्त्रिंशौ ॥ १५ ॥

द्वादशस्वपि स्तोत्रेषु आदित आरभ्य त्रिणवत्रयस्त्रिंशौ व्यत्यासं स्यातामिति ॥ १५ ॥

७८३. एतदन्तरुक्थ्यम् ॥ १६ ॥

एतत्, चतुर्विंशमहरग्निष्टोमसस्थं यथोक्तैः पञ्चभिः प्रकारैः अन्तरुक्थ्यं - अन्तर्भावितोक्थ्यमित्याचक्षत इति ॥ १६ ॥

७८४. अ[1]भिप्लवस्य स्वरसाम्नश्च ज्योतिष्टोमे तन्त्रमेके कल्पयन्ति ॥

ज्योतिष्टोमिकान्येव कॢप्तसामानिगृहीत्वा तत्रैव विशेषाम्नाननिबन्धनं विकारं कुर्वन्त्यभिप्लव-स्वरसाम्न इति । अभिप्लवस्य पृष्ठ्यः प्रकृतिः षडहत्वसामान्यात् पूर्वोपदेशाच्चेति कल्पकारस्य पक्ष इति ॥ १७ ॥

---

1. क. अभिप्लव । 2. क-सामानमिति ।

७८५. तथा सतां शाट्यायनिनः षडहविभक्तीरनुकल्पयन्ति ॥ १८॥

तथासता ज्योतिष्टोमिकतन्त्राणामेवसता । केचित् षड-हविभक्ती अनुकल्पयन्ति । अग्निविभक्तिरिन्द्रविभक्ति स्वर-विभक्तिनिधनविभक्तिरिडाविभक्तिरित्येव विभक्तिपञ्चक पृष्ठय-षडहे ब्रा[1]*ह्मणे क्लृप्तमिति ॥ १८ ॥

७८६. द्विविधमभिप्लवमेके ॥ १९ ॥

[2]बृहद्रथन्तरनिमित्तक द्विधा–द्वय यस्य सद्विविध ॥ १९॥ तमेव दर्शयति—

७८७ उपवत्यग्यवती च व्यत्यासं प्रतिपदौ राथन्तरबार्हतानिचा-ज्यानि ॥ २० ॥

उपास्मै गायतानर इत्युपवी पवस्ववाचो अग्रिय इत्य-ग्रियवती बार्हती एते बहिष्पवमानप्रतिपदौ व्यत्यास स्याताम् । तथा राथन्तराणि अ[3]ग्न आयाहिवीतय इत्याज्यानि । अग्निं दूत वृणीमह इति बार्हतानि व्यत्यास स्युरिति ॥ २० ॥

७८८. **आज्यप्रतिपदो वा ॥ २१ ॥

[4]आज्यप्रतिपदो वेति षष्ठीसमासोऽयम् । आज्याना या-

*अग्न इति प्रथमस्याह्नोरूप अग्निविभक्ते इन्द्रेति प्रथ-स्याह्नोरूप इन्द्रविभक्ते इत्यादिना पञ्चसुखण्डेषु विशदतमा निरूपित ताण्ड्यमहाब्राह्मणे ॥

**लाट्यायने आज्यप्रतिपदोर्वैरथारम्भसूत्रपञ्चक एकत्वेन निर्दिष्टम्

1 ता ब्रा १० ख ७ to ११ । 2 ट रायन्तरी बार्हती च द्वे विधेयस्य स द्विविध । 3 ड पुस्तके "अग्न आयाहि" इतोत पूर्व नास्ति । 4 ड आज्यानि प्रतिपदस्येति आज्यप्रतिपत । समाहारद्वन्द्वे तृतीयैक-वचन । आज्यप्रतिपदा वा कल्पयेदिति सूत्रशेष । अर्थस्तु पूर्वोक्त एव ।

प्रतिपद - प्रथमान्याज्यानि स्तोत्राणीत्यर्थ, तानि वा राथन्तरवार्हतानि स्यु । [1]इतराणि आज्यानि कल्पोक्तान्येव स्युरिति । [2]केचित्तु आज्यप्रतिपदावेति तृतीयान्त पठन्ति । तदानी [3]कल्पयेदित्यध्याहार । आताचेकवचनम् । पूर्वोक्त एवार्थ इति ॥ २१ ॥

७८९. औशनसावे अन्त्ये ॥ २२ ॥

औशनकावे पवमानयो अन्त्येसामनी षट्स्वपि दिवसेषु स्यातामिति ॥ २२ ॥

७९०. पार्थयामेवा वार्हतानाम् ॥ २३ ॥

अथवा बृहत्पृष्ठानामह्ना पार्थयामे सामनी, पवमानयोः अन्त्ये स्यातामिति ॥ २३ ॥

७९१ स्वयोन्यभीवर्तौ रथन्तरपृष्ठेषु ॥ २४ ॥

तद्वोदस्ममृतीषहमित्येतासु स्वयोनिष्वभीवत स्यात् ॥

७९२ श्यैतर्क्षु बृहत्पृष्ठेषु ॥ २५ ॥

अभिप्रवस्सुराधसमित्येतासु एव विधाद्वय उक्तम् ॥ २५॥
अथ पृष्ठ्य षडहमधिकृत्याह—

७९३ व्यूढ पृष्ठ्यमेके ॥ २६ ।

कल्पकारास्तु समूढमेवेच्छन्ति । छन्दोमसयोगाभावात्, छन्दोमैरपि सहैव व्यूहस्वरूपस्य ब्राह्मणे क्लृप्तत्वाच्चति ॥ २६

७९४. तस्य समूढान् प्रथमस्याह्नो बहिष्पवमानम् ॥ २७ ॥

---

1 इ इतराणि त्रीणि । 2 केचित्तु गोमिलीये । 3 पाठर्हिकाण्वेव-कल्पयेत ।

अस्यप्रत्नामनुद्युतमिति नवर्चस्य नवाहयोग[1]कारित्वा-च्छन्दोमानामलाभावाच्च [2]व्यूढेऽपि षडहे समूढप्रयुक्तमेव बहिष्पवमान युक्तमिति । २७ ॥

७९५. समूढमेके रथन्तरबृहत्पृष्ठम् ॥ २८ ॥

स्पष्टम् ॥ २८ ॥

७९६ नानापृष्ठेवोत्तरे चतुरहे रथन्तरबृहती व्यत्यासं पवमानेषु ॥

अथवा बृहद्रथन्तर वैरूप वैराज शाक्वर रैवतैः नानाभूतपृष्ठे षडहे व्यूढे समूढे[3]चोत्तरस्मिन् चतुरहे पवमानेषु रथन्तर बृहती व्यत्यास स्यातामिति ॥ २९ ।

कथमित्याह—

७९७. बृहतीषु रथन्तरमनुष्टुप्सु बृहत् ॥ ३० ॥

तृतीयपञ्चमयोरह्नो माध्यन्दिने पवमाने बृहतीष्वृक्षु रथन्तर, चतुर्थषष्ठयोरह्नो आर्भवे पवमाने अनुष्टुप्सु बृहदित्यर्थः ॥ ३० ॥

७९८. ते द्वितीये ॥ ३१ ॥

ते बृहद्रथन्तरे तत्रद्वितीये सामनि अधिके स्यातामिति ॥ ३१ ॥

७९९. बृहदुत्तम समूढे ॥ ३२ ॥

समूढे षडहे बृहत्साम द्वितीय स्यात् । किन्तु अनुष्टुभि क्रियमाणाना साम्नामुत्तम स्यात् । अन्ते निवेशयेदित्यर्थ ।

1. द कारितत्वात् छन्दोमानि विच्छेदने । 2 व्यूढषडहे ।
3. द उभयोरपि ।

आगन्तूनामन्ते निवेश इति न्यायात् । ननु च, व्यूढेऽपि तुल्योऽय न्यायो रथन्तरे च । नैव, व्यूढपक्षे पवमानान्त्यस्य साम्नो निधनवत्वात्तेन सह बृहत सन्निपाते जामिदोष स्यात् । समूढे तु स्वार पवमानान्त्यमिति न दोष ॥ तथा रथन्तरस्योत्तमत्वेऽपि आष्कारणिधनेन, सन्निपाताज्जामि दोष । तेनद्वितीयमेव रथन्तर कार्यमिति ॥ ३२ ॥

८००. आष्कारणिधनात् पूर्वं कौल्मलबर्हिषम् ॥ ३३ ॥

तृतीयेऽह्नि बृहत्या रथन्तरागमे नियमाणे, कौल्मलबर्हिषमप्यागमयितव्यमित्यर्थ ॥ ३३ ॥

८०१. आन्धीगवाच्छ्यावाश्वम् ॥ ३४ ॥

तथा चतुर्थेऽह्नि बृहदागमेऽपिश्यावाश्वमागमयितव्य, [1]आन्धीगवस्य पुरस्तादिति ॥ ३४ ॥

८०२. उपोत्तम समूढे ॥ ३५ ॥

समूढे बृहदुत्तम कार्यमित्युक्तम् । तस्योत्तमस्य बृहत समीपे तत पूर्वं श्यावाश्व इत्यर्थ । अन्यथा गानदश्यावाश्वयो स्वारत्वाज्जामिदोष इति ॥ ३५ ॥

अष्टमपटले प्रथम खण्ड

अथ द्वितीयः खण्डः

८०३ आनुपोपक्रमा बृहती पञ्चमे ॥ १ ॥

[2]रथन्तरागमे क्रियमाणे पञ्चमेऽह्नि बृहत्यामानूपसाम्नो-

---

1 क आन्धीगवात् पूर्वं ।

2 ट अन्धीगवात्पूर्वं पञ्चमेहनि रथन्तरागमे क्रियमाणे इति नास्ति ।

पञ्चमः कार्यस्तत उत्तर रथन्तरं । ते [1]द्वितीये इति वचना-
दिति ॥ १ ॥

तदनन्तरं मानवे प्राप्ते आह—

८०४. मानवात् पूर्वं हारायणम् ॥ २ ॥

जामिदोषपरिहारार्थं पूर्वमित्युक्तमिति ॥ २ ॥

८०५. मधुश्चुन्निधनादाकूपारम् । ३ ॥

षष्ठेऽहनि सोमाः पवन्त इन्दव इत्यनुष्टुभि मधुश्चुन्निध-
नात्पूर्वं आकूपारमागमयितव्यम् इति ॥ ३ ॥

८०६. उपोत्तमं समूढे ॥ ४ ॥

व्याख्यातमेतदिति ॥ ४ ॥

नन्वेवं अधिकसामद्वयागमे स्तोत्रीयाषट्कमतिरिक्तमिति स्तोमा-
तिरेकः स्यादत आह—

८०७. बृहतः पूर्वं त्रयएकर्चाः ॥ ५ ॥

बृहतः पूर्वाणि त्रीणि सामान्येकर्चानि कुर्यात् । तत्र
स्तोत्रीयाष्टकं लुप्तमिति न स्तोम विरोध इति ॥ ५ ॥

८०८. रथन्तरादुत्तरे ॥ ६ ॥

त्रय इत्यनुवर्तते । रथन्तरात् उत्तरे त्रय एकर्चाः ग्राह्या
इति ॥ ६ ॥

८०९. षष्ठे च बृहतो व्यूढे ॥ ७ ॥

व्यूढे षडहे षष्ठेऽहनि बृहत उत्तरे त्रयः एकर्चाः स्युः,
न पूर्वं इति ॥ ७ ॥

1. द्रा-गृ-८-१-३१ ।

नन् च तृतीयेऽह्नि बृहत्या षट्सामानि, तत्र त्रयाणामेवैकर्चत्व-विधानादितरेषु त्रिषु तृचेषु क्रियमाणेषु पुनरपि स्तोमातिरेकः स्यादत आह—

८१०. नित्यौ च शशकर्णौ तृतीये ॥ ८ ॥

*यथा तृतीयेऽह्नि बृहत्या ब्राह्मणविहितसामचतुष्टयपक्षे प्रथमोत्तमे सामनी शशकर्णौ, शशकर्णस्य मूलाग्रसदृशौ एकर्चा-वित्यर्थः । तद्वदत्रापि तौ नित्यौ एकर्चविवेत्यर्थः । शशकर्ण-सादृश्यात् - शशकर्णशब्द यथा शशकर्णस्य मूलमग्रञ्च तनू भवत मध्यम स्थूल एव क्लृप्तानि एकचानि तृचत्रयस्थानि शशकर्णं इत्युच्यते । तथा च निदानकारः तृचप्रथमाया चय-

---

*ङ पुस्तके अष्टमसूत्रव्याख्या—तृतीयेऽह्नि शशकर्णौच नित्यौ कार्यौ । शशकर्णतृचैकर्चक्लृप्ति शशकर्णं इत्युच्यते । यथा शशकर्णस्य मूलमग्रञ्च तनूभवत मध्य स्थूल, एव बृहत्या साम-जातस्यादितोऽन्ततश्च द्वावेकर्चौ तनूभवत । मध्ये तृचे क्रिय-माण सामस्थूल भवति । एव क्लृप्तबृहतो शशकर्णक्लृप्तेति बहुशो व्यपदिश्यते । तेनात्र बृहत्यां पुनरप्यादितोऽन्ततश्च द्वावे-कर्चौ कार्यौ । तदेव पञ्चैकर्चा । रथन्तरात् पूर्वमेकं, परस्ताच्च-त्वारि रथन्तरमेक मध्ये तृचेकार्यमिति । शशकर्णाविति द्विवचन किमर्थमुच्यते । कल्पकारेण तृतीयेह्नि अभीवर्तकालेये अधि-केक्लृप्ते । तद्यथा तृतीयाह् "अभिसोमास" इति पौरुमद्ग प्रथमाया, तस्यामेवाभीवर्तकालेये द्वितीयाया, गौतम तृतीयाया समानमितरमिति । तदानीमपि शशकर्णौ नित्यौ इत्येवमर्थं द्विवचनम् ॥

मेकर्चं कृत्वा तस्मिन्नेव तृचे द्वेतृचस्ये मध्ये पुनरभ्यास्याथा-मन्तत एकर्चान्ति शशकर्णक्लृप्तावृहतीत्याचक्षत इत्याचक्षत *इति । तदेव पञ्चैकर्चा रथन्तरात् पूर्वं एक उत्तरे चत्वार इति ॥ ८ ॥

८११ पृष्ठ्ये अभीवर्तकालेयेबृहतीष्वनुकल्पयेदिति गौतमः ॥ ९ ॥

यत्सामाऽवसृजेयु अवस्वर्गाल्लोकात् पद्येरन्निति गवामयने प्रत्यहमकरणे दोषश्रुते अभीवर्तस्तावन्नित्य इत्यर्थः । [1]कालेय-मपि ब्राह्मणे तृतीयसवनसन्तानार्थतयोत्पन्नत्वान्नित्यमेवेति ।, ९ ॥

८१२ नेत्तिधानब्रह्मः ॥ १० ॥

[2]अभीवर्तस्तावत् पृष्ठ्ये षडहे ब्रह्मसामत्वेन न कर्तव्य । प्रत्यह पृथगेव ब्रह्मसामभि षडहविभक्तिक्लृप्ते, नापि पवमाने कार्य, श्रुत्यभावादिति ॥ १० ॥

८१३ व्यूह्मानुकल्पयेदिति शाण्डिल्यायनः ॥ ११ ॥

[3]व्यूह्लन्निति शाखान्त, व्यूढ पृष्ठ कुर्वन्नभीवर्तकालेये न कुर्यात्, प्रत्यक्षब्राह्मणविरोधात् । समूढे तु कुर्यादेवेति । एव पृष्ठ्याभिप्लवयो विशेषा उक्ता ॥ ११ ।

अथाभिजित् प्रभृतिषु विशेषमाह—

८१४ एकत्रिंशत्यह.कारिणः उपरिष्टादभिजितः पृष्ठ्यमुपयन्ति प्राक् च विश्वजित स्वरसाम्नश्चोक्थ्यान् । १२ ॥

---

*इतृचस्ये [illegible], इति निदानसूत्र पाठः [illegible] तृतीयखण्डे ।

1 ड कालेयमपि तृतीयसवन सन्तानार्थं । तथा श्रवणात् नित्यमेवेति मन्यत इति ॥

2 ड अभीवर्त पृष्ठ्ये षडहे षडहविभक्तिनाशप्रसङ्गात् ब्रह्म सामत्वेन नकर्तव्य । नापि पवमाने श्रुत्यभावादिति ।

3 ड व्यूह्लन्निति शास्त्र, स व्यूढपृष्ठम् ।

29

ये मध्येगवामयनं एकविंशतिरात्रं सत्रं कुर्म इति मन्वानाः तत्सदृशमभिजिदादिकं कल्पयन्ति, त एकविंशत्यहःकारिणः, ते अभिजिदादीनां क्रमाऽन्यथाकरणं सत्स्थानरञ्च कल्पयन्तीत्यर्थः । ननु च अभिजिद्विश्वजितावेकविंशतिरात्रे न स्तः । तत्स्थानेऽतिरात्रयोः पाठादिति कथमेकविंशत्यहःकारित्वं ? सत्यं; तावन्मात्रमेवभिद्यते अन्यत्सर्वं तद्वदेवेति, इत्येकविंशत्यहःकारित्वमुक्तमिति ॥ १२ ॥

८१५. अभिजिद्विश्वजितौ व्यतिहरन्त्येके ॥ १३ ॥

स्पष्टमिति ॥ १३ ॥

अथ यदि रथन्तरपृष्ठोऽभिजित् स्यात्तदा विशेषमाह—

८१६. अभिजितो रथन्तरपृष्ठस्य राथन्तरी प्रतिपद्धोतुराज्यश्च ॥ १४ ॥

स्पष्टमिति ॥ १४ ॥

८१७. अभिवायुमित्यौशनम् ॥ १५ ॥

अभिवायुमिति पार्थं कल्पकारोक्तमपोह्य औशनमस्य कार्यमिति ॥ १५ ॥

८१८. ज्योतिष्टोमं परम् ॥ १६ ॥

औशनात् परं पृष्ठादिकं यत्, तत्सर्वं ज्योतिष्टौमिकमेव कुर्यादिति ॥ १६ ॥

तत्रापवादमाह—

८१९. सुज्ञानप्रभृति ॥ १७ ॥

पक्षान्तरे प्राप्ते इदं वचनमिति ॥ १७ ॥

यदि ज्योतिष्टौमिकः प्रवर्तते तदा पुरोजितीयोऽन्धस इति श्यावाश्वान्धीगवयोरेव ज्योतिष्टौमिकत्वात्, सामान्तराभावेऽपि स्तोमसंपत्तिः न स्यादत आह—

८२०. श्यावाश्वात्पूर्वे गौरीवितबृहती ॥ १८ ॥

गौरीवितबृहतोरधिकयोरनुष्टुभिनिवेश कार्य, "[1]स सुज्ञाने च तृचस्थे कुर्यात्, उष्णिक्ककुभोस्तृचेकर्चत्वमव्याघातेने"ति वचनात् । तेन स्तोत्रीयादिक सञ्जातमिति त्रिणवस्तोमसपत्तिरिति ॥ १८ ॥

अथ स्वरसामसु विशेषमाह—

८२१. स्वयोनिनी रथन्तरबृहती स्वरसामस्वेके ॥ १९ ॥

तत्र कल्पकारस्तु बृहद्रथन्तरयो स्वयोनिव्यतिरेकेण स्तोत्रीयमकल्पयत् । यज्ञा यथा अपूर्व्यं इति रथन्तर मत्स्यपायि ते मह इति बृहदिति । एके तु स्वयोनिनी × तेकुर्वन्ति । यज्ञा यथा अपूर्वेत्यस्यां योनौ चत्वारिस्वर सञ्ज्ञकानि सामानि भवन्ति, तानि यत्र भवन्ति ते स्वरसामान[2] । स्वराण्यार्भवेषु कल्पकारेण क्लृप्तानि ॥ १९ ॥

सूत्रकारस्तु तेषां पृष्ठत्वमपीच्छन् तत् प्रकार दर्शयति-

८२२. स्वरपृष्ठश्चेत् स्वरसामिकेषु पृष्ठस्तोत्रीयेषु यथास्वम् ॥ २० ॥

यदि स्वरसामान स्वरपृष्ठा चिकीर्षिता तदा स्वरसामसन्निधिषु बृहद्रथन्तरपृष्ठस्तोत्रीयेषु[3] यज्ञायथा अपूर्व्यं, मत्स्यपायि ते महः [4]प्रत्यस्मै पिपीषत इत्येतेषु स्वराणि पृष्ठानि

× अर्हंमिति च आर्भवस्य त्रिवृत्स्तोमत्वात् । स्वयोनिनी एवइच्छन्ति

1 ता ब्रा-14-3 27 । 2 क स्वरसामानः । अत्र कल्पकार तानि स्वराण्यार्भवेषु प्रत्यह पृथगेवोपकल्पयन । 3 क स्तोत्रीयेषुकल्पोक्तेषु ।
4 ऋ-वे-4 42 । ।

कुर्यात् । यथास्वमिति कोऽर्थः? यस्मिन्नहनि यत्स्वरमार्भवेक्लृप्तं तस्मिन्नहनि तत्स्वरं [1]पृष्ठं कुर्यादिति ॥ २० ॥

[2]तदानीमपि त्रिष्वेवमाह—

८२३. स्वराणि चार्भवान्त्यानि ॥ २१ ॥

[3]अत्र कल्पकारेण त्रिष्वप्यहस्स्वार्भवान्त्यानि स्वराण्यैडानि वा स्युरिति विकल्प उक्तः । स्वरपृष्ठत्व पक्षेतु नायं विकल्पः । किन्तु स्वराण्येव आर्भवान्त्यानि स्युरित्ति ॥ २१ ॥

स्वरपृष्ठत्व पक्ष एव कर्तव्यविशेषमाह—

८२४. द्वैगतगौतमयोः स्थाने रथन्तरम् ॥ २२ ॥

प्रथमोत्तमयोः स्वरसाम्नोः माध्यन्दिने पवमाने द्वैगतगौतमयोः स्थाने रथन्तरं पृष्ठस्थानात्प्रच्युतं अनुगृहीतं कुर्यादिति ॥ २२ ॥

८२५. अन्तरिक्षस्य गौतमम् ॥ २३ ॥

[4]उत्तमेऽहन्यन्तरिक्षस्य साम्नः स्थाने गौतममिति ॥ २३ ॥

८२६. स्वरस्य बृहत् द्वितीये ॥ २४ ॥

द्वितीये स्वरसाम्नि आर्भवे पवमाने [5]पृष्ठस्थानात् प्रच्युतमनुगृहीतं बृहत् कुर्यादिति[6] ॥ २४ ॥

1 ड. पृष्ठे । 2. ड तदानीं विशेषमाह् । 3 ड. अत्र कल्पकारेणार्भवेष्वनुष्टुभि गौरीवित तृचे कुर्यात् । तत्स्थाने सामतृच वेति पक्षद्वयमुक्त्वा प्रथमे पक्षे ऐडकुत्समन्त्य द्वितीये पक्षे स्वारकुत्समित्युक्तं । तद्यथा ऐडकुत्समन्त्य स्वार यदि विकल्पयेदित्यादि । तत्र स्वरपृष्ठत्वपक्षे स्वराण्येवार्भवान्त्यानि स्यु । न पुनरैडानीत्यर्थं ॥

4. ड. पुस्तके 'उत्तमेऽहनीति' नास्ति । 5 ड आर्भवेपवमाने स्वरस्थाने इति । 6 ड पुस्तके अस्य सूत्रस्य व्याख्या—' न वैकल्पिक' । आर्भवे पवमाने ऐडमवरयमिति । तत्स्थानार्थमित्यर्थं.' ॥

८२७. नित्यश्च सामतृचः ॥ २५ ॥

द्वितीयेऽह्न्यार्भवे पवमाने यः कल्पकारोक्तः वैकल्पिकः सामतृचः स नित्य एव स्यात् । न गौरीवितेनसहविकल्पते इत्यर्थः । किमर्थं? आर्भवपवमानस्यैडसामसिद्धयर्थम् । अन्यथा अप्रतिष्ठितं तृतीयसवनं स्यादितिदोषश्रुतेः ॥ २५ ॥

प्रथमोत्तमयोःस्वरसाम्नोः न साम तृचः कार्य इत्यभिप्रायेणाह—

८२८. औदलत्वाष्ट्रीसाम्नोरुद्धारः ॥ २६ ॥

सामतृचान्ययोरौदलत्वाष्ट्रीसाम्नोरुद्धारः कार्यः, स्तोमसंपत्यर्थः । तेन प्रथमेह्न्यनुष्टुभि गौरीविते गौतमयोर्नित्यमेव तृचेकरणम् । उत्तमेऽह्नि गौरीवितान्धीगवयोः नित्यमेव तृचेकरणम् । अन्यथा स्तोमो न संभवेत्, [1]आर्भवगतयोः स्वरयोरभावादिति ॥ २६ ॥

अथ विषुवति विशेषमाह—

८२९. विषुवतो दिवैके प्रातरनुवाकमुपाकुर्वन्ति ॥ २७ ॥

तथाचाश्व[2]लायनः, "*विषुवान्दिवाकीर्त्यः" "उदिते प्रातरनुवाक" इति ॥ २७ ॥

---

*"विषुवान् दिवाकीर्त्यः" इति आश्वलायन सूत्रे अष्टमेऽध्याये (उत्तरार्धे द्वितीयाध्याये) षष्ठखण्डे प्रथमद्वितीययोः नारायणवृत्तिः, विषुवानिति एकोनविंशमहः । तदिदानीमुच्यते विषुवान्दिवाकीर्त्योभवति । "उदिते प्रातरनुवाके" अनुवक्तव्य इति शेषः ।

---

1. ङ. पाठे आर्भवगतयोरिति वाक्यं नास्ति । 2. आश्व-श्रौ-८.६-१,२ ।

कुर्यात् । यथास्वमिति कोऽर्थः? यस्मिन्नहनि यत्स्वरमार्भवेनलुप्त तस्मिन्नहनि तत्स्वर [1]पृष्ठ कुर्यादिति ॥ २० ॥

[2]तदानीमपि त्रिष्वेवमाह—

८२३ स्वराणि चार्भवान्त्यानि ॥ २१ ॥

[3]अत्र कल्पकारेण त्रिष्वप्यहस्त्वार्भवान्त्यानि स्वराण्यैडानि वा स्युरिति विकल्प उक्त । स्वरपृष्ठत्व पक्षेतु नाय विकल्पः । किन्तु स्वराण्येव आर्भवान्त्यानि स्युरिति ॥ २१ ॥

स्वरपृष्ठत्व पक्ष एव कर्तव्यविशेषमाह—

८२४ द्वैगतगौतमयोः स्थाने रथन्तरम् ॥ २२ ॥

प्रथमोत्तमयो स्वरसाम्नो माध्यन्दिने पवमाने द्वैगतगौतमयो स्थाने रथन्तर पृष्ठस्थानात्प्रच्युत अनुगृहीतु कुर्यादिति ॥ २२ ॥

८२५ अन्तरिक्षस्य गौतमम् ॥ २३ ॥

[4]उत्तमेऽह्न्यन्तरिक्षस्य साम्न स्थाने गौतममिति ॥ २३ ॥

८२६ स्वारस्य बृहत् द्वितीये ॥ २४ ॥

द्वितीये स्वरसाम्नि आर्भवे पवमाने [5]पृष्ठस्थानात् प्रच्युतमनुगृहीतु बृहत कुर्यादिति[6] ॥ २४ ॥

---

1 ड पृष्ठे । 2 ड तदानी त्रिष्वेवमाह । 3 ड अत्र कल्पकारेणार्भवे स्वानुष्टुभि गौरीवित कृत्वे कुर्यात । तत्स्थाने सामतृच वेति पक्षद्वयमुक्त वा प्रथमे यस्य एडस्वासन्त्य त्रिनोय पत्त स्वारडुार्भमित्युक्त । तद्यथा ऐडस्वावमन्त्य स्वार यदि त्रिवन्त्यर्भीत्यादि । तत्र स्वरपृष्ठत्वपक्ष स्वराण्यथार्भवान्त्यानि स्यु । न पुनरडानीत्यथ ॥

4 ड पुस्तके उत्तमेऽह्नोति नास्ति । 5 ड आर्भवेपवमाने स्वरस्य स्थाने इति । 6 ड पुस्तके अस्य सूत्रस्य व्याख्या— न वैकल्पिक । आर्भवे पवमाने ऐडमवस्थामिति । तत्सामायमित्यथ' ॥

८२७. नित्यश्च सामतृचः ॥ २५ ॥

द्वितीयेऽह्न्यार्भवे पवमाने यः कल्पकारोक्तः वैकल्पिकः सामतृचः स नित्य एव स्यात् । न गौरीवितेनसहविकल्पते इत्यर्थः । किमर्थं? आर्भवपवमानस्यैडसामसिद्ध्यर्थम् । अन्यथा अप्रतिष्ठितं तृतीयसवनं स्यादितिदोषश्रुतेः ॥ २५ ॥

प्रथमोत्तमयोःस्वरसाम्नो' न साम तृचः कार्यं इत्यभिप्रायेणाह—

८२८. औदलत्वाष्ट्रीसाम्नोरुद्धारः ॥ २६ ॥

सामतृचान्त्ययोरौदलत्वाष्ट्रीसाम्नोरुद्धारः कार्यः, स्तोमसंपत्त्यर्थः । तेन प्रथमेऽह्न्यनुष्टुभि गौरीवित गौतमयोर्नित्यमेव तृचेकरणम् । उत्तमेऽह्नि गौरीविताभ्धीगवयोः नित्यमेव तृचेकरणम् । अन्यथा स्तोमो न संभवेत्, [1]आर्भवगतयोः स्वरयोरभावादिति ॥ २६ ॥

अथ विषुवति विशेषमाह—

८२९. विषुवतो दिवैके प्रातरनुवाकमुपाकुर्वन्ति ॥ २७ ॥

तथाचाश्व[2]लायन, "*विषुवान्दिवाकीर्त्य" "उदिते प्रातरनुवाक" इति ॥ २७ ॥

---

*"विषुवान् दिवाकीर्त्य" इति आश्वलायन सूत्रे अष्टमेऽध्याये (उत्तरार्धे द्वितीयाध्याये) षष्ठखण्डे प्रथमद्वितीययोः नारायणवृत्तिः, विषुवानिति एकोनविंशमहः । तदिदानीमुच्यते विषुवान्दिवाकीर्त्यो भवति । "उदिते प्रातरनुवाके" अनुवक्तव्य इति शेषः ।

---

1. ड. पाठे आर्भवगतयोरिति वाक्यं नास्ति । 2. आश्व श्रौ ८ ६-१,२ ।

८३०. बहिरस्यैके बहिष्पवमानेन स्तुवते ॥ २८ ॥

अहीनबहिष्पवमानं सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र । आद्य[1]न्तयोस्तु सत्येष्विति वचनात्, सदसि बहिष्पवमानं प्राप्तं तदेके बहिरेवास्मिन्नहनि कुर्वन्तीत्यर्थः ॥ २८ ॥

८३१. अग्निरिन्द्रायोपास्मै पवस्वाच इति स्तोत्रीयं शुङ्गाः ॥ २९॥

अग्निरिन्द्रायेत्युपात्ताः तिस्र ऋचः संभृत्य बहिष्पवमाने स्तोत्रीय प्रतिपत्तृचं कुर्वन्ति ; शुङ्गानाम शाखिन इति ॥ २९ ॥

८३२. यात आवाविवति मापशरावयः ॥ ३० ॥

मापशरावयो नाम केचिच्छाखिनः, यात आवाविवति तृच स्तोत्रीयमाहुरिति ॥ ३० ॥

८३३. यज्ञायज्ञीय मासे व्यतिहरन्त्येके ॥ ३१ ॥

विषुवतियज्ञायज्ञीयमासयोरन्योन्यस्थानव्यतिहारमेके इति ॥ ३१ ॥

८३४ षण्महाँ असिसूर्यैन्द्रमिदेवतातये भ्रायन्त इव सूर्यमिति महादिवाकीर्त्यस्तोत्रीया विकल्पन्ते ॥ ३२ ॥

विभ्राट् बृहत्पिबतु सोम्यं इत्येतेन सह त्रयस्तृचाः प्रत्येकं विकल्पन्त इति ॥ ३२ ॥

इति अष्टमे द्वितीयः खण्ड.



---

1. द्रा-४-१-१३, १४ ।

अथ तृतीयः खण्डः

८३५. बृहत्पृष्ठश्चेदग्नियवती प्रतिपत् ॥ १ ॥

यदि बृहत्पृष्ठो विषुवान् स्यात्, तदानीं अग्नियवती प्रतिपदिति ॥ १ ॥

८३६. तृतीयात्साहस्रादाज्यानि नित्यैर्विकल्पन्ते ॥ २ ॥

साहस्रा नाम चत्वारः एकाहाः क्रमेणह्याम्नाताः। तेषां तृतीयात्साहस्रादाज्यानि कल्पकारोक्तैः नित्यैर्विकल्पन्ते। अग्निन्दूत वृणीमह इत्युभयान्याज्यानीत्यर्थः ॥ २ ॥

८३७. *उत्सेधस्थाने रथन्तरं तस्य महादिवाकीर्त्यम् ॥ ३ ॥

विषुवति बृहत्या पञ्चसामानि सन्ति। उत्सेधः प्रथम, रथन्तर पञ्चम, तत्र प्रथममपोह्य रथन्तर स्यात्, तत्स्थाने महा दिवाकीर्त्यं पञ्चममिति ॥ ३ ॥

८३८. अयंसोम इति पार्थम् ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

८३९. आभिजितानि पृष्ठानि ॥ ५ ॥

अभिजितो यानि पृष्ठानि तान्यत्र पृष्ठानिस्युरिति ॥ ५॥

तत्र विशेषमाह—

८४०. इन्द्रक्रतौ श्यैतम् ॥ ६ ॥

इन्द्रक्रतुन्न आभर इति प्रगाथे श्यैतं स्यादिति ॥ ६ ॥

८४१. गोः ककुबुष्णिहौ ॥ ७ ॥

गोष्टोमस्यैकाहस्य ककुबुष्णिहावाहरेदिति ॥ ७ ॥

८४२. उद्धरति पिपीलिका[1]मध्याम् ॥ ८ ॥

*ङ पुस्तके एतत्सूत्र द्विधाकृतम्।

1. पिपीलिकमध्यामिति पा. मे।

पर्यूपु प्रथन्ववाजसातयत इति कल्प*कारोक्ता पिपीलिका-मध्यानुष्टुभमुद्धरेदिति ॥ ८ ॥

८४३. श्यावाश्वविकर्णं गौरीवितान्धीगवौदलमासान्यनुष्टुभि ॥ ९॥

पुरोजिती वोऽन्धस इत्यनुष्टुभिश्यावाश्वादि सामषट्क स्यादिति ॥ ९ ॥

८४४. औदलस्थाने वाङ्निधन क्रौञ्चम् ॥ १० ॥

स्पष्टमिति ॥ १० ॥

८४५. अरण्ये गेये तृचयोः ॥ ११ ॥

तेषा षण्णा साम्ना मध्ये अरण्येगेये भासविकर्णे, ते तृचयो स्याताम्, इतराण्येकर्चानीति ॥ ११ ॥

८४६. महाव्रतपरे ॥ १२ ॥

अनुष्टुभ परे ये सामनी पवमानास्य अग्निष्टोम साम च, ते द्वे अपि महाव्रतादाहरेत्तद्यथा, सूर्यवतीषु काबमन्त्य, यज्ञायज्ञीय अग्निष्टोमसामेति ॥ १२ ॥

अथ विश्वजिति विशेषमाह—

८४७. विश्वजिति यज्ञायज्ञीयबृहती व्यतिहरन्त्येके ॥ १३ ॥

८४८. बृहत्पृष्ठ्यस्तृतीयात्साहस्रात् प्रात सवनम् ॥ १४ ॥

८४९. कालेयस्थाने समन्तम् ॥ १५ ॥

८५०. **अयं सोम इति पार्थम् ॥ १६ ॥

८५१. आभिजितानि बृहति ॥ १७ ॥

*कल्पोक्ताम् ।

**सू—२० एतत् सूत्रपञ्चक पूर्वमुक्तम् (४ to ८) ।

८५२. इन्द्रक्रतौ श्यैतम् ॥ १८ ॥

८५३. गोः ककुब्णिही ॥ १९ ॥

८५४. उद्धरति पिपीलिकमध्याम् ॥ २० ॥

स्पष्टानि सूत्राणीति ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७॥ ॥ १८ ॥ १९ ॥ २० ॥

८५५. अनुष्टुप्प्रभृति व्रतात् ॥ २१ ॥

आर्भवे पवमाने अनुष्टुप्प्रभृति अग्निष्टोमसामान्त महाव्रतादाहरेदिति ॥ २१ ॥

अथोत्तरे पक्षसि अयनविकल्पा*न्नामनविकल्पान् दर्शयति—

८५६. उत्तरे पक्षस्ययन विकल्पाः ॥ २२ ॥

वक्ष्यन्त इति शेष ॥ २२ ॥

८५७. अभिप्लवपृष्ठ्यान् प्रतिलोमानुपयन्त्यहरावृत्तकारिणः ॥ २३ ॥

केवलमहोभिरावृत्तमुत्तर पक्ष ये कुर्वन्ति ते अहरावृत्तकारिण । अभिप्लवपृष्ठ्यानिति पूर्वनिपातो अभिप्लवाना पूर्वानुष्ठानार्थं । यथा पूर्वे पक्षसि **विकृतमेव उत्तरस्मिन्नपि प्रथममभिप्लवान् कृत्वा पश्चात् पृष्ठ्य कुर्यु । केवलमहान्येव तेषा प्रतिलोमानि स्युरित्यर्थः । तथा च तैत्तिरीयकं, "उ[1]परिष्टात् मासान् पृष्ठ्यानुपयन्ती"ति ॥ २३ ॥

८५८. पृष्ठ्याभिप्लवाननुलोमान् मासावृत्तकारिणः ॥ २४ ॥

*अयनविकल्पाद्गमन, इति क, ख, पुस्तके ।

**पक्षसि कृतमेव, इति ङ पुस्तके ।

1 तै-स ७-४-१-६ ।

प्रथमं पृष्ठ्यं कृत्वा पश्चादभिप्लवान् कुर्युः । तदानीमनुलोमान्यहानि स्युरिति । उभयावृत्तकारिणोभय, कुत ? "[1]पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः चत्वारोऽभिप्लवाः षडहाः समासः" इति ब्राह्मणम् । तदुक्तं सूत्रकारेण, "[2]एत एवावृत्ताः ऊर्ध्वं विषुवतोऽभिप्लवास्तेषां प्रतिलोममहान्युपेयुरित्यादीनि ॥

८५९ गो आयुषी च व्यतिहरन्ति ॥ २५ ॥

स्पष्टमिति ॥ २५ ॥

८६०. उत्तमं संभार्यं कुर्वन् सप्तमान्मासात् पृष्ठ्याभिप्लवान् उद्धरेत् ॥ २६ ॥

पृष्ठ्याभिप्लवैरन्यैश्च कतिपयैः अहोभिः य सम्भ्रियते मासः ससभार्यः । षष्ठश्च सप्तमश्चोत्तमश्च । तयोरुत्तरस्मिन् पक्षसि यद्युत्तममेव मासं संभार्यं कर्तुमिच्छेत्तदा सप्तमात् मासात् पृष्ठ्याभिप्लवान् उद्धरेदिति ॥ २६ ॥

कथं तस्य अहः क्लृप्तिः अत आह—

८६१. पञ्चायनमासान् कृत्वा दश*रात्रमिश्रादभिप्लवमुद्धरेत् ॥ २७ ॥

अयनमासो नाम पृष्ठ्यपञ्चमैश्चतुर्भिः अभिप्लवैः निर्मितः, तान् सप्तमप्रभृति पञ्चमासान् कृत्वा दशरात्रमिश्रादुत्तमान्मासादभिप्लवमेकमुद्धरेत् । अभिप्लवमिति एकत्वं विवक्षितमिति । एवमेकसभार्यमुत्तरपक्षः । तदानीमावृत्तं स्वरसामभिः विश्वजिताचोत्तमोमास पूर्यत इति ॥ २७ ॥

*मू-२७ ड पुस्तके पाठान्तरे दशरात्रमिथमासमुद्धरेदित्येव, २८, २९ सूत्रे च न स्तः ।

1 ता-ब्रा २४-२०-१ । 2. द्रा ७ ४-१९,२० ।

८६२. तथा सति पूर्वे पक्षसि विकल्पः ॥ २८ ॥

तथासति—एकसभार्यत्वपक्ष इत्यर्थः । तदानीं पूर्वस्मिन्नपि पक्षसि षष्ठोमासः प्रथमो वा संभार्य इति विकल्पः ॥ २८ ॥

प्रथमस्य संभार्यत्वप्रकारं दर्शयति—

८६३. षष्ठादभिप्लवपृष्ठ्यावुद्धृत्य चतुर्विंशाद् द्वितीयाद्वा उत्तरान् कुर्यात् ॥ २९ ॥

*षष्ठान्मासादुद्धृत्य चतुर्विंशाद्द्वितीयादह्नः उत्तरान् कुर्यादिति ॥ २९ ॥

८६४. समौ पक्षौ चिकीर्षन् पञ्चायनमासान् कृत्वा दश**रात्रमासमुद्धरेत् ॥ ३० ॥

यदि सर्वात्मना पक्षयोः साम्यमिच्छेत्तदा सप्तममासमेकं संभार्यं कृत्वा ततः परानष्टमप्रभृतीन् पञ्चायनमासान् कुर्यात् । उत्तमं संभार्यं लुंपेदिति ॥ ३० ॥

किञ्चेत्याह—

८६५. पञ्चदशौ पक्षौ व्रतस्यापरिमात्कम्॥ ३१ ॥

महाव्रतेऽहनि व्रतस्तोत्रस्य पक्षौ बृहद्रथन्तरे, पञ्चदशस्तोमावेव स्याताम् । तयोरेकं सप्तदशं [1]ब्राह्मणे क्लृप्तम् । तन्निवृत्त्यर्थं पञ्चदशावित्युक्तम् । एवं च सति चतुर्विंशमहाव्रतेऽहनि सामस्तोत्रीये भवत इत्युभयोरपि पक्षयोः साम्यसिद्धिः । अपरिमात्कमिति कोऽर्थः ? त्रयोदश परिमादो ब्राह्मणेक्लृप्ताः, [2]प्राणेन-

*एकोनत्रिंशसूत्र व्याख्या ट पुस्तके नास्ति ।

**दशरात्रमिश्रमासं–पाठ भे. ।

1. ता–ब्रा–5 1-10 । 2 तर–ब्रा-5-4-1 ।

पुरस्तादाहवनीयमुपतिष्ठन्त इत्यादयः, तद्रहितं महाव्रतं कुर्यादित्यर्थः ॥ ३१ ॥

८६६. बृहत्पृष्ठं विश्वजितम् ॥ ३२ ॥

पक्षयोः साम्यमिच्छन् बृहत्पृष्ठं विश्वजितं कुर्यादित्यर्थः ॥ ३२ ॥

अथायुगमधिकृत्याह—

८६७. विश्वजित आयुषमेक उपयन्ति ॥ ३३ ॥

विश्वजित उत्तरं कुर्वन्तीत्यर्थः ॥ ३३ ॥

८६८. तथासति गो आयुषोरैकाहिके बृहत्यौ ॥ ३४ ॥

तदानी गो आयुषोर्माध्यन्दिने पवमाने ऐकाहिके बृहत्यौ न सांवत्सरिके इत्यर्थः ।

ननु च, ऐकाहिक भूतयोः सांवत्सरिकयोश्च गो आयुषोः बृहतीभेदो नास्ति । सत्यं–तद्गतानि सामानि भिद्यन्ते तदभिप्रायो बृहती शब्द इति ॥ ३४ ॥

अथ दशरात्रमधिकृत्याह—

८६९. दशरात्रमेके आवर्तयन्ति ॥ ३५ ॥

अविवाक्यदशममहरारभ्य त्रिवृदन्तं प्रतिलोमं कुर्वन्ति । कुतः? अभिप्लवादिवद्दशरात्रस्यापि गणत्वादुत्तरस्मिन् पक्षसि गणानामावृत्तेश्चेति । तत्र निदानकारेणोक्तं, न वयमावर्तयाम अनुपेतः पूर्वे पक्षसि दशरात्रस्तं कस्मादावर्तयाम इति । ननु च माभूत्तस्यावृत्तिः, दशरात्रान्तर्गतस्य पृष्ठ्यस्यावृत्तिरस्तु । तस्य पूर्वपक्षसि कृतत्वात् । नैवं; व्यूहसमाधिभङ्गप्रसङ्गात् । तथाहि,

पृष्ठ्यस्योत्तरे त्र्यहे छन्दोमेषु चान्यैरव्यवहितेषु व्यूहः क्लृप्तः। आवृत्तिपक्षे समूढे[1]त्र्यहेण व्यूढानां अह्नां व्यवायस्स्यादिति ॥ ३५ ॥

अत्र दशमाहस्स्ते मानसं स्तोत्रं [2]ब्राह्मणे क्लृप्तं, तत्रविशेषमाह–

८७०. तस्मात् व्रतं यदा परं व्रतान्ते मानसं सांवर्गजिताः गौतमाः ॥ ३६ ॥

यदा येषु सत्रेषु दशरात्रात् परं महाव्रतं क्रियते, तदा महाव्रतान्ते मानसं कार्यम्। यदा पुनः न क्रियते, तदा दशरात्रान्त एव कार्यं। कुत एषा व्यवस्था? ब्राह्मणे [3]मनसा प्रस्तौति मनसोद्गायतीत्युक्त्वा किमर्थमेवं क्रियते, इत्याशंक्य असमाप्तस्य समाप्त्यै, [4]यद्वै वाचा न समाप्नुवन्ति मनसातत्समापयन्तीति वचनात्। तस्यायमर्थः–यत् पूर्वोक्तेन कृत्स्नेन वाचोगतेन स्तोत्रशस्त्र रूपेणावाप्तुं न शक्यते, तस्य प्राप्त्यर्थं मानसमिति। तेन वाचोगतसमाप्तौ मानसकरणावगमात्, वाचाकृत्यं महाव्रतमपि समाप्यैव मानसं कार्यम्। व्रताभावे दशमान्त एवेति। नन्वेवं उदयनीयान्ते मानसप्रसङ्गः। नैवं; प्रायणीयोदयनीययोः मध्यवर्ति यदसाधारणं वाचोगतं तस्य सर्वस्य समाप्तौ मानसं कार्यमित्यभिप्राय.। किञ्च-प्रायणीयोदयनीययोरेकत्वात् प्रायणीयकृतेनोदयनीयः कृत एवेत्येष गौतमानामभिप्रायः ॥ ३६ ॥

इति तृतीयः खण्डः

---

1. समूढेन पूर्वत्र्यहेण। 2. ता-ब्रा-4-9-8। 3. ता–ब्रा-4-9-9।
4. ता–ब्रा–4–9–10।

## अथ चतुर्थः खण्डः

८७१. ज्योतिषामयन विकल्पा ॥ १ ॥

ज्योतिषां सोमसूर्यनक्षत्राणां यदयनं-नानारूपं गमनं, तन्नि-मित्ता संवत्सरविकल्पा. गवामयने वक्ष्यन्त इति ॥ १ ॥

८७२. तत्र यदादितोऽन्ततः तदूर्ध्वं विषुवत ॥ २ ॥

तत्र यन्मासानामादितो वक्ष्याम. तद्विषुवत ऊर्ध्वं मासा-नामन्तत स्यादिति ॥ २ ॥

८७३. मासि मास्याद्यस्याभिप्लवस्यस्थाने त्रिकद्रुकाः स षट्त्रिंश-दह्नो नाक्षत्रः ॥ ३ ॥

गवामयनस्य [1]पूर्वपक्षसि प्रतिमासं प्रथमाभिप्लवस्थाने त्रिकद्रुका एव स्युः। तत्र यदादितोऽन्ततस्तदितिवचनात् सनाक्ष-त्रस्संवत्सरो भवति। षट्त्रिंशदहोभिरून. ॥ ३ ॥

कुत इत्याह—

८७४. [2]सप्तविंशिनोहि मासाः ॥ ४ ॥

यस्मात् सप्तविंशति नक्षत्रपरिमिताः मासाः सप्तविंशि-नोहि भवन्ति, तस्मान्नाक्षत्रोऽयं संवत्सर इति ॥ ४ ॥

८७५. षष्ठाद्यस्याभिप्लवस्य स्थाने ज्योतिर्गौश्च ज्योतिरेवावृत्ते ॥ नवोनः नाक्षत्र एव त्रयोदशी ॥ ५ ॥

षष्ठमासाद्यस्य अभिप्लवस्य स्थाने ज्योतिश्च गौश्चेति दिवसद्वयमेव स्यात्। आवृत्ते सप्तमे मासे अन्त्याभिप्लवस्य स्थाने ज्योतिरेवैकं स्यात्। सोयं नवाहोनो नाक्षत्रः संवत्सरः त्रयोदशमासवानिति ॥ ५ ॥

---

1 इ उत्तरस्मिन् पक्षसि प्रतिमासमन्त्यस्याभिप्लवस्य स्थाने त्रिकद्रुका एव स्यु। 2 इ विंशतिनो।

८७६. युग्ममासेष्वाद्यस्याभिप्लवस्य स्थाने तत्पञ्चाहः स षडून-श्चान्द्रमसः ॥ ६ ॥

गवामयनस्य युग्ममासेषु द्वितीयचतुर्थादिष्वाद्याभिप्लवस्थानेऽभिप्लवपञ्चाह एवस्यात्, सः षडहोनश्चान्द्रमसः संवत्सर इति ॥ ६ ॥

८७७. षष्ठादौ त्रिकद्रुकानभिप्लवश्चोपदद्ध्यात् सोऽष्टादशाधिकः पौर्णमासीप्रसवः तैर्यगयनिक आदित्यस्य ॥ ७ ॥

षष्ठमासादौ त्रिकद्रुकानभिप्लवञ्चेति नवाहमधिकमुपदद्ध्यादावपेत् । तथैव सप्तमेऽपि मासे तृतीयावभिप्लवादूर्ध्वं नवाहमुपदद्ध्यात् । सोयमष्टादशदिवसाधिकः सूर्यसंवत्सरः । पौर्णमास्यां प्रथमसुत्या यस्य स पौर्णमासीप्रसवः, तदा पौर्णमास्या सुत्यां कुर्यादित्यर्थः । तैर्यगयनिक इति कोऽर्थः? आदित्यस्य तिर्यग्गमनं दक्षिणायनमुत्तरायणञ्च, तत्र कदाचिदादित्यः षण्मासान् दक्षिणत एति नव च अहानीति, तथा षण्मासानुत्तरत एति नव च अहानीति *निदानकारेण उक्तं । तिर्यग्गमनविशेषनिमित्तस्संवत्सरः तैर्यगयनिकः । सावनस्तु संवत्सरः एको ब्राह्मण क्लृप्त इति ॥ ७ ॥

*निदानसूत्रे, "अथातः संवत्सराः वर्माणां पञ्चसंवत्सराः" इत्यारभ्य सौर चान्द्र नाक्षत्र सावनादि भेदेन पाञ्चविध्यमुक्त्वा, अष्टादशभिः ज्यायानादित्यसंवत्सर एव तैर्यगयनिको भवति । आदित्यः खलु शश्वदेकदा षण्मासानुदङ्ङेति नवच अहानि, तथा दक्षिणा, इत्युक्तं निदानसूत्रे पञ्चमप्रपाठके 'एकादश' द्वादश' खण्डयोः ॥ (पृष्ठं ८०)

अथेदानीं उत्सर्गिणा अयन प्रस्तौति—

**८७८. उत्सर्जनादि मासि मासि ॥ ८ ॥**

उत्सर्जन-कर्मलोपः, स तु बहुप्रकार इति बहुवचनं। मासिमास्युत्सर्जनं कार्यमित्यर्थः। काम्यञ्चैतद्यथोक्तं आप॰स्तम्बेन, तदेतत् पौर्णीय पशव्यमायुष्यं स्वर्ग्यमिति ॥ ८ ॥

**८७९. यथान्त एवमावृत्तानामादिः । ९ ॥**

यथा पूर्वस्मिन् पक्षसि मासान्त एव उत्सर्जनं, एवमावृत्ताना आदावुत्सर्जनं स्यादिति ॥ ९ ॥

तदेव दर्शयति—

**८८०. पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वाऽग्निष्टोममुत्तमे ॥ १० ॥**

प्रथमे मासि तावत् पूर्वेषु त्रिष्वभिप्लवेषु षष्ठ षष्ठमहरुक्थ्यसस्थ कृत्वोत्तमे चतुर्थेऽभिप्लवे षष्ठमहरग्निष्टोम सस्थ कुर्यात्। सोयमुक्थ्यसस्थालोपोनाम किञ्चिदुत्सर्जनमिति ॥ १० ॥

प्रकारान्तरमाह—

**८८१. तदेकत्रिकस्तोमम् ॥ ११ ॥**

अथवोत्तमस्याभिप्लवस्य तत् षष्ठमहरेकत्रिकस्तोम स्यात्, यस्याह्नः स्तोत्रेषु एकश्च त्रिकश्च स्तोमो बहिष्पवमानप्रभृति व्यत्यासेन भवतः तदेकत्रिक स्तोम, सोऽय स्तोत्रीयालोपो नामोत्सर्ग इति ॥ ११ ॥

तदानीं विशेषमाह—

**८८२. मसृक्षतेति बहिष्पवमानम् ॥ १२ ॥**

1. आप-श्रौ-21-25-12।

षष्ठस्याह्नो [1]असृक्षतेत्येका स्यात् । बहिष्पवमान ऋङ्-नियमार्थमेतदिति ॥ १२ ॥

८८३. **गायत्रं गायत्र्या आश्वमैडं बृहत्या गोष्ठो वा ॥ १३ ॥**

माध्यन्दिने पवमाने गायत्र्या गायत्रमेकमेव साम स्यात् । बृहत्यामैडमाश्व स्यात् । गोष्ठो वा साम । अपूर्वविधिरय, अप्राकृतत्वात् आश्वगोष्ठयोरिति ॥ १३ ॥

८८४. **[2]अयारुचेति गायत्रपार्श्वमार्भवः ॥ १४ ॥**

अयमप्यपूर्वविधि ॥ १४ ॥

*सविदमुत्सर्जनद्वय भावा एते सवत्सर व्याययन्तीति* खण्डेन ब्रा[3]ह्मणे दर्शितम् । तत्रैव खण्डे अहरुत्सर्गं तृतीय प्रकार विधाय तस्याह्न स्थाने सवनत्रयतुल्य [4]पशुर्विहित । तत्र शाखान्तरीय विशेष दर्शयति—

८८५. **सवनविध पशुं कुर्वन्नुत्तममभिप्लवं पञ्चाह कृत्वा षष्ठस्थाने सवनविधः पशु ॥ १५ ॥**

ब्राह्मणोक्तसवनतुल्य पशु कुर्वंश्चतुर्थेऽभिप्लवे पञ्चाह कृत्वा षष्ठस्थाने पशु कुर्यादिति ॥ १५ ॥

तत्रैव विकल्पमाह—

८८६. **[5]प्रथम वाभिप्लव पञ्चाह कृत्वा मासान्ते सवनविधः पशुः ॥ १६ ॥**

---

1 ह एकस्या बहिष्पवमान । ऋङ नियमार्थमेतत्सूत्रम ।

2 ता ब्रा 16 16 8 । 3 ता ब्रा 5-10 1 । 4 ता-ब्रा 5 10-9 to 11 । 5 ह प्रथम वाभिप्लव पञ्चाह कृ त्वा समाप्ते सवनविध पशु ।

प्रथममभिप्लवं पश्चाह् कृत्वा षष्ठं लोपयित्वा तदनुग्रहाय [1]मासान्ते पशु कुर्यादिति ॥ १६ ॥

८८७. सर्वान्नूनानेके ॥ १७ ॥

एके शाखिनः सर्वान्मासानूनानेव ब्रुवते । त्यक्तस्याह्नोऽनुग्रहाय सवनविध पशु. न कार्यः । किन्तु त्यक्त तत् त्यजेदेवेत्यर्थ. ॥ १७ ॥

तेषा शाखिनामुत्सर्गप्रकारमाह—

८८८. प्रथमं चाऽभिप्लवपश्चाहं कुर्युः ॥ १८ ॥

स्पष्टम् ॥ १८ ॥

८८९. अहनी वा समस्येयुरभिप्लवपृष्ठयोस्साम्निपातिके ॥ १९ ॥

सन्निपाते भव सान्निपातिक, ते द्वे अहनी समस्येयुः । एतदुक्त भवति, चतुर्थाऽभिप्लवस्य षष्ठमह पृष्ठस्य प्रथममहः एकस्मिन्नवदिवसेकुर्यात् । सोऽयमहर्द्वयसमासोनाम उत्सर्ग इति ॥ १९ ॥

८९० अभिप्लवयोरुत्तमे ॥ २० ॥

उत्तमे-द्वादशे मासि, अभिप्लवयोरेव सान्निपातिक अहर्द्वयं समस्येयु । पृष्ठसन्निपाताभावादिति ॥ २० ॥

एवमूनकारिणामुत्सर्गिणा दीक्षायाविशेषमाह—

८९१. तथासत्येकादश्या पूर्वपक्षस्यदीक्षित्वात्रयोदशदीक्षाः कुर्वीरन् ॥ २१ ॥

1 ग सामान्ते ।

त्रयोदशदीक्षाकरणं किमर्थमिति निदानं मृग्यम्[1] ॥ २१ ॥

८९२. सप्तदश वा ॥ २२ ॥

सप्तदशदीक्षाकरण सर्वेषामेव मासानां पूर्वपक्षे समाप्त्यर्थमिति ॥ २२ ॥

८९३. व्यत्यासं वा पूर्णोनान् ॥ २३ ॥

आद्यो मास. पूर्णं स्यात् । द्वितीयो मास ऊनः स्यात् । एवमेव व्यत्यासमुत्तरानपि मासान् कुर्यादिति ॥ २३ ॥

८९४. ऊनपूर्णानाश्वलायनिनः ॥ २४ ॥

आवृत्तेषु मासेषु विपरीतो व्यत्यास, प्रथम. ऊनः कार्यः, द्वितीय पूर्णं इति ॥ २४ ॥

८९५. एकाष्टकादीक्षिण उपसर्गिणः ॥ २५ ॥

ये त्यक्तमह. पुनरुःसृजन्ति-उपनविधेन पशुना स्वीकुर्वन्ति त उपसर्गिण इत्युच्यन्ते । त एकाष्टकाया दीक्षेरन् । ये पुनः त्यक्तमह सर्वयोपेक्षन्ते तेषा पूर्वमेवोक्तम्, तथासति एकादश्यां दी[2]क्षित्वेत्यादि ॥ २५ ॥

८९६. ते तूष्णीमेव[3] त्रिंशमहरासीरन् ॥ २६ ॥

त्रिंशतोऽह्ना पूरण त्रिंशमहरित्यन्त्यमहरुच्यते । तस्मिन्नहनि तूष्णीमेवासनम् ॥ २६ ॥

1. इ पुस्तके सू 21 व्याख्या - त्रयोदश दीक्षाकरण किमर्थं? विषुवत पूर्वस्य स्वरसाम्नो मासान्त्यस्य पूर्वपक्षेसमाप्त्यर्थं । यदि प्रकृतिवत् द्वादशदीक्षा स्युः, तदानीमसौ स्वरसामापूर्वार्धस्योत्तमहरमावास्यायामापद्येत । ततश्च पूर्वपक्षमासा अभिसम्पद्यन्त इति ब्राह्मणोक्त (ता-ब्रा-5-9-14) न सिद्ध्यति ॥ 2. द्रा-8-4-2।

3. इ एकत्रिंशमहरासीरन् ।

८९७. सवनविधेन वा पशुना यजेरन् ॥ २७ ॥

अथवा सवनपशुः कार्य इति ॥ २७ ॥

अथोपसर्गिणामूनकारिणाश्च साधारणमाह—

८९८ *अध्वर्योबह्वृचे समयकृत्वा दीक्षेरन्नेव अविलोपोभवतीति भवतीति ॥ २८ ॥

अध्वर्यवस्तु बहुप्रकारानुत्सर्गानाहु[1]। षडहैर्मासान् सपाद्याहरुत्सृज[2]न्तीति। तेन सं समय कृत्वा तदुक्तमस्मदुक्त वैक प्रकार निश्चित्य दीक्षादिक कुर्युस्तथा सति कर्माविलोप सिद्ध्यतीति ॥ २८ ॥

**इत्यष्टम पटले चतुर्थः खण्डः

कल्पोक्त ब्राह्मणोक्तञ्च यथावदवधारयन् ।
अष्टम पटल व्याख्यात् धन्वी मेधाविना प्रिय ॥

अष्टम पटल समाप्त



अथ नवमः पटलः

प्रथम खण्ड

अथ पृष्ठ्यषडहे प्रत्यह पृष्ठस्तोत्रकाले कर्माणि वक्तुमुपक्रमते-

८९९. पृष्ठ्ये रथमतिवहेयु पश्चात्प्राञ्च दक्षिणतोऽधोदञ्च बहिर्वेदि रथन्तरस्य स्तोत्रे ॥ १ ॥

*अध्वर्युबह्वृचे इति क पुस्तके ।

**खण्डचतुष्टयात्मक अष्टम पटल नास्ति लाट्यायने ।

1 कात्यायन-श्री-24 7 23 24। शांखायन-श्री 13-20। तै स-7 5 6,7। 2 तै-स-7 5 6,1।

बहिर्वेदि पश्चात्सन्त रथं प्राञ्च वहेयु, अथवा दक्षिणत स्थित उदञ्च वहेयु इति ॥ १ ॥

९००. बृहतो दुन्दुभिमाहन्युः ॥ २ ॥

बृहतस्तोत्रे दुन्दुभिघोष कुर्युरिति ॥ २ ॥

९०१. उपव्राजयमाना वैरूपेण स्तुवीरन्नुपवाज्यमाना वा ॥ ३ ॥

उपवाज नाम व्यजनेन वातोत्पादन, तत् कुर्वन्त स्तुवीरन्, यजमानपुरुषैर्वाज्यमाना वा स्तुवीरन्निति ॥ ३ ॥

९०२. वाचयित्वा यजमान वात, वात आवात्विति तृचेनानुमन्त्रयेत ॥ ४ ॥

यजमानवाचनानन्तर व्यजनोत्पादित वात, वातआवात्विति तृचेनानुमन्त्रयेतेति ॥ ४ ॥

९०३. वैराजस्य स्तोत्र उपाकृत उपर्यनुरुशकलन्निधाय तृणे च तस्योपरि तिरश्चीमरणिन्निधायाभ्यात्म प्रजननं कृत्वा त्रिः प्रदक्षिणमभिमन्थेत् गायत्र छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमितिगौतमः ॥ ५ ॥

उद्गातुरूरूपरिष्टादन्वञ्च शकल निधाय तथैव स्तोत्रोपाकरणार्थे तृणे बर्हिषी च निधाय शकलस्योपरिष्टात् तिरश्चीमरणिन्निधाय प्रजननमुत्तरारणिमभ्यात्म उपरिष्टात् कृत्वा मन्थेत्, मन्त्र पञ्चकेन । त्रैष्टुभमित्यादिषु छन्दोऽनु प्रजायस्व इत्यनुषङ्गात्, पञ्च मन्त्रा इति ॥ ५ ॥

९०४. *चतुर्भिरिति धानञ्जय्यः ॥ ६ ॥

---

*वैराजमिति हित्वा शिष्टैश्चतुर्भि इत्यर्थ ।

९०५. *त्रिभिरिति शाण्डिल्यः ॥ ७

९०६. अरण्योरमन्धानमालभ्योपजिघ्रेत् पाणी,[1] तेजोसि तेजोमयि धेहीति ॥ ८ ॥

स्पष्टानीति ॥ ६ ॥ ७ ॥ ८ ॥

९०७. मथ्यमाने स्तोमं युञ्ज्यात् ॥ ९ ॥

मथ्यमानेऽग्नौ स्तोमयोगविधानात् मथनोपक्रममात्र उद्गातुरिति गम्यते ॥ ९ ॥

९०८. जाते स्तुवीरन् ॥ १० ॥

९०९. वाचयित्वा यजमानं पुनरूर्जानिवर्तस्व पुनरग्न इषायुषा पुनर्नः पाह्यंहसः । सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया विश्वप्स्न्या विश्वतस्परीत्यनुमन्त्र्याभिजुहुयात् ॥ ११ ॥

स्पष्टे ॥ १० ॥ ११ ॥

९१०. तदुक्तं ब्राह्मणेन ॥ १२ ॥

'प्रेद्धो अग्ने दीदिहीति मन्त्रेण होमो ब्रा[2]ह्मणेन विहित इति । अत्राग्निप्रहरणमाध्वर्यव, सूत्रकारेणोद्गातुर्विधानाभावादिति ॥ १२ ॥

९११ स्वाहाकारेणोत्तराम् ॥ १३ ॥

केवल स्वाहाकारेणोत्तरामाहुतिं जुहुयादिति ॥ १३ ॥

९१२ अपस्सावका उपनिधाय महानाम्नीभिःस्तुवीरन् ॥ १४ ॥

**अवकायुक्ताः सावका इति ॥ १४ ॥

*आनुष्टुभ वैराज हित्वा त्रिभि इत्यर्थं. ।

**अवका - शैवाला ।

1 V. S. ११-१ । 2. ता-ब्रा-१२-१०-२० ।

९१३. यो यः सामाङ्गं ब्रूयात्स उदघोषं जनयेत् ॥ १५ ॥

यो य. सामाङ्ग प्रस्तावादिकं ब्रूयान् स उदके घोष जनयन् ब्रूयादिति ॥ १५ ॥

९१४. *शाचयित्वा यजमानं ता निनयेदास्तावे अनाधृष्टासि शान्त्वा सोमो राजाऽवतु यामर्पीया उपतिष्ठन्त आपो ये शाक्वरा ऋषभा ये स्वराजस्ते अर्षन्तु ते वर्षन्तु ते कृण्वन्त्विषमूर्जे रायस्पोषं दद्विदंधेति समन्वायन्तीति वा [1]समुद्रं वः प्रहिणोमीति वा ॥ १६ ॥

आस्तावे - स्तुतिसमीपदेश इति ॥ १६ ॥

९१५. सर्वैर्वा ॥ १७ ॥

सर्वैर्वा पूर्वोक्तै· मन्त्रै. निनयेत्, न विकल्पितैरित्यर्थः ॥

९१६. अष्ठीवतोरवका उपोहेरन् ॥ १८ ॥

यथा स्वं +अष्ठीवतोः कटिप्रदेशयो. अवका उपोहेरन् वाससोऽभ्यन्तर इति ॥ १८ ॥

९१७. छदिषि वर्षकामोऽभ्यासयेदिति शाण्डिल्यः ॥ १९ ॥

अवका इत्यनुवर्तते, निदध्यादित्यर्थ. ॥ १९ ॥

९१८ गोष्ठे पशुकामः ॥ २० ॥

९१९. सभायां यशस्कामः ॥ २१ ॥

९२०. श्मशानेऽभिचरन् ॥ २२ ॥

स्पष्टानि ॥ २० ॥ २१ ॥ २२ ॥

इति प्रथमः खण्डः

---

*इद, सूत्रत्रयात्मकं लाटचायने ।

+अष्ठीवतोः - जानुभ्यामुपरि इत्यग्निस्वामी ।

1. ला-४-१-८ ।

अथ द्वितीयः खण्डः

९२१. वारवन्तीयस्तोत्रे धेनूः संवाशयेयुः दक्षिणतः कृत्वोत्तरतो वत्सान् ॥ १ ॥

षष्ठेऽहनि वारवन्तीय पृष्ठ, तत्स्तुतिकाले धेनूः संवाशयेयु । कथमित्याह - दक्षिणतो बहिर्वेदि धेनूः कृत्वा, तासा, सदसो बहिर्वेद्युत्तरतो वत्सान् कृत्वेति । वत्सैः पृथक्कृताना धेनूना यथा शब्दो जायते तथा कार्यमिति ॥ १ ॥

९२२ पूर्वेण सदस संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीरुत्सर्जेयुः ॥ २ ॥

सदस पुरस्तात् धेनूर्वत्साश्च ससृज्य पश्चिमेन आग्नीध्रीयमुदीची धेनूरुत्सर्जयेयुरिति ॥ २ ॥

९२३. वाचयित्वा यजमान गोनामभिरनुमन्त्रयेत इन्द्रे काम्ये चन्द्रे,ज्योते, इडे रन्ते जुष्टे सुनरि मयि वो रायः श्रयन्तामिड एहादित एहि जुष्टे जुष्टन्ते नर्मेयमुपहूता उपहव वोऽशीयेति ॥ ३ ॥

गोनामभि धेनूरनुमन्त्रयेतेति ॥ ३ ॥

९२४. सर्वाभिः इति वा ॥ ४ ॥

९२५. उभाभ्या वा । ५ ॥

स्पष्टे ॥ ४ ॥ ५ ॥

९२६ अद्भिश्चेदुपाकुर्युस्ता निनयेदास्तावे, आपोहिष्ठीयाभिः ॥ ६ ॥

यद्यध्वर्यवोऽद्भिः स्तोत्रमुपाकुर्युः तदा स्तोत्रसमाप्तौ स्तुतिदेशे ता अपो निनयेदिति ॥ ६ ॥

९२७ षष्ठेऽहनि संस्थितेऽबहुवादिनः स्युः ॥ ७ ॥

अबहुवादिन इति बहुभाषण न कुर्युरिति ॥ ७ ॥

९२८. नचाधीयीरन्नोत्तरस्याह्न उपाकरणात् ॥ ८ ॥

उत्तरस्याह्न उपाकरणात्पूर्वं स्वाध्यायाध्ययनमपि न कुर्युरिति । वाग्देव्या श्रमापनोदनार्थमिति ॥ ८ ॥

९२९. सर्पिर्मधुभ्यां ऋत्विजोभोजयेत् अहीनेष्वन्यतरेण वा॥ ९ ॥

षष्ठेह्नि संस्थिते सर्पिर्मधुभ्या व्यञ्जनभूताभ्यां ऋत्विजो भोजयेदन्यतरेण वा ॥ ९ ॥

९३०. सर्पिषैव तृतीयसवने सत्रेषु ॥ १० ॥

सत्रेषु सर्पिषैव भोजयेत् निषिद्ध मध्वशनं दीक्षितानामिति भाव । अत्र ब्राह्मण - [1]न बहुत्रदेवान्यं पृच्छेत्रान्यस्मै प्रब्रूयान्मधुनाऽऽशयेत् घृत येति ॥ १० ॥

९३१. एतस्यान्यतरस्मिन् त्र्यहेऽतिग्राह्याणां भक्षयेयुः स्तुत्वा पृष्ठेन ॥ ११ ॥

एतस्य–षडहस्यान्यतरस्मिन् - पूर्वस्मिन् त्र्यहे-उत्तरस्मिंस्त्र्यहे वा, पृष्ठेन स्तुत्वा*ऽतिग्राह्यभक्षणमिति ॥ ११ ॥

९३२. विषुवन्महाव्रतयोश्च ॥ १२ ॥

विषुवति महाव्रते च पृष्ठेन स्तुत्वा भक्षयेयुरिति ॥ १२ ॥

अथ भक्षणस्य मन्त्र कालश्चाह—

९३३. **त्रिष्टुप्छन्दसा पूर्वं चमसेभ्यः ॥ १३ ॥

गतम् ॥ १३ ॥

---

*ग्रहा.-अतिरिक्ताः प्रकृतेभ्य , गृह्यन्ते इति अतिग्राह्याः ॥

**एतत् सूत्रं द्विवा निर्दिष्टं लाट्यायने ।

1. ता-ब्रा-13-12-14,15 ।

९३४. अन्यत्र चैतस्मिन् काले यानाहरेयुः ॥ १४ ॥

अन्येष्वप्यह सु एतस्मिन् पृष्ठतस्तुत्यनन्तरकाले यान् ग्रहानाहरेयु तानपि त्रिष्टुप्छन्दसा भक्षयेदिति ॥ १४ ॥

९३५ सह धर्मैः सर्वत्र पृष्ठ्यः स्यात् ॥ १५ ॥

न केवल गवामयने, यत्र पृष्ठ्यो भवति तत्र सर्वत्र यथोक्तै धर्मै अन्वितो भवेत् पृष्ठ्य इति ॥ १५ ॥

९३६ दशमव्रते च ॥ १६ ॥

तथा दशरात्रस्य दशममह अविवाक्य च महाव्रतश्च सर्वत्र यथास्व वक्ष्यमाणे धर्मे अन्विते स्याता, न केवल गवामयन इति ॥ १६ ॥

९३७ अभीवर्तस्तोत्रीयानाभिप्लविकान् पृष्ठ्ये भक्षयेत् ब्राह्मणाच्छंसिना कालेयचोऽच्छावाकेन सर्वत्र यथा पवमाने स्याताम् ॥ १७ ॥

यदा पृष्ठ्ये षडहे माध्यन्दिने पवमाने कल्पकारोक्ते अभिवर्तकालेये स्याता, तदानीमभीवर्तस्तोत्रीयानाभिप्लवे कृतान् "[1]तवोदस्म मृतीवह" इत्यादीन् षट् प्रगाथान् क्रमेणैकैक पृष्ठ्ये भक्षयेत् । तत्र ब्राह्मणाच्छंसिनाऽभीवर्तस्य भक्षयेत्, कालेयस्याच्छावाकेन । तत्र प्रथमद्वितीययोरह्नोर्योस्तयो ब्रह्मसाम्नोरभीवर्तस्य च समानस्तोत्रीयत्वात्पृथगनुशसनम् । तृतीयादिष्वेव पृथगनुशसनम् । तद्यथा [2]वयघत्वा सुतावन्त इति । एव शस्त्वा आत्वासहस्रमाशतमित्यनुशसयेदिति ॥ १७ ॥

1 ऋ-वे ८-५८ १ ता-ब्रा-११ ४ ३ । 2. ता-ब्रा-१२ ४ ३ ।

९३८ [1]सर्वत्रेन्द्रक्रतु ब्राह्मणाच्छंसिनोर्ध्वं विषुवतः प्रागतिरात्रात् १८

विषुवत ऊर्ध्वं सर्वेषु अहःसु प्रागुदयनीयातिरात्रादस्तूयमानमपि इन्द्रक्रतुमस्माभरेति प्रगाथ ब्राह्मणाच्छंसिनाऽनुशंसयेदिति ॥ १८ ॥

इति द्वितीय खण्ड

अथ तृतीयः खण्डः

९३९. विश्वजिति वैराजेधर्मान् कुर्यात् ॥ १ ॥

सर्वपृष्ठो विश्वजित्, तत्र वैराजे पृष्ठे अग्निमन्थनादि धर्मान् कुर्यात् । ननु च, षडहप्रयुक्ताधर्मा कथ विश्वजिति स्यु ? उच्यते—एकत्र क्रतौ षण्णा पृष्ठाना सन्निपात [2]होतुः पृष्ठस्थान प्रयोगश्च धर्मनिमित्त इति मन्यत इति ॥ १ ॥

९४०. इतरेष्वपि पृष्ठेष्वा[3]चार्यमतिः ॥ २ ॥

पृष्ठसन्निपात एव धर्मनिमित्त, न पृष्ठस्थाने प्रयोग । तेन विश्वजिति रथन्तरादिष्वपि तत्तद्धर्मा स्यु । एतेन सर्वपृष्ठोऽप्तोर्यामो व्याख्यात इति ॥ २ ॥

अथ दशरात्रस्य सप्तमेऽहन्यार्भवे पवमाने गायत्र्या गायत्रं मौक्षमिति सामद्वय ब्राह्मणविहितम् । अत्र शाखान्तरविहित सामद्वय आहृत्य समुच्चिन्वन् स्तोमातिरेकप्रसङ्गात्त्रीणि सामान्येकर्चीनि करोति—

९४१. सप्तमेऽहन्यग्नेरर्कोऽद्वयद्वैड च सोमसाम मौक्षस्य पूर्वयोः ॥ ३ ॥

---

1 ता ब्रा ४ ७ २ । 2 ङ हेतु । 3 ङ इत्याचार्यमतिमिति ।

अन्त्यस्तोत्रीयायां मौक्षंकृत्वा ततः पूर्वयोः इतरत्सामद्वय-मित्येवं सामतृचं कुर्यात् । गायत्रंतु तृचे कुर्यादितिभावः ॥ ३ ॥ प्रकारान्तरमाह—

९४२* मौक्षसोमसाम सामनी ॥ ४ ॥

अत्र गायत्रमौक्षाभ्यामेव स्तोमसंपत्तेः ब्राह्मणनैरपेक्ष्याच्च शाखान्तरोपसंहारो वैकल्पिक उक्त इत्याहुः । तथा निदान-कारः** सप्तमेऽहन्यग्नेरर्कः कृताकृतो भवति, अब्राह्मणविहित-त्वादिति । सूत्रद्वयमपि [1]द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेत्य-स्यापवादः ॥ ४ ॥

९४३. साकमश्वेडानां संक्षारौ व्यतिहरन्त्येके ॥ ५ ॥

अथाष्टमनवमयोरह्नोः माध्यन्दिने पवमाने साकमश्वं इडानां संक्षारश्च इति क्रमेण सामद्वयं [2]विहितम् । तयोर्व्यति-हारमेके शाखिन कुर्वत इत्यर्थः ॥ ५ ॥

९४४. सुरूपकौत्से एकर्चयोरेके ॥ ६ ॥

*'सोमसामनी गायत्रस्योत्तरयोः अग्नेरर्कस्तिसृष्विति वा' अथवा गायत्रमेकर्चे कृत्वा तस्योत्तरयोः मौक्षसोमसामनीकृत्वा तस्मिन्नेव तृचे अग्नेरर्कंस्तिसृषु कुर्यात् । अरण्येगेयमिदमपवित्र । इत्याग्नस्वामिभाष्यम् ।

**यथा वैनदग्नेरर्कः सप्तमेऽहनिकृताकृतः इति समापद्यन्ते दशमेऽहनि सामानि, इति निदानसूत्रे पटल-९-ख-५ ।

1. ब्रा-१६-३-२६ । 2. ता-ब्रा-१४-९-१७; ता-ब्रा-१५-३-१४ ।

*अष्टमेऽहन्यार्भवे पवमाने षोडशसामानि विहितानि । तेषु स्तोमातिरेकप्रसङ्गादवश्यं द्वावेकर्चौ कार्यौ । तत्र द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेति वचनात् ऐपिरत्नैतयोः एकर्चाकरणमिति स्वपक्ष', पक्षान्तरस्तु स्वरूपक्रौञ्चयोरेकर्चाकरणमिति॥६॥ अथ नवमेऽहन्याह—

९४५. नवमस्य ज्यौतिष्टोमः पर्यासस्साप्तमिक इत्येके ॥ ७ ॥

नवमस्य बहिष्पवमाने तृच उत्तमो भवतीति [1]ब्राह्मणम् । कः पुनरसौ तृच इति न ज्ञायते, तत्र अध्ययनाभावात् । तत्रेदमाह—ज्योतिष्टोमसंबन्धी पर्यास स्यात्, सप्तमाहस्संबन्धीवेति । पर्यासशब्दोत्र उत्तमवचनः उत्तमस्तृच इत्यर्थः ॥ ७ ॥

अत्र ब्राह्मणे माध्यन्दिने पवमाने गायत्र्या सामाष्टक विधाय [2]परीतोषिञ्चतासुतमिति बृहत्यां एकादश सामानि विहितानि, तद्यथा; पृष्ठ, कौल्मलबर्हिष, अर्कपुष्पं, दैर्घश्रवस, वैयश्वं, आभीशवं इति षट् ग्रामेगेयानि । देवस्थान सकृति, भर्गीयश इति चत्वार्यरण्ये गेयानि । [3]ततो वासिष्ठमित्येकादश । [4]असावि सोमो अरुषो वृषाहरिरिति जगत्यां सामद्वयं विहित । दीर्घतमसोर्कः सामराज इति [5]सामद्वय विहितम् । तत्र सर्वेषां

*सूत्रं-६ ह.-पाठे— अष्टमेहन्यार्भवे गायत्र्यां सुरूपं, अनुष्टुभि क्रौञ्चं ब्राह्मणे विहित (ता-ब्रा-१४-११-१०,२९) । त एव एकर्चस्यातां, न त्वैपिरत्नैताविति । केचिद्द्विपर्यास एव । स्वपक्ष द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेति वचनादिति ॥

1. ता-ब्रा-१५-१-१२ । 2 ता-ब्रा-१५-३-२ । 3. ता-१५-३-१८ to ३३ । 4 ता-ब्रा-१५-३-३४ । 5. ता-ब्रा-१५-३-३४,३५ ।

इति षष्ठस्याह्नोरूपं प्रथममारभेत्, पञ्चमस्येत्येवं नवर्चे तु ऋचः प्रतिलोमाः स्युः । [1]उषास्मैगायतानर इत्युपक्रम्य अस्यप्रत्नामनुद्युतमेवमन्तम् । कुत एतत्? अनुरूपैः प्रत्यवयन्ति, यथा[2] अभ्यारुह्य प्रत्यवरोहेत्तादृक् तदिति ॥ १५ ॥

९५४. प्रातिलोम्यविधानादिति सर्वत्र तृचा इति धानञ्जय्यः ॥१६॥

नवर्चेऽपि तृचा एव प्रतिलोमाः स्युः । न पुनः ऋच इत्यर्थः ॥ १६ ॥

९५५. यथाधीतं नवर्चमिति शाण्डिल्यायनः ॥ १७ ॥

नवर्चे[3]नैव प्रातिलोम्यमिति मतान्तरं । कुतः? नवर्चो भवतीत्येतावन्मात्र श्रुतेरिति ॥ १७ ॥

९५६. सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्यः ॥ १८ ॥

अनुरूपेषु नवर्चेषु ऋच एव प्रतिलोमाः स्युः, नैपुनस्तृचा इत्यर्थं[4] । तेन पवस्वेन्दो वृषासुत इति द्वितीयस्याह्नोरूपं प्रथममाहृत्य प्रतिलोमाः ऋचः कुर्यात्, एवं क्रमेण उत्तरेषामपीति । अत्र ब्राह्मण - [5]प्रजापति वा एतेनाह्ना परियेविषतीत्यादि । तस्यायमर्थः-अस्मिन्नहनि ऋत्विजां कर्तव्यस्य विस्मृतौ न केनचिद्विवाच्यं, तथा सति विस्मरणदोषोद्भावनेन प्रजापतेर्भोजन विघ्नः कृतः स्यादिति । एवं दोषमुक्त्वा पुनरपि "[6]तद्युव्यवद्यमित्यादि । तस्यायमर्थः. यथा अतिथेर्भोजनार्थमन्नमपयेनाह्रीयमाणं

1. ऋ-8-2 29 । 2. ता-ब्रा-15.7.6 । 3 इ नास्त्येव ।
4. इ पुस्तके इत्यर्थ इत्यनन्तरमेव तथा च ब्राह्मणमित्यादि ।
5. ता-ब्रा-15-7-3 । 6 ता-ब्रा-15-7.4 ।

प्रतिषेधति, एवं कर्तव्यस्य विस्मृतौ विवेचनेन प्रतिबोधनं कार्यमिति ॥ १८ ॥

तत्र च [1]यावत्यनुष्टुप्तावतीं वाचं संपाद्य विब्रूयुरिति ब्राह्मणं, तद्व्याचष्टे—

९५७. अप्रतिभायेतस्मिन्नहनि अनुष्टुम्मात्रां कृत्वाऽवक्षीरन् ॥१९॥

कर्तव्यस्य विस्मृतिरप्रतिभा, तामनुष्टुप्परिमितां वाचं कृत्वा विब्रूयुः, अप्रतिभां निरस्य, कर्तव्यं स्मारयेयुरित्यर्थः। तत्र मन्त्रस्याप्रतिभाने, यदिमन्त्रोऽनुष्टुप्स्यात् तदा तं कृत्स्नं मन्त्रं पठेयुः प्रतिबोधनाय ॥ १९ ॥

अथ यदि छन्दोन्तरं तत्र प्रकारमाह—

९५८. *ज्यायसि छन्दसि लुंपेयुरक्षराणि ॥ २० ॥

अनुष्टुभो ज्यायसिछन्दसि, [2]त्वामिद्धिहवामहे इत्यादौ अप्रतिभाने द्वात्रिंशदक्षरं मन्त्रे पठित्वा विरमेयुः। ततः ऊर्ध्व-मप्यप्रतिभाने शिष्टं पठित्वा पुनरपि तं मन्त्रं अनुष्टुम्मात्रमभ्य-स्येयुरिति ॥ २० ॥

९५९. कनीयस्यभ्यस्येयुः ॥ २१ ॥

अनुष्टुभः कनीयसिछन्दसि गायत्र्यादौ कृत्स्नं पठित्वा पुनरपि गायत्र्या पादमपेक्षितमभ्यस्येयुः अनुष्टुप्त्वार्थमिति ॥ २१

९६०. **यर्चैव विब्रूयुरिति धानञ्जय्यो[3]यामनुष्टुभिनिहि ब्राह्मणं भवतीति ॥ २२ ॥

*९५८, ९५९ एकीकृत लाटयायने।

**इदं सूत्रं लाट्यायने नास्ति।

1. ता ब्रा-15-7-5। 2. ता ब्रा-११-९-१। 3. ता-ब्रा-१० ३-१२।

वाचैव विवचन कार्यम् । नानुष्टुबादरणीयेति मतान्तरम् तथाऽऽश्वलायनोप्याह[1]–+संशये बहिर्वेदि स्वाध्यायप्रयोग इति । कर्मविस्मरणे अनुष्टुभाश्लोकेन विवाच्यम् । तथा—

'पृष्ठहोमस्त्वया कार्यस्तदनन्तरमृग्जप' ।

ततश्चस्तोमयोग. स्यात्ततस्तोत्रं ततोजपः ॥ इति ॥ २२ ॥

९६१.++अग्निष्टोमसाम्ना स्तुत्वा प्राक्पत्नीसंयाजेभ्यो पदेभिः प्रसृते पराद्धर्यं व्रजितं स्यात् । तद्गत्वा प्रत्यावृज्य मनसानुत्साहे हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयात् [2]उपसृजन्धरुणं मात्रे मातरं धरुणोदयन् रायस्पोषमिषमूर्जमस्मासु उदीधरन् स्वाहेति पूर्वां स्वाहाकारेणोत्तराम् ॥ २३ ॥

प्रसृत नाम बहिर्वेदिसञ्चारप्रदेश. तत्र पदेभिर्यजमानै. पराद्धर्यं परखण्ड–अर्धोत्तर प्रव्रजित–गत भवेत्तावन्तं प्रदेशं गत्वा प्रत्यावृज्य जुहुयादित्यन्वयः । मनसाऽनुत्साह इति गमनाशक्तौ मनसैव गमनागमन भावयेत् इयन्तं प्रदेशं गतोऽस्म्यागतोऽस्मीति चेति ॥ २३ ॥

इति तृतीय. खण्डः

---

+यदि कस्यचित् कर्तुः स्वपदार्थकरणे अज्ञान, संशयविपर्ययाः स्युः तदा बहिर्वेदि स्थित्वा तस्य अज्ञानाद्यपनयार्थं अध्ययनेन अन्येन वा स्वाध्यायप्रयोग. कर्तव्य इति नारायणवृत्तिः । [मुद्रितपुस्तके पृष्ठ ३५३]

++एतत् सूत्र लाट्यायने द्विधा प्रणीतम् ।

---

1. आश्व-श्रौत-८-१२-११ । 2. ऐ-ब्रा-५-२२-१५ ।

अथ चतुर्थः खण्डः

९६२. आहवनीयं ×गत्वाऽयं सहोहा इति त्रिरुद्गाता गायेत् ॥ १॥
होमानन्तरं आहवनीयमौत्तरवेदिकमग्निं गत्वा गायेदिति ॥

९६३. निधनमितरावनुपेयाताम् ॥ २ ॥
स्पष्टम् ॥ २ ॥

९६४. *अभिदक्षिणमावृत्य पूर्वया द्वारा सदः प्रविशेयुः ॥ ३ ॥
गानङ्कृत्वा प्रदक्षिणमावृत्य प्रविशेयुरिति ॥ ३ ॥

९६५. **यद्यऽध्वर्युरुपाकुर्यादथमानसेन स्तुवीरन् ॥ ४ ॥
स्पष्टम् ॥ ४ ॥

९६६. आयंगौः पृश्निरक्रमीदिति गायत्रेण ॥ ५ ॥
स्पष्टमिति ॥ ५ ॥

९६७. पृथक् स्तोत्रीयाभ्यो हिंकारम् ॥ ६ ॥
प्रतिस्तोत्रीयमुपक्रमे हिंकृत्य गायेत् इति ॥ ६ ॥

९६८. त्रिकेणस्तोमेनाऽस्तोमयोगाऽयजमानवाचनाऽकुशाविधानेन ॥ ७ ॥

स्तोमयोगरहितेन यजमानवाचनरहितेन कुशाविधानरहितेन च त्रिकेणस्तोमेन स्तुवीरन्निति ॥ ७ ॥

---

×'आहवनीयं गत्वा पश्चात्तिष्ठन्तः' इति लाट्यायने अधिकम् ।

*एतत् सूत्रस्थाने–"यजमान सञ्चरेण गत्वा पूर्वया द्वारा सदः प्रविशेयुः" इति लाट्यायने ।

**अत्र सूत्रचतुष्टयं लाट्यायने एकं सूत्रम् ।

९६९. प्रतिहारवेलायां प्रतिहर्ताऽपान्यात् ॥ ८ ॥

अपान उच्छ्वास इति ॥ ८ ॥

९७०. उत्तमां प्रस्तुत्यैवेति होतारमीक्षेत ॥ ९ ॥

स्पष्टमिति ॥ ९ ॥

९७१. *सर्वमेतस्मिन् स्तोत्रे मनसाकुर्युः समीक्षणेन[1] प्रस्तावादि भक्तीनामुपक्रमश्च समाप्तिश्च विज्ञापयन्तः स्तुवीरन् ॥ १० ॥

स्पष्टम् ॥ १० ॥

९७२. [2]यदाऽध्वर्युः भक्षं प्रयच्छन् मन्येत तस्य मनसोपहूय कस्त्वा कमक्षयामीति भक्षयेयुः ॥ ११ ॥

यदाऽध्वर्युं समीक्षणेन भक्षप्रदान कुर्वन् मन्यते तस्य मनसा मन्त्रेण भक्षयेयुरिति ॥ ११ ।

९७३. [3]ब्रह्मोद्यं वदन्तीति ॥ १२ ॥

श्रुत्युपादानमेतद्व्याख्यानार्थमिति ॥ १२ ॥

तद्व्याचष्टे—

९७४. गायत्रीं त्रिर्ब्रूयुरिति धानञ्जय्यः ॥ १३ ॥

तत्सवितुर्वरेण्यमित्येषा गायत्री, सा हि साक्षात् ब्रह्मण प्रतिपादिका स्वयञ्च बहुवेदाना ह्यसौ माता, तस्या वचन ब्रह्मोद्यमिति धानञ्जय्य ॥ १३ ॥

*यत्किञ्चिदस्मिस्तोत्रे पुरस्ताज्जपादि तत्सर्व मानस कुर्युः । समीक्षणेन विज्ञापयन्त, ब्रह्मस्तोष्याम प्रशास्तरित्यत आरभ्य समीक्षणमात्रेण विज्ञापन कुर्वन्त सर्वप्रैषेषु प्रज्ञापन मनसैव स्यादितीत्यग्निस्वामि भाष्यम् ॥

1 क पाठे 'समीक्षणेन विज्ञापयन्त' इत्येव । 2 लाट्यायने-यमध्वर्यु ।
3. ला श्रौ-4-9 12 ।

९७५  चतुर्होतारं अभिप्रैत्यैतदिति गौतम ॥ १४ ॥

[1]चित्ति स्रुक् चित्तमाज्यमिति पश्चानुवाकाश्चतुर्होतारोऽध्वर्युभिरधीता, तेषां आद्य होता व्याचष्टे । स्तुत्यनुशसनत्वेन तस्यवचन ब्रह्मोद्यमिति गौतमः । एतदेव देवाना परम गुह्य ब्रह्म यच्चतुर्होतार इति [2]तैत्तरीयकमिति ॥ १४ ॥

९७६.  तर्कं वा कथयेयुः यथाऽश्वविरात्र इति शाण्डिल्य ॥ १५ ॥

यथाऽश्वमेधे वादिप्रतिवादिरूपेक्षण तर्कयो कथन (तर्क प्रश्न प्रतिवचने कुर्वन्ति) एवमत्रापि कुर्युं तत् ब्रह्मोद्यमिति ॥ १५ ॥

९७७.  प्रजापतिं परिवदन्ति ॥ १६ ॥

दुर्लभस्त्व प्रजापते दुराराधश्च, त्वहि पुरुषोत्तमोपि सन् [3]स्वमर्थान् मायया छादयसि । तथापि त्वां दशमेनाह्ना वय गृहीतवन्त, ववेदानी गमिष्यसीत्येव परिवादस्तथा च ब्राह्मण, [4]आप्त्वैवैन तद्व्याचक्षते तावदापामैनमिति । यथा महावने मत्तगज उपायेन गृहीत्वा सन्तुष्टाः परिवदन्ति, क्वेदानीं दुर्ग्रहो गूढचारी दुश्चरित्रस्त्व गमिष्यसीति परिवदन्ति, तादृशमेतदिति ॥ १६ ॥

९७८.  पार्थैः कर्मभिरित्येके न स्वधीमहे ॥ १७ ॥

---

1 ङ पुस्तके भाष्य–अत्र तैत्तरीयक,चतुर्होतृन् होता व्याचष्टे स्तुतमनुशासति शस्त्रं (तं ब्रा-2 2 7 3) इति । तथा " एतद्वै देवानां परं गुह्यं ब्रह्म यच्चतुर्होतार " इति च । तेन चतुर्होतृन चित्तिस्रुक चित्तमित्यादीन् पश्चानुवाकान मनस्यनुशसन रूपामपि प्रेत्य एतद्वाक्य ब्रह्मोद्य वदन्तीति, इति गौतमस्य पक्ष इति ॥ 2 तै ब्रा 2 2 1-4 ।

3 ङ स्वमात्मान छादयसीति । 4 ता ब्रा–4 9 14 ।

## अथ दशमः पटलः

### प्रथमः खण्डः

अथ महाव्रत प्रस्तौति—

९८९ महाव्रतस्य पृष्ठ उपाकृते युक्त्वा स्तोमं परिमादो गायेदिति माण्डितायनः ॥ १ ॥

गायत्र, बृहद्रथन्तरे, भद्र, राजनमिति सामपञ्चक सहस्य पृष्ठस्तुतिसाधन महाव्रतमित्युच्यते । तद्योगात् क्रतुरपि । प्राणेन पुरस्तादाहवनीयमुपतिष्ठन्त इत्यादि ब्राह्मणेन त्रयोदश परिमादो महाव्रतस्तोत्राङ्गतया *क्लृप्ता, तासां गानकालमाह सूत्रकार । स्तोमयोगानन्तर गायेत् परिमाद इति, स्तोत्राङ्गतया प्रयोगकाले [1]महाव्रतस्य पक्षिणो लोमनखस्थानीयाना +साम्नां नामधेयमिति ॥ १ ॥

९९० प्रतिगृह्य वृषे अयुक्त्वेति गौतमशाण्डिल्यायनौ धानञ्जय्यश्च ॥ २ ॥

उपाकरणदर्शी प्रतिगृह्य स्तोमयोगमकृत्वैव गायेदिति मतान्तरमिति ॥ २ ॥

---

*प्राणेन पुरस्तादाहवनीयमुपतिष्ठन्ते प्राणमेव तज्जयन्ति, अपानेन पश्चात् अपानमेव तज्जयन्ति, इत्यादिना मध्यस्य साम्ना गार्हपत्यमुपतिष्ठन्ते इत्यन्तेन परिमाद तत्तदुपस्थानेन तत्तत्फलप्रापकाः इति ब्राह्मणेन विशदतया निरूपितम् । (५-४-१ to १३)

+साम्ना प्राणादिसाम्नाम् ।

[1] महाव्रतस्येत्यादि ङ पुस्तके नास्ति ।

९९१. प्रागेव स्तोत्रोपाकरणादित्येके ॥ ३ ॥

पृष्ठोपाकरणात् पूर्वमेव परिमादो गायेदित्येके ॥ ३ ॥

९९२. दक्षिणेनाग्नीद्‌ध्रीयं गत्वोत्तरेणाग्निं प्राणप्रभृतिभिरुपतिष्ठेरन् तदुक्तं [1]ब्राह्मणेन ॥ ४ ॥

अग्निशब्देन चित्याग्नेरभिधानमिति ॥ ४ ॥

ब्राह्मणेनैवोपस्थान सर्वमुक्त, तत्र विशेषमाह—

९९३. सर्वाण्युद्गाता सकृत् सकृद्गायेत्त्रिधनमितरावनूपेयाताम् ॥ ५ ॥

सर्वाण्युद्गातैव गायेत् । कथ तर्हि ब्राह्मणे उपतिष्ठन्ते इति बहुवचन ? इतरयोरपि निधनवचनेऽन्वयात् बहुवचनमिति ॥ ५ ॥

९९४. अपिमध्ये निधनषु ॥ ६ ॥

अन्तर्निधनेष्वपि प्रस्तोतृप्रतिहर्तारौ उपेयातामिति ॥ ६ ॥

९९५. आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत् ॥ ७ ॥

आद्यन्तस्तोभयुक्तेषु प्राणादिसामसु प्रतिपाद स्तोभेत् । त्रिवृदादि स्तोमाभावेन प्राणादीना परिसामत्वाद्यथाऽध्ययन गाने प्राप्ने वचनमेतदिति ॥ ७ ॥

९९६. तेनैव प्रत्यावृत्य पुच्छम् ॥ ८ ॥

अथ [1]व्रतपक्षाभ्यां पक्षौ उपतिष्ठन्ते इति ब्राह्मणं तत्र प्रतिपक्षं सामद्वये प्राप्ते व्यवस्थामाह। व्रतपक्षयोर्मध्ये पूर्वेण साम्ना दक्षिणं पक्षं उत्तरेणसाम्नोत्तरं पक्षम् ॥ ९ ॥

अत्र ब्राह्मणं [2]प्रजापतेर्हृदयेनापिकक्षं उपतिष्ठन्ते इति। तत्र द्वावपिकक्षौ भवतः तत्र नियममाह—

९९८. *उत्तरमपिकक्षमुपतिष्ठेरन् ॥ १० ॥

[3]वसिष्ठस्य निहवेन चात्वालमुपतिष्ठन्ते वैश्वदेव्यामृचि भवतीति ब्रा[4]ह्मणम्। तत्र वैश्वदेवीमृचं दर्शयति—

९९९ विश्वेदेवा इति [5]वसिष्ठनिहवमूहेत् ॥ ११ ॥

ननु च ऊहेदिति वचनमनर्थकं, तस्याध्ययनसिद्धत्वात्। सत्यमेतत्, वचनोत्तरकालमूहं कुर्व इत्याहुः। अन्ये तु विस्पष्टार्थं वचनमित्याहुरिति ॥ ११ ॥

[6]सत्रस्यर्द्ध्याऽऽग्नीध्रमित्यादि ब्राह्मणं तत्रोपस्थानदेशमाह—

१०००. चात्वालमुपस्थायोत्तरेणाग्नीध्रीयं गत्वा पश्चात् तिष्ठन्तः ॥ स्पष्टम् ॥ १२ ॥

१००१ तत एव प्रत्यङ्मुखा इति धानञ्जय्यः ॥ १३ ॥

तत एव–चात्वालदेश एव स्थित्वेत्यर्थः ॥ १३ ॥

तस्यैवाऽस्तमितोनिधनमुपयन्तीति [7]ब्राह्मणं, किं पुनस्तन्निधनमत आह—

*दक्षिणे अपिकक्षे उपस्थानाभाव इति ज्ञायते।

1 ता-ब्रा-5-4-3। 2 ता-ब्रा-5-4-4। 3 ता-ब्रा-5-4-5।
4. ता-ब्रा-5-4-6। 5 द्र वसिष्ठस्य निहवम्। 6 ता-ब्रा-5-4-7।
7. ता-ब्रा-5-4-8।

१००२. **तस्योत्तमन्निधनमात[×]मितोऽप्येयुः ॥ १४ ॥**

तस्य सतस्यर्द्धेरुत्तममेव निधनं स्वज्योतिरित्येतत्, यावत् प्राणस्य संयमो भवति तावन्तंकालमनुच्छ्वसन्तः आवर्तयेयुरिति, सुवज्योतिस्सुवज्योतिरित्येवं पुनः पुनरिति ॥ १४ ॥

श्लोकानुश्लोकाभ्यां हविर्द्धाने [1]इतिब्राह्मणं तत्र तयोर्देशभेदमाह—

१००३. **पूर्वेण हविर्द्धाने पुरस्तात्प्रत्यङ्मुखाः पश्चादितरेण ॥ १५॥**

पूर्वेण श्लोकेन हविर्द्धानयोः पुरस्तात् प्रत्यङ्मुखाः स्थित्वा इतरेणानुश्लोकेन हविर्द्धानयोः पश्चात् स्थित्वेत्यर्थः॥१५॥

यामेन मार्जालीयमिति [2]ब्राह्मणम् । किं पुनर्यामं कथं वोपस्थानं तदुभयमाह—

१००४. **तत एवेक्षमाणाः मार्जालीयं नाकेसुपर्णमिति यत् द्वन्द्वेषु ॥ १६ ॥**

हविर्द्धानएव स्थित्वा नाकेसुपर्णमिति [•]द्वन्द्वेषु सामसु यत् पठितं यामं तेनोपस्थानमिति ॥ १६ ॥

[3]आयुर्नवस्तोभाभ्यां सद इति ब्राह्मण तस्य[4] देशमाह—

१००५. *यथा हविर्द्धाने तथा सदः ॥ १७ ॥*

---

[×]स्तंभुग्लाने इत्यस्माद्धातोः तोसुन् प्रत्यये उत्पन्नोऽयं शब्दः ।

[•]ओहोइ, इयाहाउ, ओहोहोऽ३वा नाकेसुपा इत्यादि अरण्येगेये ।

---

1. ता-ब्रा5-4-10 । 2. ता-ब्रा-5-4-11 । 3. ता-ब्रा-5-4-12 ।
4. द. प्रकारमाह ।

यथा हविर्द्धाने तथैव सदोप्युपतिष्ठेरन् । सदसः पुरस्तात् स्थित्वा पूर्वेण साम्नोपस्थानं पश्चादुत्तरेणेत्यर्थः ॥ १७ ॥

[1]ऋश्यस्य साम्ना गार्हपत्यमिति ब्राह्मणं—तस्य देशमाह—

१००६. अन्तर्वेदि प्रत्यङ्मुखा गार्हपत्यमिति धानञ्जय्यः ॥ १८ ॥

स्पष्टम् ॥ १८ ॥

१००७. तस्यैव पश्चात्तिष्ठन्त इति शाण्डिल्यः ॥ १९ ॥

तस्यैव गार्हपत्यस्य पश्चात् प्राङ्मुखास्तिष्ठन्त इत्यर्थः ॥ १९ ॥

तत्र [2]यत्परोक्षं निधनमुपेयु ह्वीतमुखं प्रतिमुञ्चेरन् । यत्प्रत्यक्षमुपयन्ति ह्वीतमुखमेवापजयन्तीति ब्राह्मणं, तस्यार्थमाह—

१००८. इन्द्र प्रभृति प्रत्यक्षनिधनमुपेयुः ॥ २० ॥

किं पुनः प्रत्यक्षमिति चेत्तदुक्तं *निदानकारेण, ह्रस्वं प्रत्यक्षं, द्राघितं परोक्षं अपिबेन्द्रेति प्रत्यक्षं, इन्द्र इति परोक्षं इत्यादि । ऋश्यास इन्द्र मुद्‌डीतीन्द्रपदप्रभृत्युपरितनानि सर्वाणि इन्द्रवाचक पदानि संबुध्यन्तानि प्रयोज्यानीति सूत्रकारस्याभिप्रायः । इन्द्रप्रभृतीति वचनात्तेनेन्द्रस्तसरपूत इति प्रथमान्तमपोह्य इन्द्रतसरपूतेति सबुध्यन्त प्रयोज्यम् । यथा ऋश्यासइन्द्र मघवन्निन्द्रेति त्रीणि संबुध्यन्तानि, तद्वदिति । पुरस्थितस्यैव हि संबोधनमिति संबुध्यन्त प्रत्यक्षमितिव्य-

*तदुक्तं निदानकारेण दृश्यं प्रत्यक्षं आशापितं परोक्षं । अपिबेन्द्रेति प्रत्यक्षं, इन्द्र इति परोक्षमिति सायण भाष्यम् ॥

1. ता-ब्रा-5-4-13 । 2. ता-ब्रा-5-4 15 ।

पदिश्यते । ह्रीतमुखमेवापजयन्तीति स्तुतिवाक्यस्यायमर्थः– प्रगल्भोहि महान्तं संबोधयितुंक्षमः, यथा शक्तस्त्वमसि राजन् जगतः परिपालन इति । अप्रगल्भस्तु स्वगृह एव परोक्षं कथयति, समर्थोयं राजेति । तेन प्रत्यक्षनिधनवचने सति, ह्रीतमुखं-लज्जायुक्तमुख कातरमधृष्टमुखं त्यक्तं भवतीत्यर्थः । सदसि प्रगल्भो भवतीति यावत् ॥ २० ॥

इति दशम पटले प्रथमः खण्डः

अथ द्वितीयः खण्डः

१००९. अथ राजानं सन्नाहयेत् ॥ १ ॥

अथोद्गाता राजानं तस्य राष्ट्रस्याधिपतिं क्षत्रियमाहूय तस्य कवचबन्ध कारयेदिति ॥ १ ॥

१०१०. तस्य द्व्यवरार्ध्यौ रथावनुयायिनौ स्याताम् ॥ २ ॥

अवरपक्षे द्वौ रथौ तस्य राज्ञो अनुयायिनौ भवत इति ॥ २ ॥

१०११. पूर्वेणदेवयजनं सन्नहेरन्नन्ये तस्मात् ॥ ३ ॥

तस्मात् राज्ञोऽन्ये तस्य सचिवाः पुरस्ताद्देवयजनस्य स्थित्वा सन्नहनं कुर्युः ॥ ३ ॥

राज्ञस्तु सन्नहनदेशं वक्ष्याम इति–

१०१२. दक्षिणेन परियायुः ॥ ४ ॥

दक्षिणेन देवयजनं राजा राजपुरुषाश्च परिगच्छेयुः ॥ ४ ॥

१०१३. पूर्वेण पत्नीशालामुद्गाता गत्वा दक्षिणवेद्यन्ते प्राचोदर्भा-नास्तीर्य तेष्वेनं प्राङ्मुखं उपवेशयेत् ॥ ५ ॥

एनं राजानं प्राङ्मुखमुपवेशयेदिति ॥ ५ ॥

१०१४. अथाऽस्मै वर्माऽभिहरेत् ॥ ६ ॥

अथाऽस्मै राज्ञे कवचमाहरेदुद्गाता सन्निहनार्थमिति ॥ ६ ॥

१०१५. अन्यंवाऽभिहरन्तमनुमन्त्रयेतोत्तिष्ठ राजन् परिवर्माऽस्यस्व-युक्तो रथो वितथो देव आरणो विशां राजा ब्रह्मण एधि-गोप्तेति ॥ ७ ॥

कृत्वेत्यध्याहार्यः । अथवा स्वयं कवचमाहरन्नन्यं पुरुष-मभिहरन्त कृत्वा राजानमुद्गाताऽभिमन्त्रयेत उत्तिष्ठ राजन् इति मन्त्रलिङ्गात् राजाभिमन्त्रणमेतत्, वर्म पर्यस्यस्वेति मन्त्रे पदान्वयः *पर्यासः परिधानं कवचं परिधेहीत्यर्थः ॥ ७ ॥

१०१६. पश्चिमेन परियाहीत्युक्त्वा तेनैव प्रत्यावृज्य उत्तर एनं वेद्यन्तेऽवस्थाप्य ब्रूयाद्धस्तघ्नं बध्नीष्वोज्ज्यमायुधं कुरुष्व त्रीनिपूनुपकल्पयस्वायस्मयानन्यमेव कक्ष चतुर्थमिति ॥ ८ ॥

पत्नीशालायाः पश्चिमेन परियाहीति राजानमादिश्योत्तर-वेद्यन्त एनमवस्थाप्य ब्रूयाद्धस्तघ्नं बध्नीष्वेत्यादि प्रेषम् । तस्य चायमर्थः, हस्तो येन त्रायते ज्याभिघातात् सः हस्तघ्नः तं हस्ते बध्नीष्व, आयुधं धनुः उज्यं - उद्गतज्यं - आततज्यं कुरुष्वे-त्यर्थः । त्रीनिपूनयस्मयानुपकल्पयस्व चतुर्थमिषुं स्वयमेव कक्ष-ताम्रमयस्मयं वा कल्पयस्वेति ॥ ८ ॥

* ८ यथा घृतवतीमध्वर्यो पसृचमास्यस्व (शत-ब्रा-१-५-२-१) इति पर्यासः ।

१०१७. प्रतिधत्स्वेति ब्रूयात् ॥ ९ ॥

धनुषि शरं प्रतिधत्स्वेति प्रेष्येदिति ॥ ९ ॥

१०१८. तं प्रतिदधानमनुमन्त्रयेत वैणावताय प्रतिधत्स्व शंकुं मापप्रोष्ठ मोतेतिपप्तत् ब्रह्मणो गुप्त्यै विधृत्यै धारयात्रेति ॥ १० ॥

वैणावतायेत्यादिमन्त्रस्यायमर्थः वीणावान्-प्रवीणः तस्य भावो वैणावतं-कौशलं, कौशलाय, शकुं-शरं प्रतिधत्स्व, न किञ्चित्प्रतियोगिनमुद्दिश्य, किन्तु केवल हस्तकौशलसम्पत्यर्थं प्रतिधस्स्वेत्यर्थः । मापप्रोष्ठमोतेतिपप्तदिति- सोयं प्रतिहितः शरः प्रमादान्मापप्रोष्ठ–मापगच्छेत्-मा गलितोभूयादित्यर्थः । किञ्च मोतेतिपप्तत्–त्वामतिलङ्घयमातिपतेत्, किन्तु ब्राह्मणानां गुप्त्यै केवलं अत्र धारयेदिति ॥ १० ॥

१०१९. संभृत्यातिष्ठेति ब्रूयात् ॥ ११ ॥

शरं संभृत्य रथयोरनुयायिनोः अन्यतरमातिष्ठेति प्रेष्यादिति । ११ ॥

१०२०. उत्तरेणाग्नीद्ध्रीयं पूर्वापरे चर्मणी विबध्नीयुः दक्षिणेन रथपथं शिष्ट्वा ॥ १२ ॥

आग्नीद्ध्रीममण्टपस्योत्तरतः चर्मणीद्वे विबध्नीयुः आकाशे यजमानपुरुषाः, पूर्वमेकं अपरञ्चैक तयोर्दक्षिणतो रथस्य सञ्चरमवशिष्य एवं कुर्युरिति ॥ १२ ॥

१०२१. *तं ब्रूयात् प्रदक्षिणं देवयजनंपरीयाःपूर्वश्चर्मागमनेषु विध्येरेकैकेनोचरोचर्यनतिपातयन्नपरस्मा इतरेयथाभिप्रेत..

*लाट्यायनेएतत्सूत्र पञ्चधा कृतम् ।

मस्येयुस्तृतीयेनविध्योदङ्ङायायास्तदाचतुर्थमिषुं यां दिशं मन्येथास्तामस्येयुः, अव ब्रह्मद्विषो जहीति गादृष्ट्वा- ऽवतिष्ठेथास्तत्र त्वा[1] विस्रंभयेयुः ॥ १३ ॥

विस्रंभयेयुरिति मन्त्रान्तः। इति शब्दो अध्याहर्तव्यः मन्त्रसमाप्तिसूचकः। मन्त्रस्यचायमर्थः—त्रि.प्रदक्षिणं देव- यजनं परितोगच्छ - परिगत्यपरिगत्यागमनं, पूर्वंचर्मंशरेणैकेन विद्धये:। यथा पूर्वविद्धस्य शरस्योपर्युत्तरशरो भवेत् तथा- विद्धये., अनतिपातयन्निति - यथा चर्मातिलङ्घ्यशरो न गच्छे- त्तथा कुर्वन्नित्यर्थ। अपरस्मै चर्मणे यथाकाममितरे राजपुरुषा- इशरानस्येयुः तृतीयेन शरेण पूर्वं चर्मविद्ध्वा उदङ्मुखो गच्छेत्, तदानीं चतुर्थमिषुं यस्यां दिशि निरसितुं मन्येथास्तां प्रति- निरस्ये', अव ब्रह्मद्विषो जहीति मन्त्रेण। तदानी गाः दृष्ट्वा तूष्णीमेव तिष्ठेयास्तत्र त्वां गावो विस्रंभयेयुः-विश्वस्ताः सुखञ्च- रेयुः, धनुष्पाणिं त्वां दृष्ट्वा तासामुद्वेगो माभूदित्यर्थः ॥ १३ ॥

१०२२. ब्राह्मणमुक्त्वेमं हिंकारवेलायां कारयेयुः[2] ॥ १४ ॥

दशम पटले द्वितीयः खण्डः

अथ तृतीयः खण्डः

१०२३. भूमिदुन्दुभिमाव्रजेत् ॥ १ ॥

×उत्तरकाले स्तुत्युपक्रमे हिंकारवेलायां इमं राजानं

---

× तृतीयखण्डप्रथमसूत्रस्य व्याख्यायाः पूर्वसूत्रेणान्वयः। एवमेव लाट्यायनेऽपि व्याख्यातम् ॥ किञ्च भूमिदुन्दुभिमाव्रजे- दित्यत्रैव खण्डसमाप्तिः।

1. इ. विस्रंभयेयु.। 2. इ. वारयेत्

प्रदक्षिण देवयजन परीया इत्यादि प्रेपार्थं [1]कश्चिद् ब्राह्मण-
मादिश्य भूमिदुन्दुभिप्रति उद्गाता गच्छेदिति ॥ १ ॥

कः पुनः दुन्दुभिः तमाह—

१०२४. पश्चादाग्नीध्रीयस्यार्द्धमन्तर्वेदिश्वभ्रस्य स्यात् अर्धं बहिर्वेदि ॥ २ ॥

आग्नीध्रीयस्य पश्चात् श्वभ्रं निखनेत् तस्यार्द्धमन्तर्वेदि स्यात्, अर्द्धं बहिर्वेदीति ॥ २ ॥

१०२५. आर्षभेणोत्तरलोम्ना चर्मणा पिहितः स्यात् ॥ ३ ॥

ऋषभचर्मणोत्तरलोम्ना सोय श्वभ्र पिहित स्यात् । सः भूमिदुन्दुभिरित्युच्यत इति ॥ ३ ॥

१०२६. *त्वं वागसि, ये नस्सत्रे अनिन्दिषुः दीक्षायां श्रान्त आसिते । अराद्धि तेभ्यो दुन्दुभे राद्धिमस्मभ्यमावदेति ॥ परावदद्विषन्तंघोरां वाचं परावद । अथास्मभ्य सुमिष्यां वाच दुन्दुभे कल्याणीं कीर्तिमावदेति ॥ परावदद्विषतो वाप, दुर्हार्दो यो विपूहः अथास्मभ्य पुष्टिं राद्धि भियमावद दुन्दुभे ॥ इत्येतैः मन्त्रैः पृथगाहत्य वाल-धानेन ॥ ४ ॥

त्वं वागसीत्येक यजु, येनस्सत्र इत्यानुष्टुभ श्लोक उक्त । द्वयमप्येको मन्त्र, तयोरन्ते इति करणात् । तस्य चायमर्थ — ये न सत्रे अनिन्दिषु दीक्षायां – दीक्षादिवसेषु न किञ्चिदे-भिस्तपस्तप्तमिति । हे श्रान्ते नित्यतपस्विनि हे आसिते—

*अत्र सूत्रत्रय (१०२६, १०२७, १०२८) एक लाटचायने ।

[1] क प्रेपार्थंकारयेदिति

नित्यमासीने इति संबुद्धिः, नित्यमासीना हि भूमिः इतरास्तु दुन्दुभयो जङ्गमाः । अथवा श्रान्ता आसत इति वा पाठ । तस्य चायमर्थः, ये श्रान्ता. कर्मकर्तुमसमर्थाः, कुर्वाणान्निन्दन्तः आसत इति। हे दुन्दुभे तेभ्यो निन्दकेभ्यो अराद्धि असिद्धिमावद अस्मभ्यन्तु राद्धि सिद्धि आवदेति ॥ अथ द्वितीयो मन्त्रः परावदेत्यादि, तस्यायमर्थः--यथास्माकं शत्रुः पराभवेत्तथा तं वद, तस्य च घोरां वाचं निर्णुद । अथाऽस्मभ्यं सुमित्र्यां मैत्रगुणयुक्तां वाचं कल्याणी च कीर्ति आवदेति । अथ तृतीयोमन्त्रः परावदद्विषत इति, तस्य चायमर्थः - द्विषतो वाक्यं परावद, यो दुर्हृदयो विपूक्रुहः, यो विपुर्व्याप्तो भूत्वा, किं कुल फलिष्यतीति नास्तिकवादं वदति स विपूक्रुहः । स्पष्टः शेषः । एवमेतैः त्रिभिर्मन्त्रैः *वालधानेन-पुच्छकाण्डेन पृथक् पृथग्भूमिदुन्दुभिमाहत्यादिति ॥ ४ ॥

१०२७. अन्यं वाघ्नन्तमनुमन्त्रयेत ॥ ५ ॥

कुर्वेत्यध्याहार. । अथवा अन्यं वा पुरुष घ्नन्तं कृत्वा भूमिदुन्दुभिमुक्तैः मन्त्रै. अभिमन्त्रयेत । न स्वयं हत्यादिति ॥५॥

१०२८. अथ उपस्पृश्य यथेतं प्रत्यावृज्य पश्चात्तिष्ठन्तोऽग्निमुपतिष्ठेरन्नमस्ते गायत्राय यस्येपुरो यत्ते शिरः, नमस्ते रथन्तराय यस्तेदक्षिणतो यस्ते दक्षिणः पक्षः, नमस्ते बृहते यस्त उत्तरतो यस्त उत्तरः पक्षो, नमस्ते यज्ञायज्ञीयाय यस्ते- पश्चाद्यच्चे पुच्छं नमस्ते वामदेव्याय, यस्त आत्मा यस्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम् ॥ ६ ॥

*वालधानेन - वालाः धीयन्तेऽस्मिन्निति वालधानः पुच्छं-इत्यग्निस्वामि भाष्ये ॥

अपउपस्पृश्य यथेत प्रत्यावृज्य पश्चात्तिष्ठन्तः चित्याग्निमुपतिष्ठेरन्नमस्त इत्यादि मन्त्रैः यथालिङ्गम्। तानि तानि अङ्गानि–शिरःपक्षादीन्यङ्गानि। अत्र राजनवामदेव्ययोरात्मत्वे [1]ब्राह्मणे विकल्प ×उक्तः, तथा [2]भद्रयज्ञायज्ञीययोः पुच्छत्वे। तत्र यदा भद्रराजनाम्नी स्तुतिः, तदोपस्थानमन्त्रस्योहः कार्यः। तथा च यद्भृचा [3]अप्यधीयत इति ॥ ६ ॥

१०२९. अथ सर्वं, "समस्तेन तस्मै ते सुमोऽस्तुसुवो भूयास्म नामासि नाम भूयास्म आविरस्याविर्मां कुरु, सवितः प्रमासुव, यं मनुष्याणा भूमौ संरस्पसि तेष्वभिभूयासं श्रियं मयि धेहि" ॥ ७ ॥

सर्वं चित्याग्निं समस्तेन इत्यादिना मन्त्रेणोपतिष्ठेरन्निति ॥ ७ ॥

१०३०. उपस्थाय सदः प्रविशेयुः ॥ ८ ॥

एवंचित्याग्निमुपस्थाय सदः प्रविशेयुः महाव्रतस्तुत्यर्थम् ॥ ८ ॥

अत्र पक्षद्वयमस्ति—

१०३१. *सर्वे [4]सहत्विजः [5]महाव्रतेन स्तुवीरन्नुद्गातैव[6] सर्वेणोद्गायेत् ॥ ९ ॥

---

× वामदेव्यं महाव्रत कार्यं तस्य गायत्र शिरः बृहद्रथन्तरे पक्षौ यज्ञायज्ञीयं पुच्छ इत्यादि। राजनं महाव्रतं कार्यं एतद्वै साक्षात् अन्नं यद्राजन इत्यादि च विकल्पः ताण्ड्य ब्राह्मणे ॥

*ज-९-सूत्र नास्ति–

1. ता-ब्रा–5.2-1 to 6। 2. ता-ब्रा–5-1-12-19।
3. शांखायन-17-13-1। 4. ड सहर्त्विजः। 5. ता-ब्रा–5-6-1।
6. ता-ब्रा–5-6-6।

नित्यमासीने इति संबुद्धिः, नित्यमासीना हि भूमिः इतरास्तु-दुन्दुभयो जङ्गमाः । अथवा श्रान्ता आसत इति वा पाठः । तस्य चायमर्थः, ये श्रान्ताः कर्मकर्तुमसमर्थाः, कुर्वाणान्निन्दन्तः आसत इति । हे दुन्दुभे तेभ्यो निन्दकेभ्यो अराद्धि असिद्धिमावद अस्मभ्यन्तु राद्धिं सिद्धिं आवदेति ॥ अथ द्वितीयो मन्त्रः परावदे-त्यादि, तस्यायमर्थः–यथास्माकं शत्रुः पराभवेत्तथा तं वद, तस्य च घोरां वाचं निर्णुद । अथाऽस्मभ्यं सुमित्र्यां मैत्रगुण-युक्तां वाचं कल्याणीं च कीर्तिं आवदेति । अथ तृतीयोमन्त्रः परा-वदद्विषत इति, तस्य चायमर्थः - द्विषतो वाक्यं परावद, यो दुर्हृदयो विपूत्रुहः, यो विपुत्र्यास्तो भूत्वा, किं कुत्र फलिष्यतीति नास्तिकवादं वदति स विपूत्रुहः । स्पष्टः शेषः । एवमेतैः त्रि-भिर्मन्त्रैः *वालधानेन-पुच्छकाण्डेन पृथक् पृथग्भूमिदुन्दुभि-माहन्यादिति ॥ ४ ॥

१०२७. अन्यं वाघ्नन्तमनुमन्त्रयेत ॥ ५ ॥

छन्देत्यध्याहारः । अथवा अन्यं वा पुरुषं घ्नन्तं कृत्वा भूमिदुन्दुभिमुक्तैः मन्त्रैः अभिमन्त्रयेत । न स्वयं हन्यादिति ॥५॥

१०२८. अथ उपसृत्य यथेतं प्रत्यावृत्य पश्चाद्धिष्ण्योऽग्निमुपतिष्ठे-न्नमस्ते गायत्राय यस्यैपुरो यचे शिरः, नमस्ते रथन्तराय यस्येदक्षिणतो यस्ते दक्षिणः पक्षः, नमस्ते बृहते यस्य उत्तरतो यस्य उत्तरः पक्षो, नमस्ते यज्ञायज्ञीयाय यस्ते-पश्चाद्यत्ते पुच्छं नमस्ते वामदेव्याय, यस्त आत्मा यस्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम् ॥ ६ ॥

---

*वालधानेन - वालाः धीयन्तेऽस्मिन्निति, वालधानः पुच्छं-इत्यग्निस्वामि भाष्ये ॥

अथ उपस्पृश्य यथेतं प्रत्यावृत्य पश्चात्तिष्ठन्तः चित्याग्निमुपतिष्ठेरन्नमस्त इत्यादि मन्त्रैः यथालिङ्गम् । तानि तानि अङ्गानि–शिरःपक्षादीन्यङ्गानि । अत्र राजनवामदेव्ययोरात्मत्वे [1]ब्राह्मणे विकल्प ×उक्तः, तथा [2]भद्रयज्ञायज्ञीययोः पुच्छत्वे । तत्र यदा भद्रराजनाभ्यां स्तुतिः, तदोपस्थानमन्त्रस्योहः कार्यः । तथा च बह्वृचा [3]अप्यधीयत इति ॥ ६ ॥

१०२९. अथ सर्वे, "समस्तेन तस्मै ते सुभोस्सुभुवो भूयास्म नामासि नाम भूयास्म आविरस्याविर्माकुरु, सवितः प्रमासुव, यं मनुष्याणां भूमौ संवश्यसि तेष्वभिभूयासंश्रियं मयि धेहि" ॥ ७ ॥

सर्वे चित्याग्निं समस्तेन इत्यादिना मन्त्रेणोपतिष्ठेरन्निति ॥ ७ ॥

१०३०. उपस्थाय सदः प्रविशेयुः ॥ ८ ॥

एवंचित्याग्निमुपस्थाय सदः प्रविशेयुः महाव्रतस्तुत्यर्थम् ॥ ८ ॥

अत्र पक्षद्वयमस्ति—

१०३१. *सर्वे [4]सहर्त्विजः [5]महाव्रतेन स्तुवीरन्नुद्गातैव[6] सर्वेणोद्गायेत् ॥ ९ ॥

× वामदेव्यं महाव्रत कार्यं तस्य गायत्रं शिरः बृहद्रथन्तरे पक्षौ यज्ञायज्ञीयं पुच्छं इत्यादि । राजनं महाव्रतं कार्यं एतद्वै साक्षात् अन्नं यद्राजनं इत्यादि च विकल्पः ताण्ड्य ब्राह्मणे ॥

*ज-९-सूत्रं नास्ति–

1. ता-ब्रा–5-2-1 to 6 । 2. ता-ब्रा–5-1-12-19 ।
3. शांखायन-17-13-1 । 4. इ महर्त्विजः । 5. ता-ब्रा–5-6-1 ।
6. ता-ब्रा–5-6-6 ।

तत्र प्रथमपक्षे,उपस्थानानन्तरमेव सदः प्रविशेयुः, द्वितीयेतु पक्षे महाव्रतस्य शिरः पक्षपुच्छं यथा ब्राह्मणं [1]हविर्धाने शिरसा स्तुत्वेत्युक्तप्रकारेण पुच्छपर्यन्तं गीत्वा राजनस्तुत्यर्थं सदः प्रविशेयुरिति मन्तव्यम्। कुत एतत्? सदः प्रविष्टानां पुनः निष्क्रमणा विधानात्, शिरः प्रभृतीनाञ्च तत्रैव तत्रैव देशे गेयत्वाच्चेति ॥ ९ ॥

दशम पटले तृतीयः खण्डः

अथ चतुर्थः खण्डः

१०३२. अपरया द्वारौदुंबरीमासन्दीं मौञ्जीविवा(या)नामतिहरेयुः ॥ १

[2]मौञ्जीभिस्त्रिभिरायतनं वेष्टनं यस्यास्सा मौञ्जीविवाना, तां आसन्दी सद प्रविवेशयेयुः यजमानपुरुषा इति ॥ १ ॥

१०३३. यज्ञियस्य वृक्षस्यौदुंबरा भावे ॥ २ ॥

औदुम्बराभावे यज्ञियस्य वृक्षस्य विकारः स्यादासन्दीति ॥

१०३४. मुञ्जाभावे दार्भम् ॥ ३ ॥

मुञ्जाभावे दार्भ दर्भमयै.शुल्बैरासन्द्यां [3]वेष्टनं स्यादिति ॥

१०३५. तस्याः प्रादेशमात्राः पादाः ॥ ४ ॥

तस्याश्चत्वारः पादाः प्रादेशमात्राः स्युः ॥ ४ ॥

१०३६. अरत्निमात्राणीतराण्यङ्गानि ॥ ५ ॥

इतराण्यङ्गानि - प्रतीचीनोदीचीनफलकानि अरत्निमात्राणि स्युरिति ॥ ५ ॥

---

1. ता ब्रा–5-6-7। 2. ट मौञ्जीभिः रज्जुभिः वेष्टनं।
3. ट आसन्द्यावेष्टनम्।

१०३७. दक्षिणेनौदुंबरीं हृत्वा तस्याः उत्तरतो निदध्युः ॥ ६ ॥

सदसो मध्ये या औदुम्बरी स्थूणा तां दक्षिणेनासन्दी हृत्वा तस्याः उत्तरतो निदध्युरिति ॥ ६ ॥

१०३८. तामुत्तरेणोद्गाता गत्वा पश्चादुपविश्य भूमिस्पृशोऽस्याः पादान् कृत्वा कूर्चानधस्तादुपोह्याभिमृशेत् बृहद्रथन्तरे ते पूर्वौ पादौ, श्यैतनौधसे अपरौ, वैरूपवैराजे अनूची, शाक्वररैवते तिरश्ची इत्येतैः पृथगङ्गानि ॥ ७ ॥

अस्याः आसन्द्याः पादान् भूमिस्पृशो - भूमौ सुप्रतिष्ठितान् कृत्वा, चतुर कूर्चानासन्द्याः अधस्तादुपोह्य, तदङ्गान्यभिमृशेन्मन्त्रेण, यथालिङ्गं वैरूपवैराजे अनूची इत्यादि । अनूची-प्राचीनफलके, तिरश्ची - उदीचीनफलके इति ॥ ७ ॥

१०३९. विवयनमालभ्यर्च प्राञ्चः आताना यजुर्भिस्तिर्यञ्चः सामान्यास्तरणं [1]श्रीरुपबर्हण याको वाक्यमतिरेको वारयन्तीयं सन्धयो राजनमात्मा प्रतिष्ठापक्षायज्ञीयम् ॥ ८ ॥

मौञ्जमयविवयनमालभ्यर्चम् प्राञ्च इत्यादि मन्त्रंजपेत् । प्राञ्च आताना प्राचीनारज्जवः उदीचीनारज्जवस्तिर्यञ्च आतानाः, आस्तरणमुपबर्हणञ्च मुञ्जमयमेव[2] अतिरोहिणीति ॥ ८ ॥

१०४०. तां सुखेनोरसा बाहुभ्यामिति स्पृष्ट्वाऽऽरोहेत् ॥ ९ ॥

१०४१. वसवस्त्वा गायत्रेण छन्दसारोहन्तु तानन्वधिरोहामि राज्याय, रुद्रास्त्वा त्रैष्टुभेन छन्दसा रोहन्तु तानन्वधि-

1. ऐ-ब्रा ८-११-२; ८-१२-३ । 2. ड. अतिरोकास्थिन्द्राणीति ।

रोहामि वैराज्याय, आदित्यास्त्वा जागतेनच्छन्दसारोहन्तु तानन्वधिरोहामि स्वाराज्याय, विश्वे त्वादेवा आनुष्टुभेन [1]छन्दसारोहन्तु तानन्वधिरोहामि साम्राज्यायेति ॥ १० ॥

मुखेनोरसा बाहुभ्यामिति त्रिभिरङ्गैः स्पृष्ट्वा वसवस्त्वे-त्यादि मन्त्रैरारोहेदिति ॥ १० ॥

अथ मन्त्रविकल्पमाह—

१०४२ अपैतरेव देवता उदस्यराज्यशब्दश्चामुना त्वा छन्दसा रोहामीति वैराजपञ्चमैरिति गौतमः ॥ ११ ॥

एतैः पूर्वैरेव मन्त्रैर्दैवतपदान्यनुक्त्वाराज्यशब्दश्च व्युदस्या-मुना त्वा छन्दसा रोहामीत्येव रूपैर्वैराजपञ्चमैरारोहेत्तद्यथा, गायत्रेण त्वा छन्दसा रोहामि, त्रैष्टुभेन त्वा छन्दसा रोहामि, जागतेन त्वा छन्दसारोहामि, आनुष्टुभेन त्वा छन्दसारोहामि, वैराजेन त्वा छन्दसा रोहामीति मन्त्रपञ्चकमिति ॥ ११ ॥

१०४३. चतुर्भिरिति धानञ्जय्यः ॥ १२ ॥

१०४४. त्रिभिरिति शाण्डिल्यः ॥ १३ ॥

स्पष्टे इति ॥ १२ ॥ १३ ॥

१०४५. आरुह्य जपेत् स्योनामासदं सुषदामासदं नमस्तेऽस्तु मामा-हिंसीः ॥ १४ ॥

स्पष्टमिति ॥ १४ ॥

१०४६. तस्मिन्नारोहति कूर्चानारोहयेयुः प्रष्टीन्ब्रह्मागृहपतिः ॥ १५ ॥

तस्मिन्नुद्गातर्यारोहति सति, चतुरः कूर्चानेकैकमारोहयेयुः प्रष्टी – प्रस्तोतृप्रतिहर्तारौ, ब्रह्मा, गृहपतिश्चेति ॥ १५ ॥

---

1. ऐ ब्रा–८-१७-४, ८-१२-४ ।

१०४७. आसन्द्या व्याख्यातं द्रव्यं वाणस्य द्रव्यं वाणस्येति ॥ १६ ॥

वाणो नाम वीणाविशेषः ब्राह्मणविहितः, तस्य प्रकृतिद्रव्यमासन्द्या व्याख्यातमुदुम्बरो वा यज्ञियो वा वृक्ष इति ॥ १६ ॥

दशमपटले चतुर्थः खण्डः

इति छन्दोगसूत्रस्य दीपेधन्विविनिर्मिते ।
दशमः पटलो वृत्तस्तस्मिन् शिल्पमुदीरितम् ॥

दशमः पटलः समाप्तः

## एकादशः पटलः

### प्रथमः खण्डः

१०४८. रोहितेनाऽऽनडुहेनोत्तरलोम्ना चर्मणा पिहितः स्यात् ॥ १ ॥

पूर्वोक्तोवाणश्चर्मणाऽऽच्छादितः स्यात्, वाणमुखस्य बिलञ्चर्मणाच्छादयेदित्यर्थः ॥ १ ॥

१०४९. तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्योबद्धाः स्युः मौञ्ज्योदार्भ्यो वा ॥ २ ॥

तस्य वाणस्य पश्चाद्भागे मुखादितरस्मिन् प्रान्ते, दश छिद्राणि कृत्वा प्रत्येकं दश दश तन्तव बद्धाः स्युः, मौञ्जा वा दर्भमया वेति ॥ २ ॥

१०५०. त्रिष्विति शाण्डिल्यश्चतुस्त्रिंशन्मध्यमे त्रयस्त्रिंशतावभितः ॥ ३ ॥

त्रीण्येव छिद्राणि कृत्वा मध्यमे चतुस्त्रिंशत्तन्तूनितरयोस्त्रयस्त्रिंशताविति । एवं शततन्तुर्वाण इति ॥ ३ ॥

१०५१ पुरस्तादेकैकशस्ताः त्रेधं विभज्य भूर्भुवः स्वरित्येताभिः पृथगुत्तरोत्तर्युद्‌हेत् ॥ ४ ॥

एकैकश उद्‌हेदित्यन्वय, बन्धनात् प्रागेव ता त्रेधा सम विभज्य मध्यम भागमेकाधिक कृत्वा प्रतिवर्गं पृथक् व्याहृतिभिः प्रत्येक तन्तूनुद्‌हेत्,छिद्रेषु [1]तन्तूनासज्योर्ध्वमुद्‌ह्य बिलेबध्नीयादित्यर्थ । उत्तरोत्तरीति कोऽर्थ ? बाह्यच्छिद्रे प्रथम कुर्यात् मध्यमे द्वितीय ततोऽभ्यन्तरे तृतीयमपवर्गमिति । तेन प्रथमां व्याहृतिमुक्त्वा बाह्येच्छिद्रे तर्यास्त्रिशत् तन्तून् बध्नीयात्, प्रतितन्तुमावर्तयेदेकैकश उद्‌हेदिति वचनात् । एव मध्यमेछिद्रे द्वितीयया व्याहृत्येति । तृतीयच्छिद्रे तृतीयया व्याहृत्येति,यदा पुन दशछिद्रेषु दशादश तन्तव तदापि त्रेधा विभज्य व्याहृतिभिरुद्‌हनमिति ॥४॥

१०५२ तमभिमृशेद्दोदेवदवदावदीवदोवदोरुः पृथुस्तुगः [2]सुगन्ध कर्मः करणः करः फरस्फुरमीषाट् चामीषाही चाभिमातिहश्चाभिमातिहा च सासहिश्च सहीयांश्च सहस्वांश्च [3]सहमानाश्चोद्वयाश्च बृहद्वयाश्च सनयाश्च वृद्धवयाश्चैन्द्रीं वाच पृहतीं विश्वरूपां शतायुषीं प्रवद देववाणेति ॥ ५ ॥

त वाणमेव कृत्वा मन्त्रेणाभिमृशेदिति ॥ ५ ॥

१०५३ शिथिलांस्तन्तूनायच्छेदेभिर्नो वाणतन्तुभिः शत राद्धीरिहावरात् स्म सर्वेऽआर्ष्म जीवाज्योतिरशीमहि, इति ॥६॥

यदि तन्तव शिथिला - छिद्रा स्यु, तदा तान् सर्वान् सम [4]समाधाय पुनरायच्छेन्मन्त्रेणेति ॥ ६ ॥

---

1 ख तन्तूनासृज्य । 2. ख सुगन्ध । 3 ख सहमानश्च । 4 ख स धाय ।

१०५४. वाक् सं मनो ज्योतिः आनो भद्र इति जपित्वा वादये-
दिन्द्रणतयेषीकया वेतस शाखया च सपलाशया ॥ ६ ॥

आनोभद्र इति मन्त्रपाठ., मान इत्यपि[1] पाठ । सपलाशया वेतस शाखया इषीकया वाण वादयेत् ॥ ६ ॥

इन्द्रणतयेति पदस्य स्वयमेवार्थमाह—

१०५५. *मूलतो या स्वयं वक्रा सेन्द्रणता ॥ ८ ॥

या मूलप्रदेशे स्वयमेव वक्राभवति सेन्द्रणता इन्द्रेण, नता, दैवाक्ततेरयर्थ. ॥ ८ ॥

१०५६. प्राण्णायत्वेत्यूर्ध्वमुल्लिखेदपानायत्वेत्यवाञ्चम् ॥ ९ ॥

छिद्रप्रदेशादारभ्य यावन्मुखमूर्ध्वमुल्लिख्य वादयेत्, तथा मुखप्रदेशादारभ्यापानायत्वेत्यवाञ्चमवलिखेदिति ॥ ९ ॥

१०५७ ×व्यानायत्वा व्यानपत्स्येति त्रिस्संल्लिख्योदञ्चं वाणं
प्रोहेत्, ब्राह्मणमुखत्वेमामुल्लिखन्नास्वेति ॥ १० ॥

व्यानायत्वेति त्रिस्सलिख्येमउल्लिखन्नास्वेति कश्चित् ब्राह्मणमुखस्था तस्य हस्तयोरवरुह्य वाण प्रोहेदिति ॥ १० ॥

इति प्रथम खण्ड.

अथ द्वीतीय खण्ड

१०५८. आहतदुन्दुभीन् प्रवदन्तु वीणा इति ब्रूयात् ॥ १ ॥

*आहत—आघ्नत दुन्दुभीनिति प्रैष इति ॥ २ ॥*

---

*इद सूत्र लाट्यायने नास्ति ।

× च, व्यानायत्वेति ।

---

1. च मानइत्यपपाठ । 2 ता-ब्रा-५-६-१६ ।

१०५९. अलाबुवीणा वक्राकपिशीर्ष्ण्यौ च पूर्वस्यां द्वारि बहिस्सदसम् ॥ २ ॥

अलाबुवीणा प्रसिद्धा वक्रा नाम वीणाविशेषः । तथा कपिशीर्ष्णी च । ताः तिस्रोऽपि वीणास्सदसः पूर्वस्यांद्वारि बहिः सदसो वीणावादिनो वादयेयुरिति ॥ २ ॥

१०६०. वक्रा कपिशीर्ष्ण्यौ दुन्दुभींश्च प्रतिमन्त्रयेत,
यो वक्रायां कपिशीर्ष्ण्यां दुन्दुभौयश्च वाद्ये ।
घोषो यो महतो महांस्तेन नो राद्धिमावदेति ॥ ३ ।

आवदेत्येकवचनं वाग्देवताभिप्रायमिति ॥ ३ ॥

१०६१. महावीणापिशीलवीणे चापरस्यामन्तरिति गौतमशाण्डिल्यौ बहिरिति धानञ्जय्यः ॥ ४ ॥

अपरस्यां सदसो द्वार्यन्तर्बहिर्वा वीणाद्वयं वादयेयुः ॥ ४ ॥
तयोश्च प्रतिमन्त्रणं कार्यमित्याह—

१०६२. अलाबुवीणापिशीलवीणे च प्रतिमन्त्रयेत–
अलाबु वीपिशीली च यं मन्त्रमधिजग्मतुः ।
तेनेदमुपगायतां ते साम महयिष्यत इति ॥ ५ ॥

स्पष्टः । ५ ॥

१०६३. *पत्निमेनो +पघातून् द्वे द्वे एकैका पत्नी काण्डवीणां× पिच्छोराश्च व्यत्यासं वादयेत् ॥ ६ ॥

---

*पिछोरा–वैणवी
+घ उद्घातॄन्
× वीणा

सत्रिणां यजमानानां एकैका पत्नी, पश्चिमेनोपगातॄनासित्वा द्वे द्वे वीणे व्यत्यासं वादयेत्। प्रथमं काण्डवीणां ततः पिच्छोरां पुनरपि एवमेव सर्वा इति ॥ ६ ॥

१०६४. उपमुखं पिच्छोरां वादनेन काण्डमयीम् ॥ ७ ॥

उपमुखं स्थापयित्वा मुखमारुतेन पिच्छोरां वादयेयुः वादनेन दण्डेन काण्डमयीमिति ॥ ७ ॥

१०६५. ताः अपघाटिला इत्याचक्षते ॥ ८ ॥

ता पत्नीभिर्वाद्यमाना अपघाटिला इत्याचक्षते, अनेन "त पत्न्योऽपघाटिलाभिरुपगायन्त्यार्त्विज्यमेवतत्पत्न्य कुर्वन्तीति" [1]ब्राह्मणं व्याख्यातमिति ॥ ८ ॥

१०६६. ताः प्रतिमन्त्रयेत—

यां पत्न्यपघाटिलां मृदुक वार× यिष्यति ।

साऽरातिमपघाघता द्विपन्तं तैजनिस्त्वमिति ॥ ९ ॥

ताः अपघाटिलाः प्रतिमन्त्रयेतेति ॥ ९ ॥

१०६७. सर्वमनुवीक्षमाणो जपेद्—

आक्रन्दा उलूलयः प्रक्रोशायच××चेष्टति।

सर्वा सत्रस्य साऽसाद्धिस्तथेदं साम गीयत इति ॥ १० ॥

सर्वं अपघाटिलास्ततोऽन्याश्च वीणा दुन्दुभीश्चानुवीक्षमाणो जपेदिति ॥ १० ॥

---

×च वादयिष्यति

××च यच्चचेष्टितम्

---

1. ता-ब्रा-५-६-८ ।

१०६८. अपेदेव—सुपर्णोऽसि गरुत्मान् प्रेषां वाचं वदिष्यामि बहु-
करिष्यन्तीं बहुकरिष्यन् स्वर्गमयिष्यन्तीं स्वर्गमयिष्यन्मा-
मिमान्यजमानानिति ॥ ११ ॥

पुनरपि सुपर्णोऽसि गरुत्मानिति मन्त्रं जपेदिति ॥ ११ ॥

इति एकादशपटले द्वितीयः खण्डः

अथ तृतीयः खण्डः

१०६९. ब्राह्मणोऽभिगरः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुख उप-
विशेद्वृषलोऽपगरोऽपरस्यां प्राङ्मुखः ॥ १ ॥

यः सत्रिणो यजमानान् प्रशंसति सोऽभिगर इत्युच्यते स:ब्राह्मणः, पूर्वस्या द्वारि प्रत्यङ्मुख उपविशेत् सत्रिणः प्रशंसितुं । अपरस्यां द्वारि वृषलोऽपगरः प्राङ्मुख उपविशेन्निन्दार्थं, यो निन्दति सोऽपगर इत्युच्यत इति ॥ १ ॥

१०७०. [1]स वृषात्काराराव्सुरिमे सत्रिण इति ॥ २ ॥

स वृषलो निन्दन् ब्रूयात् नाराव्सुरिमे सत्रिण इति असिद्धा इत्यर्थः ॥ २ ॥

१०७१. अराव्सुरित्यभिगरः ॥ ३ ॥

अभिगरो ब्राह्मणोऽराव्सुरिति ब्रूयात् संसिद्धा इत्यर्थः ॥ ३ ॥

१०७२. दक्षिणेन मार्जालीयमर्योऽन्तर्वेदे दक्षिणामुखः तिष्ठेत् ॥ ४ ॥

अर्यः स्वामिवैश्ययोरिति [2]पाणिनिस्मृते. अर्यो वैश्य इति ॥

१०७३. बहिर्वेदि शूद्र उदङ्मुखः ॥ ५ ॥

1. ता–ब्रा-५-५-१४। 2. पाणिनि-३-१-१०३।

स्पष्टम् ॥ ५ ॥

१०७४. अर्याभावे यः कश्चार्योवर्णः ॥ ६ ॥

अर्याभावे यः कश्चार्योवर्णः ॥ ६ ॥

१०७५. तौश्वेतं परिमण्डलश्चर्मव्यायच्छेतां शूद्रः पूर्वः ॥ ७ ॥

तावर्यश्च शूद्रश्चान्योन्यं श्वेतंचर्म व्यायच्छेतां शूद्रः प्रथमं व्यायच्छेदिति ॥ ७ ॥

१०७६. पश्चेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेत् बहिर्वेदि पुंश्चली दक्षिणामुखी ॥ ८ ॥

स्पष्टम् ॥ ८ ॥

१०७७. सा ब्रूयाद्दुश्चरितिचवकीर्णिन्निति ॥ ९ ॥

सा पुंश्चली वेश्या ब्रह्मचारिणंप्रति ब्रूयात्, हे दुश्चरितिन् हे अवकीर्णिन्निति । दुश्चरित ब्रह्मचर्यस्खलनमिति ॥ ९ ॥

१०७८. धिक्त्वा जाल्मि पुंश्चलि ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रह्मचारी ॥ १० ॥

ब्रह्मचारी पुंश्चली प्रति ब्रूयात् धिक्त्वा जाल्मीति ॥ १० ॥

१०७९ एवमातृतीयं व्यत्यासम् ॥ ११ ॥

एवमेव पुनः पुंश्चली ब्रूयात् । पुनः ब्रह्मचारी पुनरप्येवं कुर्यातामातृतीयमिति, यावत् तृतीयं पर्यायं, [1]त्रिस्त्रिरित्यर्थः ॥ ११ ॥

१०८०. सर्वेषां कर्मणि निष्ठिते तदेवाभिगरस्त्रिर्ब्रूयात् ॥ १२ ॥

---

1. च-त्रिस्त्रिरित्यर्थः ।

सर्वेषामभिगर प्रभृतीना कर्मणि यथोक्ते कृते पुनरप्यभिगरस्तदेव निर्ब्रूयात् । अरात्स्युरिमे सत्रिण इति ॥ १२ ॥

१०८१ [1]विसृज्य शूद्रः प्रद्रवेत् ॥ १३ ॥

अथ शूद्र परिमण्डश्चर्मं विसृज्य धावेदिति ॥ १३ ॥

१०८२. त तेनैवार्यक्षिणुयात् ॥ १४ ॥

त शूद्र तेनैव परिमण्डलेन चर्मणाऽऽर्यो वर्णोऽन्रक्षिणुयात् विद्धयेत् ताडयेदिति ॥ १४ ॥

१०८३ यथाऽभिप्रेतमितरां ब्रह्मचार्याक्रोशेत् ॥ १५ ॥

अथ ब्रह्मचारी पुंश्चली यथाभिप्रेत आक्रोशेत् न पूर्वोक्तमात्रेण किन्तु अधिकमिति । यथाभिप्रेत तस्याद्दूषण कथयेदिति ॥ १५ ॥

१०८४ पश्चिमेनाग्नीध्रीय दक्षिणे वेदि परिश्रिते मिथुनौ संभवेतां यौ वर्णौ लभेरन् ॥ १६ ॥

यौवर्णौलभेरन्निति सत्रिण तौ मिथुनौ सभवत । अथ यदि कश्चिदब्राह्मणः ब्राह्मणी च कामप्रवृत्ता लभ्येते, तदा तौ सभवत । अथ यदि क्षत्रियौ यदिवा वैश्यौ यदिवा शूद्रौ नात्रवर्णनियम इति ॥ १६ ॥

१०८५ गृहपतेर्दास्योऽभीष्टा वा नवानुदाहृत्यान् पूरयित्वा प्रदक्षिण मार्जालीय परीयुरिदमधु इदं मधिदमध्विति वदन्त्यः ॥ १७ ॥

गृहपतेर्दास्यस्तस्याभीष्टा वा या काश्चित्कुमार्यो नवानुदकुम्भानद्भि पूरयित्वा प्रदक्षिण मार्जालीय परीयु परिगच्छेयु । परिद्रुत्यन्तीति कल्पान्तरमिति[2] ॥ १७ ॥

1 ख-अवसृज्य । 2 ख-परिनृत्यन्ति इति पाठान्तरम् ।

१०८६. पञ्चान्तराद्ध्याः *पञ्चशतं पराद्ध्याः पञ्चत्रिंशतिर्वा ॥ १८ ॥

स्पष्टम् ॥ १८ ॥

१०८७. ताश्योपि वीणा वादयेयुः ॥ १९ ॥

तासां दासीनामपेऽपि वीणा वादयेयुः तदीयनृत्याङ्गत्वे- नेत्यर्थः ॥ १९ ॥

१०८८. सर्वासु स्रक्तिषु दुंदुभीनाघ्नीयुः ॥ २० ॥

महावेदेस्सर्वासु स्रक्तिष्वित्यर्थः ॥ २० ॥

१०८९. उत्तरोत्तरी वाचोन्याहरेयुर्यावतीरभिगच्छेयुः ॥ २१ ॥

अस्मिन् स्तोत्रे पूर्वोक्तास्सर्वा वाच उत्तरोत्तरमात्रायुक्ता ब्रूयुर्यावत्योच्चैर्मात्रया युक्ता वक्तुंशमास्तावत्यामात्रयायुक्ता ब्रूयुः । अतीवोच्चैस्तरामित्यर्थ । यथाहैमहा इदंमच्छिदमच्छि- त्युत्तरोत्तरमुच्चैर्गानं तथोत्क्रोदं यजमानः कुर्वन्त इति । शाखा- न्तरोक्तमुत्क्रोदादिकं उच्चैरुच्चैरिति ॥ २२ ॥

१०९०. घोषांश्च ॥ २२ ॥

दुंदुभिघोषान्वीणाघोषांश्च सर्वानपि यावतोऽधिगच्छेयु- स्तावतोच्चैस्तरां कुर्युः ॥ २२ ॥

एव शिल्पान्युक्त्वा तदनुष्ठानकालमाह—

१०९१. हिंकारमन्वभिगर प्रभृतयः कृत्वा यथार्थं स्युः ॥ २३ ॥

स्तोत्रोपक्रमे हिंकारवेलायां अभिगरप्रभृतयः स्वं स्वं कर्म- कृत्वा यथार्थं गच्छेयुः । ब्राह्मणोऽभिगरः पूर्वस्यां इत्यारभ्य

---

*पञ्चाशतं-पा

मैथुनान्तं कर्मयदुक्तं तत् स्व स्वं कर्म । तथा सन्नद्धोहिराजा-हिंकारवेलायामेव [1]प्रदक्षिण देवयजनं परीया इति प्रैपार्थं कृत्वा यथार्थं गच्छेदिति ॥ २३ ॥

१०९२. आस्तोत्रान्तात् कुम्भिन्यस्सर्वे च घोषाः ॥ २४ ॥

कुम्भिन्यो दास्यो वीणादुदुभिघोषाश्च हिंकार प्रभृति यावत् स्तोत्रसमाप्त्यनुवर्तन्ते, तेषामुपगानरूपत्वात् । केचित्तु-हिंकारात् पूर्वमेवघोषा, [2]आहत दुदुभीन्प्रवदन्तु वीणा इति । यथा प्रैपमुपक्रम्य प्रवर्तन्त इत्याहुरिति ॥ २४ ॥

इति तृतीय. खण्ड.

अथ चतुर्थः खण्डः

अथेदानी [3]सुपर्णोसि गरुत्मानिति जपानन्तर राजनेन पञ्चविंशेनस्तो[4]त्रव्यमाम्नातपर्यायश्च पञ्चविंशस्तोमस्यपर्याय क्लृप्तौ, सूत्रकारो [5]आतिसहारो, युग्मा[6]युक् सहार, [7]आवा-पश्चेति त्रीन् पक्षान् वर्धमानपटले वक्ष्यति, दाशरात्रिकेभ्य: एकया ज्यायस्यित्यादिना, तत्रावाप पक्षेकुत्रावाप इत्यपेक्षा-यामाह—

१०९३. पञ्चविंशे चतुर्विंशस्योत्तमेपर्याये परिचरायामावपेदिति गौतम· ॥ १ ॥

उत्तमे पर्याये परिचराया मध्यमायामृचि आवपेत्, मध्य-मासु द्विरावेदित्यर्थः ॥ १ ॥

1 द्रा-१०-२-१२ । 2. द्रा–11-2-1 । 3 द्रा-11-2-11 ।
4. च-अनाम्नातपर्या । 5. द्रा–17-2-25 । 6. द्रा–17-1-27 ।
7. 17-1-3 ।

१०९४ आवापस्थान इति धानञ्जय्यः ॥ २ ॥

उत्तमे पर्याये प्रथमायामावापस्थान एवाऽऽवपेदिति ॥ २ ॥

१०९५. प्रथमस्यावाप इति शाण्डिल्यः ॥ ३ ॥

प्रथमस्य पर्यायस्यावापस्थान इत्यर्थ ॥ ३ ॥

१०९६. चतुर्विंशेन वान्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात् ४

अथवा चतुर्विंशेन स्तोमनाधिकृतेनैव तृच समाप्य पुनर्मध्यमामृच हिंकाररहिता प्रस्तुयात् । प्रस्तुत्य सकृद्गायेदित्यर्थ ॥

१०९७ स आस्कन्दोनाम ॥ ५ ॥

तस्य बहिं पर्यायगानस्यास्कन्द इति सज्ञा । बहिं पर्यायमास्कन्दनादिति (प्लवनात्) सज्ञाकरण च व्यवहारार्थं, आस्कन्दन्तु गौतमश्चत्वारिंश इति ॥ ५ ॥

१०९८. तन्न कुर्यादिति शाण्डिल्यायनः ॥ ६ ॥

न सार्वत्रिकोऽय निषेध, आस्कन्दस्य श्रुत्युक्तत्वात् । तेन-महाव्रते तत्रास्कन्द नकुर्यादित्यर्थ ॥ ६ ॥

१०९९. उत्तमायां स्तोत्रीयायां प्रस्तुतायां पादावुपावहरेत् ॥ ७ ॥

राजनस्य साम्न उत्तमाया प्रस्तुतायामात्मन पादावुपाऽवहरेदिति ॥ ७ ॥

११००, सहनिधनेन भूमौ प्रतिष्ठापयेत् ॥ ८ ॥

निधनोच्चारणवेलाया पादौ भूमौ प्रतिष्ठापयेत्तत पूर्वं आकाश एव स्थापयेदिति ॥ ८ ॥

११०१. आह्रियमाणे मद्ये प्रतिलोमैरारोहणीयैरनरुच्च जपेत्, "महीद्यौः पृथिवीचन [illegible] यज्ञमिमधत पिपृतान्नो भरीमभिरिति ॥ ९ ॥

अध्वर्युभिराह्रियमाणे नाराशंसादिभक्षणे प्रतिलोमैरारोहणमन्त्रैरवरोहेत्। अवरोहन्त्ववरोहामीति मन्त्रसन्नामः कार्यः अवरुह्येति विधानात्, अन्यथा मन्त्रलिङ्ग विरोधाच्च, तद्यथा, विश्वेत्वा देवा आनुष्टुभेन छन्दसाऽवरोहन्तु तानन्ववरोहामीत्युपक्रम्य वसवस्त्वेत्येवमन्तं अवरोहणम्। अत्रासिग्राह्य भक्षणमप्युद्गातृभिः कार्यम्। स्[1]तुत्वा पृष्ठेन विषुवद्व्रतयोश्चेति वचनात् ॥ ७ ॥

११०२. *अथ आसीनाः शेपेण स्तुवीरन् ॥ १० ॥

अह्न. शेपेण वामदेव्य प्रभृतिना स्तोत्रेण अथ एवाऽऽसीनास्तुवीरन्। आसन्दी कूर्चान् वर्जयेयुरिति। एवं महाव्रतकथा समाप्ता ॥ १० ॥

अथोदयनीयमतिरात्र प्रत्याह—

११०३. उदयनीयेऽतिरात्रे संस्थितेऽवभृथमभ्युपेयुः ॥ ११ ॥

सिद्धमेवैतत्, उत्तरविवक्षार्थं वचनमिति ॥ ११ ॥

११०४. अनुपमज्जन्तः पाणिभिस्तु सन्धावेरन् ॥ १२ ॥

अप्सु[2]शिरसः उपमज्जनमकुर्वन्तः पाणिभिः शरीरमन्योन्यं शोधयेयुरिति ॥ १२ ॥

११०५. यस्यात्रपत्नीस्यात् पृष्ठतया व्युद्धावयेत् ॥ १३ ॥

यस्यात्रयजमानस्य पत्नी विद्यते, तथाचपत्न्या पत्युः स्वदेहे पृष्ठवंश शोधयेत्। कर्मव्यतिहारे विशब्द.। पत्न्याश्च देहं यजमानः शोधयेदिति ॥ १३ ॥

*क-पुस्तके एतत्सूत्र भाष्यञ्च लुप्तम्।

1. द्रा-९-२-११। 2. ह-९-२-१२।

११०६. तानुन्नेतोदानयेत् ॥ १४ ॥

तान् सन्निणउन्नेताअवभृथादुदानयेत्तीरप्रदेशे नयेदिति ॥ १४ ॥

११०७. उदेत्य गृहपतिः सोमोपनहनं परिदधीत ॥ १५ ॥

११०८. अहतानि वसनानीतरे ॥ १६ ॥

स्पष्टे ॥ १५ ॥ १६ ॥

११०९ अभ्युक्षणप्रभृति समापयेयुः ॥ १७ ॥

अवभृथेष्टौ संस्थितायां अव[1]भृथनिचुंकुणेरयभ्युक्षण प्रभृति यदुक्तं कर्मशेषं तस्मिन्नहनिसमापयेयुरिति ॥ १७ ॥

१११० येनेतोधिगच्छेयुरन्येनप्रत्याव्रजेयुःपाप्मनोऽन्वयतिपङ्गाय ॥

इत देवयजनाद्येनपथाऽवभृथगच्छेयुः ततोऽन्येन मार्गेणावभृथात् प्रत्याव्रजेयुः त्यक्तेन पापेनासंबन्धार्थम् । पूर्वस्मिन् हि मार्गे पाप्मा तिष्ठतीति मन्यत इति ॥ १८ ॥

११११. अनुबन्ध्यवपायां हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूणि वापयेरन् ॥ १९ ॥

स्पष्टम् ॥ १९ ॥

१११२. तस्मिन् संस्थिते प्राञ्च उदञ्चो वा गत्वा पृथगुदवसानीयाभिः इष्टिभिराहिताग्नयो यजेरन् ॥ २० ॥

१११३. गृहपतिं यजमानमनाहिताग्नय उपासीरन् ॥ २१ ॥

---

1. ता ब्रा-४-६-८ ।

*ये पुनरनाहिताग्नय सत्रिणस्तेषामग्न्यभावात् गृहपतिमुद-वसानीयाया यजमान उपासीरन् । अत एव वचनात् अनाहिता-ग्नेरपि सत्रासनमस्तीति गम्यते । **आश्वलायनोप्याह दक्षिणा-दत्तग्नीनाम् इति ॥ २१ ॥

१११४. तद्देवत्यैः स्थालीपाकैः यजेरन्निति धानञ्जय्यः ॥ २२ ॥

श्रौताग्न्यभावेप्योपा (?) नाग्नौ स्थालीपाकैरुदवसानीयेष्टि-दैवत्यैरनाहिताग्नयो यजेरन्निति ॥ २२ ॥

१११५ संवत्सर संवसेयुः ॥ २३ ॥

समाप्तेऽपि सत्रे सत्रिण सवत्सर सहैकत्र वसेयुरिति ॥२३॥

१११६. द्वादशरात्रमहोरात्रौ वा ॥ २४ ॥

स्पष्टम् ॥ २४ ॥

१११७. यावद्वासुसुपुः यावद्वासुसुपुरिति ॥ २५ ॥

-- यावन्त काल सत्रे सुसुपु तावन्त काल त्रयोदशरात्रे समाप्ते त्रयोदश रात्र सवसेयु तथा चतुर्दश रात्रावपि तावन्त काल सहवरोयुरिति ॥ ५ ॥

इति चतुर्थ खण्ड

द्राह्यायण कृते सूत्रे दीपे धन्विविनिर्मिते ।
द्वितीये दशके वृत्तः प्रथम पटलोऽधुना ॥

एकादशपटलः समाप्तः

---

*ये अनाहिताग्नय ते गृहपति यजमान उदवसानीय-येष्ट्या उपासीरन् यजमानग्रहण तदिष्टिप्रतिषेधार्थं गृहपतिमेव यजमान न इष्टिन इति लाट्यायने अग्निस्वामि भाष्यम् ॥

**साग्नीना सामावप प्रभृति यथार्थं, अभिधानमुक्तम् ।

## अथ द्वादशः पटलः

### प्रथमः खण्डः

अथ सर्वयज्ञेषु ब्रह्मत्वं विधातुमुपक्रमते—

११९८. *सर्वत्र ब्रह्मा दक्षिणतः ॥ १ ॥

सर्वेष्वपि श्रौतस्मार्तेषु कर्मसु ब्रह्मा[1] भवेत्। न पुनरुद्गात्रादिवत् श्रौतेष्वेव ब्रह्मण. प्रवृत्तिरिति। तथा तेषु कर्मसु क्रियमाणेषु नित्यं दक्षिणतो भवेदिति। द्वयमप्यत्र विवक्षितमिति ॥ १ ॥

१११९. उदङ्मुखः कुर्याद्धोमेभ्योऽन्यत् ॥ २ ॥

उपवेशन प्रभृतिब्रह्मणो यत् कृत्य तत्सर्वं होमव्यतिरिक्तमुदङ्मुख एव कुर्यात्। होमांस्तु प्राङ्मुख एव कुर्यात्। प्राङ्मुखकरणञ्चानादेश इति सामान्यविधानादिति ॥ २ ॥

प्रथमं पाकयज्ञेषु ब्रह्मत्वं विधास्यन् पाकयज्ञपदं व्याचष्टे—

११२०. **पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान् ॥ ३ ॥

---

इदानीमनग्नीनां दीक्षणीयाप्रभृत्येव यथार्थमभिधानं ऐष्टिके तन्त्र इत्युच्यते इति आश्व. श्रौतसूत्रे [४-१-१०] नारायणवृत्तिः।

*दक्षिणतोऽग्नेरुदङ्मुखस्तूष्णीमास्ते ब्रह्माऽऽहोमात् प्रागग्रेषु खा-गृ-१-१-२३

**पाकयज्ञ इत्याख्या यःकश्चैकाग्नौ-तत्र ऋत्विक् ब्रह्मा। खा गृ·१-१-२०।

1. च दक्षिणतः भवेत्।

एकाग्निरौपासन तत्र क्रियमाणान् यज्ञान् पाकयज्ञान् इत्याहुरिति ॥ ३ ॥

११२१. तेषां होष्यत्सु तूष्णीमुपविशेत् ॥ ४ ॥

तेषामर्थे ब्रह्मणैतत् कृत्यम् । किं तत् ? होष्यत्सु कर्तृषु तूष्णीमुपविशेदिति । कर्मसु प्रायेण मन्त्रत उपवेशात् तन्निवृत्यर्थं इह तूष्णीमिति वचनम् । यद्वा तूष्णीमिति वाग्यमनविधिरिति ॥ ४ ॥

११२२ हुते यथार्थं स्यात् ॥ ५ ॥

होमेकृते यथार्थं स्यात् । आसीततया गच्छेद्वेत्यर्थः ॥ ५ ॥

११२३. शूलगवे च बलीन् ह्रियमाणाननुगच्छेत् ॥ ६ ॥

शूलगवं नाम गवां पोष[1]णार्थमध्वर्युबह्वृचैरुक्तं कर्मेति ॥

११२४. निधीयमानानां द[2]क्षिणतः स्थित्वा निहितेष्वप उपस्पृश्यानवेक्षं प्रत्याव्रजेत् ॥ ७ ॥

निधीयमानानां बलीनां दक्षिणत. इत्यर्थः । अनवेक्षमिति अवेक्षणमकृत्वेत्यर्थ· ॥ ७ ॥

११२५. तूष्णीं पाकयज्ञे दक्षिणां 'ओम्' इति वा प्रतिगृह्णीयात् - स्पष्टम् ॥ ८ ॥

११२६. पशुरेव पशोर्दक्षिणा ॥ ९ ॥

पशुहविषःपाकयज्ञस्य अष्टकादे पशुरेव दक्षिणेति ॥ ९ ॥

११२७. *पूर्णपात्रं स्थालीपाकस्य ॥ १० ॥ स्पष्टम् ॥ १० ॥

---

*पूर्णपात्रं दक्षिणा । खा-२-१-३० अत्र ब्रह्मा तूष्णीं ओमिति वा प्रतिगृह्णीयात् इति रुद्रस्कन्द ।

1. क. प्रेषार्थं । 2. गृह्यक्षिणस्यां ।

११२८. उभयोर्यथोत्साहं वा ॥ ११ ॥ स्पष्टम् ॥ ११ ॥

११२९. न वितानं पृष्ठतः कुर्वीत ॥ १२ ॥

वितानं श्रौताग्निविहारदेशं पृष्ठतः न कुर्यादिति ॥ १२ ॥

११३० येन यज्ञांगेन संयुज्येत तदभ्यावर्तेत ॥ १३ ॥

अध्वर्य्वादिभिः सह कर्मकरणे सति, तदानीं येन यज्ञाङ्गेन ब्रह्मा सयुज्यते सयुक्तो भवति, तद्यज्ञाङ्गमभ्यावर्तेत । अग्नीन् पृष्ठतः कृत्वापि तदभिमुखः स्यादित्यर्थः ॥ १३ ॥

११३१ कर्मादिषु सर्वेष्वध्वर्युसंप्रैषमा[1]गमयेत् ॥ १४ ॥

कर्मणामुपक्रमेष्वध्वर्युणा प्रार्थना कारयेत् । अत्र भवता ब्रह्मत्वकार्यमित्यध्वर्युप्रार्थितएव ब्रह्मत्वं कुर्यात् । नान्यथेत्यर्थः ॥

११३२ पूर्वया द्वाराऽन्नादेशे प्रविशेत् । १५ ॥

स्पष्टमिति ॥ १५ ॥

११३३ अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्राश्यं निर्वप्स्यत्सु तूष्णीमुपविशेत् ॥ १६ ।

अग्न्याधेय इत्यधिकारः । चातुष्प्राश्य ब्रह्मौदनम् । चत्वारोहि तद्ब्राह्मणा प्राश्नन्तीति । तन्निशाया निर्वपन्ति तदानीं वाग्यत उपविशेदिति ॥ १६ ॥

११३४ निरुप्ते यथार्थं स्यात् ॥ १७ ॥ स्पष्टमिति ॥ १७ ॥

११३५ [2]तदुद्धरिष्यत्स्वेवमेव ॥ १८ ॥

तच्चातुष्प्राश्यं ब्रह्मौदनं पात्रेषूद्धरिष्यत्स्वध्वर्युष्वेवमेव तूष्णीमुपविशेदिति ॥ १८ ॥

1. क गमयेत । 2 क तमुद्धरिष्यत्सु ।

११३६ तच्चेदनृत्विग्भिः प्राशयेयुस्तण्डुलानादायापविध्येयुः "नि* ष्टआविद्धं कृन्तानि' इति ॥ १९ ॥

यदि चात्तुष्प्राश्यमृत्विग्भ्यतिरिक्तं कंश्चित् प्राशयेयुरध्वर्यैव तदा तस्मादोऽन्नादृत्विजस्तण्डुलानादाय बहिर्निरस्येयु. 'निष्ट अविद्ध' इति मन्त्रेण । तस्यचायमर्थ. हे यज्ञ तवाविद्धं शल्य निष्कृन्तानीति । '[1]तस्याविद्ध निरकृन्तन् यवेन समित' इसि तैत्तरीयके प्राशित्रमधिकृत्योक्तम् । तद्वदेतदिति ॥ १९ ॥

११३७ अथान्यान् निदधीरन् ॥ २० ॥

यत प्रदेशात् तण्डुलादान तत्र तण्डुलानन्यान् निदधीरन्निति ॥ २० ॥

११३८ आधास्यमानस्यारण्योः प्रत्तयोर्यथार्थं स्यात् ॥ २१ ॥

यदि तस्यामेव निशायामाधास्यते यजमान तदा तस्य हस्तेऽध्वर्युणारण्यो प्रत्तयोर्यथार्थं स्यात् । अथ यदि तत ऊर्ध्वं सवत्सरादिकालेष्वग्न्याधान तदा प्राशनानन्तरमेव यथार्थमिति ॥

११३९ पूर्वाह्णे दक्षिणेनाग्न्यायतनानि गत्वा यत्राग्निं मथिष्यन्तः स्युः तद्दक्षिणतः 'नि[2]रस्तः पराग्वसुः' इति दक्षिणा तृणं निरस्येत् '[3]आवसोः सदने सीदामि' इत्युपविशेत् ॥ २२ ॥

यस्मिन् दिवसेऽग्न्याधान तस्य दिवसस्य पूर्वाह्ण एव गार्हपत्यस्य सभाराहरणकाले गा[4]र्हपत्यमन्थनदेशस्य दक्षिणतो मन्त्रेण निरसनोपवेशने कुर्यात् सभाराहरणानुसन्धानार्थमिति ॥

*नेष्टाविद्धमिति लाट्यायने, क पाठे च ।

1 तै त-२-६-८ ३-४ । 2 द्रा ४-४- ११ । 3 द्रा-४-४ १२ ।
4 क. ख मथनदेशस्य ।

११४० 'भूर्भुवस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओम्' इति ॥ २३ ॥

उपविश्य जपेदिति शेषः । जपश्चोपवेशनाङ्गमिति ॥२३

११४१ एतेनोपविशेद्यजुषेति यत्र स्यात् ॥ २४ ॥

यत्र यत्र यजुषोपविशेदिति विधिः स्यात् तत्र सर्वत्रैते- नोपविशेत् । निरस्तः परावसुरित्यादिना मानुष इत्यन्तेनेति ॥

११४२ अग्नि ह्रियमाणमनुगच्छेत् ॥ २५ ॥

गार्हपत्यमग्निं मथित्वा ह्रियमाणमनुगच्छेदिति ॥ २५ ॥

११४३ निहिते यजुषोपविशेत् ॥ २६ ॥

निहिते—आहिते गार्हपत्ये यजुषोपविशेदिति ॥ २६ ॥

११४४ अत्र प्रथममिति शाण्डिल्यः ॥ २७ ॥

अत्रैव यजुषा प्रथममुपवेशनं न पूर्वाह्णे सभाराहरणकाले मन्थनदेश इति ॥ २७ ॥

११४५ द्वितीयमिति धानञ्जय्यः ॥ २८ ॥

पूर्वाह्णे यजुषा प्रथममुपवेशनम् । आहिते गार्हपत्ये द्वितीयं यजुषोपवेशनं कार्यमिति ॥ २८ ॥

११४६ *जातेरथन्तरं गायेत् ॥ २९ ॥

११४७. वामदेव्यं ह्रियमाणे ॥ ३० ॥ बृहन्निहिते ॥ ३१ ॥

त्रीण्यपि सामानि गार्हपत्याधान एवेति ॥ ३१ ॥

११४८ सर्वाणि ऋचेषु मनसा ॥ ३२ ॥

सर्वाण्यपि सामान्यन्याधेय विषयाणि मनसैव गायेत् ।

*एतत्सूत्रमारभ्यसूत्रचतुष्टयं लाट्यायने एकमेव ।

अरण्येगेयानां तावत् [1]ग्रामे वाचिकगानमयुक्तमिति मानसमेवेति शास्त्रार्थः । तथैव ग्रामेगेयानामविगानम् । शास्त्रार्थस्यैकरूप्यार्थमिति ॥ ३२ ॥

११५०. *वाचावा, गायेदिति ह्युक्ते किमन्यद्वाचा प्रतीयते ॥

अथवोभयान्यपिवाचैवगायेत् । कुतः ? गायेदिति ह्युक्ते वाचाविना किमन्यत् प्रतीयते । वाचेति विनार्थे तृतीया । तेन वाचैव गानमिति ॥ ३३ ॥

११५१. अथापि गानमेवाध्वर्यवे विधीयते न मनसेति ॥ ३४ ॥

अध्वर्युब्राह्मणेऽपि गानमेव विधीयते न मनसेति ॥ ३४ ॥

पक्षान्तरमाह—

११५२. अपिवा रहस्यान्येव मनसा गायेत् ।
नह्यरण्येगेयानांग्रामे गानं विद्यते ॥ ३५ ॥

अथवाऽरण्येगेयान्येव मनसा गायेत् । तेषां ग्रामेवाचिकगानस्यायुक्तत्वात् । ग्रामेगेय तु वाचैव गायेद्दोषाभावादिति ३५

११५३. प्रथमोत्तमयोः स्थाने बारवन्तीय यज्ञायज्ञीये इति लामकायनः ॥ ३६ ॥

प्रथमोत्तमयो रथन्तरबृहतो. स्थान इत्यर्थः ॥ ३६ ॥

११५४. पूर्वेकल्पे भूयांसीति शाण्डिल्यः ॥ ३७ ॥

पूर्वस्मिन्नेवपक्षेस्थित्वा,पुनरप्यधिकानिसामानि शाण्डिल्योमूत इति ॥ ३७ ॥

इति प्रथम खण्ड.

*११५०, ११५१, ११५२ एतत्सूत्रत्रयं लाट्यायने नास्ति।

1. क. ख 'ग्रामे' नास्ति ।

॥ अथ द्वीतीयः खण्डः ॥

११५५ मन्थिष्यत्स्वरणी आलभ्य अरण्योः इति गायेत् ॥ १ ॥

११५६. मथ्यमाने अग्निं नरः इत्येतयोरन्यतरत् ॥ २ ॥

११५७ धूमउदिते स्वेपन्ते धूम ऋण्वति इति ॥ ३ ॥

११५८ प्रज्वलिते अदर्शि गातु इति ॥ ४ ॥

११५९. निधीयमाने गवां यत यत् अग्निमीडे इति ॥ ५ ॥

पञ्चस्वपि सूत्रेषु गायेदित्यनुषङ्ग इति । प्रज्वलित इति जननानन्तरमध्वर्युभिः प्रज्वलित इत्यर्थ ॥ १, २, ३, ४, ५ ॥

११६० *तान्युद्गातृकर्मके ॥ ६ ॥

तानि गानान्युदगातुरेव कर्म न ब्रह्मण इत्येक इति ॥ ६ ॥
कुत इत्यत आह—

११६१ उद्गाता सामवेदेन इति [1]श्रुतेः ॥ ७ ॥

वेदशब्दो [2]मन्त्रब्राह्मणवचन । साममन्त्रैर्यत् कार्यं तत् कर्तृविशेषानादेशे उदगातैवेति वचनार्थः । [3]तेनाग्न्याधेये साम गानविधौ ब्रह्मण प्रकृतत्वेऽप्युदगातुरेव गानमिति ॥ ७ ॥

अस्र दृष्टान्तमाह—

११६२ यथा विहव्यसजनीयकयाशुभीयानि होतु ॥ ८ ॥

यथा प्रकृतेऽप्यौद्गात्रकर्मणि, विहव्यशस्य सजनीय मस्य अगस्त्यस्यकयाशुभीय शस्यमिति । विहव्यादीनि सूक्तानि

*यानि चैन अध्वर्यु ब्रूयात् तानि गायेत् इत्येत् अधिक लाट्यायने ।

1 शत-ब्रा-११।५।८।४। 2 क ख मन्त्रवचन । 3 क ख धृतिषु आम्ना ।

होतुरेव शस्यानि । [1]ऋग्वेदेनहोता इति श्रुते । तद्वदत्रापीति ८

११६३. प्रस्तोतुश्च वैराजशाक्वर[×]प्रस्तावाः ॥ ९ ॥

चकारो यथेत्यनुकर्षणार्थं । वैराजे सामनि ब्राह्मण, *"प्रस्ताव प्रस्तुत्य विष्टम्भान् विष्टभ्नोति[2] इति । तथा महानाम्नीषु क्षिप्र प्रस्तुत्य क्षिप्र गेय[3] इति । उभयत्रापि प्रस्तुत्येति उद्गात्रा समानकर्तृकत्व श्रवणेऽपि तदनादृत्य प्रस्तोतुरेव प्रस्तावः । सर्वत्र प्रस्तोता प्रस्तुयादिति सामान्यविधेरभङ्गार्थम् तद्वदत्रापीति ॥ ९ ॥

११६४ सर्वैश्चाविधानाद् ब्रह्मत्वकारिभिः ॥ १० ॥

न च ब्रह्मत्वविधायिभि सूत्रकारै सर्वैरपि ब्रह्मणो गान विहितम् । किं तु कतिपयैरेव । तत्र ब्रह्मणो गानपक्षे सर्वैरपि वक्तव्य स्यादिति ॥ १० ॥

११६५ कर्मयोगाच्चोद्गातु चत्वारो महर्त्विजः प्राश्नन्तीति चातुष्प्राश्यप्राशनम् ॥ ११ ॥

महर्त्विज प्राश्नन्तीति वचनादुद्गातुरपि ब्रह्मौदन प्राशनम् । तेन तस्याधानेऽप्यार्त्विज्येन योगोऽस्ति, न च गान विना तस्यार्त्विज्यमस्तीति । तथा च जैमिनिरुद्गातुरेव गानमाहेति ॥ ११ ॥

अथ स्वमतमाह—

---

[×]क्वरी पा

*प्रस्ताव प्रस्तुत्येति आरभ्यैव-च पाठे विद्यते ।

---

1. शत ब्रा ११-५-८-४ । 2 ता ब्रा-१२-१० ७ । 3 ता ब्रा-१३-४-११ ।

११६६ अधिकारात् तु ब्रह्मण ॥ १२ ॥

तु शब्दो मतान्तर निवृत्यर्थ । *श्रुतौ ब्रह्मत्व विधि प्रकृत्य तन्मध्ये गानविधानात् ब्रह्मण एव गानम् । श्रुतिश्च सूत्रकारेण दृष्टा । गानविधौ ब्रह्मणप्रकृतत्वात् तस्यैव गानमिति॥

११६७ औद्गात्रे चाभिधानात् ॥ १३ ॥

यद्युद्गातुरेव गान स्यात् तदानीमौद्गात्रप्रकरणे विधातव्यम् । न च तदस्तीति ॥ १३ ॥

११६८ दृष्ट चानेन सामगान ब्रह्मा रथचक्रेऽभिगायति इति ॥

वाजपेये ब्रह्मणश्चगान दृष्टमिति न ब्रह्मणो गानविरोध इति ॥ १४ ॥

११६९ उद्गाता इति यथा भूयसो वाद ॥ १५ ।

य पुन उद्गाता सामवेदेन इति वाद, स भूयस्त्वानुसारेण द्रष्ट य तस्य गानभूयस्त्वात् । **यथा भूयपमिति भूयस्त्वानुसारेणत्यथ ॥ १५ ॥

११७० हौत्रे विधेः, विहव्यादीनि ॥ १६ ॥

यत् पुनरुक्त यथा विहव्यादीनि होतु, इति तद्युक्तमेव । हौत्रमधिकृत्य बह्वृचब्राह्मणे तेषा विधानात् । सामवेदेऽपि तद्विधेस्तेनैकवाक्यत्वादिति॥१६ ॥

११७१ स्तोत्रवत् प्रस्तावाः, [1]विराट्सु सुपर्णेन [2]पुरीषेण स्तुवते इति च बहुश्रुते ॥ १७॥

*च पाठे एतद्वाक्य नास्ति । **अय पाठ धन्विदुष्ट ।

1 ता ब्रा 12 10 10 । 2 ता ब्रा 13-4-12 ।

११७९ स्रुचौ वाग्राणि ॥ २५ ॥ ११८० उत्करं वा ॥ २६ ॥

प्रतीयनुवर्तत एव ॥ २५ ॥ २६ ॥

११८१ तमन्तरेणाहवनीयं च यजमानस्य संचरो नान्येषाम् ॥ २७॥

तं ब्रह्माणमिति ॥ २७ ॥

११८२ तं यथार्त्विग्ब्रूयात् ब्रह्मन्निदं करिष्यामि इति सवितृप्रसू-
तोऽद्यः कुरु भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओम् इत्येते-
नानुमन्त्रयेत ॥ २८ ॥

ब्रह्मन्नप प्रणेष्यामि इति, ब्रह्मन् प्रोक्षिष्यामि इत्यादि
रुपलक्षणं ब्रह्मन्निदं करिष्यामि इति, ओं प्रणय, प्रोक्ष, इत्या-
देरुपलक्षणं, 'अद कुरु' इति ॥ २८ ॥

११८३ *एतत् सर्वानुमन्त्रणम् ॥ २९ ॥

सर्वानुमन्त्रणमिति संज्ञाकरणं व्यवहारार्थमिति ॥ २९ ॥

११८४. उच्चैः अद कुर्याम् इति ॥ ३० ॥

तस्मिन्ननुमन्त्रणमन्त्रे अद कुरु ओं इत्यंशमुच्चैर्ब्रूयात्,
इतरत उपांश्विति ॥ ३० ॥

११८५ प्रणीतासु प्रणीयमानासु वाचं यच्छेद्धविरासादनविमोचनात् ॥

स्पष्टमिति ॥ ३१ ॥

पक्षान्तरमाह—

११८६. तास्वेव प्रणीयमानास्वाऽऽहविष्कृत स्तोमयजुषश्चाध्या
समिधं प्रस्तानीयाया इति वा ॥ ३२ ॥

---

*११८३, ११८४ सूत्रद्वय लाटयायने न ।

प्रणीता प्रणीयमानप्रभृति हविष्कृदेहि इति संप्रैषात् पूर्वं वाग्यमनम्। तथा *स्तम्बयजुरारभ्य प्राक् समिदाधानात्। प्रस्थानमनुयाजप्रचारे तदर्था समित् प्रस्थानीयेति ॥ ३२ ॥

पक्षान्तरमाह—

११८७. यत्र वाध्वर्युबह्वृचौ चेष्टेताम् ॥ ३३ ॥

अध्वर्युबह्वृचयोश्चेष्टायामवश्यं वाग्यमनमिति ॥ ३३ ॥

किमन्यत्र कामचारो, नेत्याह—

११८८. यत्र वा न चेष्टेतां वाग्यत प्रायस्त्वेव स्यात् ॥ ३४ ॥

तयोश्चेष्टाभावेऽपि प्रायेण वाग्यत एव स्यादिति ॥ ३४॥

इति द्वितीयः खण्ड.

अथ तृतीयः खण्डः

११८९. प्रायश्चित्तं चेत् कर्तव्यं स्यात् भूः स्वाहेति गार्हपत्ये जुहुयात्। भुवः स्वाहेति दक्षिणाग्नौ। आग्नीध्रीये सुत्या चेत्। स्वः स्वाहेत्याहवनीये। भूर्भुवः स्वः स्वाहेति सर्वत्र ॥ १ ॥

मन्त्रस्य कर्मणो वा भ्रेषे सति तत्समाधानं **प्रायश्चित्तं।

*स्तम्बयजुष अधि–उपरिष्टात्, तावत् वाग्यमनं, यावत् समित् प्रस्थानीया इति। समिधः प्रस्थानीयाया ऊर्ध्वं वाग्विसर्गः इत्यग्निस्वामी।

**सहोवाच किं होष्यसीति प्रायश्चित्तमिति किं प्रायश्चित्तमिति सर्वप्रायश्चित्तमिति किं सर्वप्रायश्चित्तमिति महाव्याहृतीरेव मघवन्निति इत्यादिना सर्वस्यैवैष प्रायश्चित्तिः तस्मादेतामेवजुहुयादिति षड्विंशब्राह्मणे अ-१-ख-६-११ ...१९ ॥

तत्राविशेषेणत्रिष्वप्यग्निषु होमः प्राप्तः । तत्र व्यवस्थापयति भूस्वाहेत्यादिना । सुत्या चेद्वर्तते आग्नीध्रीये भुवः स्वाहेति होम इति ॥ १ ॥

११९०. हुत्वा ब्रूयात्—चेष्टताकाम्यं प्रायश्चित्तं इति ॥ २ ॥

चेष्टत, प्रवर्तध्वं यूयं, अकाम्यं वयं, व्याहृतिहोमेन प्रायश्चित्तमित्यर्थः ॥ २ ॥

११९१. +अवेलायां चेद्व्याहरेदयज्ञियं वाचयेदेताएव व्याहृतीरनुप्रेक्षेत ॥ ३

अयज्ञियं द्विविधं दैवकृतमात्मकृतं च । विहारदेशे कृष्ण-शकुनिश्वापदादिसञ्चारो दैवकृतम् । अमेध्यदर्शनं पतितादिसंभाषणादिकं चात्मकृतम् अनुप्रेक्षणं मनसानुद्रवणम् । तथैव-षड्विंश *श्रुतेरिति ॥ ३ ॥

११९२. इदं विष्णुः इतिवर्चम् ॥ ४ ॥ स्वष्टमिति ॥ ४ ॥

११९३. अमावास्यायां दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः ॥ ५ ॥

अमावास्यायां दर्शयागेऽयज्ञियोपनिपातेऽप्युक्तवयं विधि-रयम् । दोहनपवित्रं दोहनार्थं शाखापवित्रम् । अकाले वाग्विसर्जनेऽयज्ञियापत्तौ च दोहनपवित्रं हस्ते गृहीत्वाऽऽपोहिष्ठीयाभिस्तिसृभिर्मार्जनं[1]मधिकं कुर्युरिति ॥ ५ ॥

११९४. **बहुवचनात् सर्वेऽपि कर्मान्विता कुर्युः ॥ ६ ॥

---

+११९१, ११९२ एतत् सूत्रद्वयं लाट्यायने एकं ।

*स यदि प्रमत्तो व्याहरेत् एता वा व्याहृती मनसा अनुद्रवेत् भूर्भुवस्वरिति, वैष्णवी वर्चम् । षड्विं १-६-७-, ८७

**११९४ एतत् सूत्रं लाट्यायने नास्ति ।

---

1 क मार्जनादिकं ।

एवमुत्तरत्रापि बहुवचनप्रयोगे वेद्यमिति ॥ ६ ॥

११९५. तदभावे दार्भम् ॥ ७ ॥

यदा शाखापवित्रं नास्त्यग्नौ प्रहरणात्, तदानीं दर्भमय पवित्रं कृत्वा तेनैव मार्जनं कार्यमिति ॥ ७ ॥

११९६ सर्वेष्टिष्विति शाण्डिल्यायनः ॥ ८ ॥

न केवलममावास्यायां । सर्वेष्टिष्वपि दर्भमये पवित्रे मार्जनमधिकं कार्यमिति । ननु,अग्न्याधेयेष्टय. प्रकृता । कथममावास्यायामिष्टचन्तरेषु च विशेषविधिरुच्यते । '[1]एतत् सर्वेष्टीनां ब्रह्मत्वम्' इत्यतिदेशं वक्ष्यति । तद्बुद्धिकृत्वा विशेषविधिरिति ॥

११९७. प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत-मित्रस्यत्वाचक्षुषा प्रति पश्यामि इति ॥ ९ ॥

*अध्वर्युणा प्राशित्रमाह्रियमाणमिति ॥ ९ ॥*

११९८. अथ प्राचम्य देवस्य त्वा इति प्रतिगृह्णीयात् ॥ १० ॥

स्पष्टमिति ॥ १० ॥

११९९. व्यूह्य तृणानि पुरस्ताद्दण्डं सादयेत् पृथिव्यास्त्वा नाभौ सादयामि इति ॥ ११

अन्तर्वेदि दर्भतृणानि व्यूहोरयर्थ ॥ ११ ॥

१२०० •अङ्गुष्ठेनानामिकयाचादाय अग्नेष्ट्वाऽऽस्येन प्राश्नामि इति ॥ १२ स्पष्टमिति ॥ १२ ॥

१२०१. अदंशद् निगिरेत् ॥ १३ ॥

---

*१२००, १२०१ एकमेव लाट्यायने

1. द्रा–१२-४-४ ।

दन्तै स्वादनमकुर्वन्नित्यर्थ ॥ १३ ॥

१२०२. अप आचम्योरसि पाणिं निदधीत-इन्द्रस्य त्वा जठरे सादयामि इति ॥ १४ ॥ स्पष्टमिति ॥ १४ ॥

१२०३ प्रक्षाल्य प्राशित्रहरणं तत्र निदध्यात् ॥ १५ ॥

तत्रेति पूर्वोक्तस्थान इति ॥ १५ ॥

१२०४ यथाहृतां वा प्रतिहारयेत् १६ ॥ स्पष्टमिति ॥ १६ ॥

१२०५ ब्रह्मभागमाहृतमग्रत उपनिदधीत ॥ १७ ॥

१२०६ तमिडां संस्थितायां प्राश्नीयात् ॥ १८ । स्पष्टे इति ।

१२०७ *अन्वाहार्यमन्तरेण ब्रह्माणं यजमानं चाहरेत् ॥ १९ ॥

अन्वाहार्यं दृष्टेदक्षिणा । प्रभूतमोदनं पक्वान्न, ब्रह्मयजमानावन्तरेणाध्वर्युर्हरेत ॥ १९ ॥

१२०८ स्वय चेद् ब्रह्मा यजमानः स्यात् पूर्वेणैनम् ॥ २० ॥

हरेदित्यनुषङ्ग । यदि यजमान स्वयमेवापकल्पेन ब्रह्मा स्यात्, तदानीमेन पूर्वेणान्वाहार्यमाहरदिति ॥ २० ॥

१२०९ हृत्वा तमन्तर्वेदिसम तूष्णीमालभेत ॥ २१ ॥

तथाहृत्वाऽध्वर्युणा वेद्या सावित ब्रह्मा स्पृशेदिति ॥ २१ ॥

१२१० प्रजापतेर्भागोऽसि इति ॥ २२ ॥

एतावन्मन्त्र[1] इति ॥ २२ ॥

१२११ अथापरं प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् अक्षितोऽस्यक्षित्यै त्वा । प्राणापानौ मे पाहि समानव्यानौ मे पाहि ॥ उदानरूपे मे पाहि । ऊर्गस्यूर्जं मयि धेहि इति ।

*१२०७, १२०८ लाट्यायन नास्ति ।

1 क एतावन्मात्र ।

अथापरं मतम्-अनेन मन्त्रेणाभिमृशेदिति—

१२१२. तत्रैव यजमानं वाचयेत्-प्रजापतिं त्वया समक्षमृध्यासम्॥ आमागम्या ॥ अन्वाहार्यं ददामि ॥ ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वाहुताद्य मा माहिंसीः अहुतोमह्यशिवो भव इति ॥ २४ ॥

तत्रैवान्वाहार्यं यजमानं वाचयेदिति ॥ २४ ॥

इति तृतीय खण्ड

अथ चतुर्थः खण्डः

१२१३. समिधं प्रस्थानीयामनुमन्त्रयेत—देव सवितरेतत् ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वे देवास इह मादयन्ताम् इत्युपांशु, प्रतिष्ठ इत्युच्चैः । भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुषः इत्युपांशु ओम् इत्युच्चैः ॥ १ ॥

प्रस्थानमनुयाजप्रचार । तदर्था समिधमनुमन्त्रयेत मानुष इत्यन्तेन मन्त्रेण । तत्र च ओम् इति च प्रतिष्ठ इति चोच्चैर्ब्रूयादितरदुपांश्विति ॥ १ ॥

१२१४. सर्वानुमन्त्रणेन वा ॥ २ ॥

सर्वानुमन्त्रणमन्त्रः पूर्वमुक्तः[1] तेन वाऽनुमन्त्रयेत ॥ २ ॥

१२१५. विमुक्तासु प्रणीतासु समिध आदध्याद्यथावभृथादुदेत्य ॥३॥

1 सवितृप्रसूत इति ।

प्रणीताविमोचने कृते ब्रह्मा समिध आदध्यात् । यथावभृथादुदेत्य एधोऽस्येधिषीमहि इत्यादिभिर्मन्त्रैः समिदाधानं तद्वदिति ॥

१२१६. एतत् सर्वेष्टीनां ब्रह्मत्वम् ॥ ४ ॥

एतदुपवेशनप्रभृति समिदाधानान्तं न केवलमाधानेष्टीनां, किं तु सर्वेष्टीनामित्यर्थः ॥ ४ ॥

१२१७. समानाहन्येकासनेन पुनर्यजुपोपविशेदिति शाण्डिल्यः॥५॥

संस्काराणामिष्टिसमाप्तावप्रवृत्तत्वादिष्टिभेदे पुनरपि यजुपोपवेशनमहरासनैक्येऽपि कार्यमेवेति स्वपक्षः । शाण्डिल्यस्य तन्नाभिमतमिति ॥ ५ ॥

१२१८. अग्न्याधेयेष्टिषु प्रथमायां यजुपोपविशेदुत्तमायां समिध आदध्यादिति गौतमः ॥ ६ ॥

इष्टिभेदे यद्यपि प्रयाजादिवत् पृथगुपवेशनं प्राप्तं तथाप्याधानेष्टीनामङ्गाङ्गित्वादेकेष्टितुल्यत्वात् सकृदेवादौ, मन्त्रत उपवेशनमन्ते समिदाधानं चेति गौतम इति ॥

१२१९. पृथगिष्टिष्विति धानञ्जय्यः ॥ ७ ॥ स्पष्टमिति ॥ ७ ॥

१२२०. *चातुष्प्राश्य च प्राशनेषु ॥ ८ ॥

चकारो धानंजय्यानुकर्षणार्थः । ऋत्विक्षु चातुष्प्राश्यं प्राश्नत्सु यजुपोपविशेत् ब्रह्मेति ॥ ८ ॥

अग्न्याधेयस्य दक्षिणामाह—

१२२१. धेनुं दद्यात् ब्रह्मणे ॥ ९ ॥ स्पष्टमिति ॥ ९ ॥

*एतत् सूत्रादारभ्य षट्सूत्राणि लाटयायने एकं सूत्रम् ।

१२२२ अध्वर्यवे चाऽऽग्निपदम् ॥ १० ॥

अग्नेराहवनीयस्याधाने यदपेक्षितमश्वादिपद तदग्निपद तत्सिद्धयर्थो योऽश्वाऽदिरानीयते स अग्निपदोऽश्वादिरिति ॥

१२२३ धेनुर्होत्रे वत्सतरीर्ब्रह्मणेऽनड्वाहोऽध्वर्यवे सर्वं त्रिवर्गा ॥ ११ ॥

त्रिवर्गा त्रिगुणा इत्यर्थः तिस्रोधेनूर्होत्रे, तिस्रोवत्सतरी ब्रह्मणे त्रीननड्वाहोऽध्वर्यव इत्युक्त भवति ॥ ११ ॥

१२२४ पष्ठौहीमाग्नीध्राय ॥ १२ ॥ तदेव द्वादशदक्षिणा ॥

अथ साधारणमाह—

१२२५ सर्वेऽभ्योऽश्वरथ कुण्डले चेति ॥ १३ ॥

एकाश्वरथ कुण्डलद्वय च सर्वसाधारणमिति ॥

१२२६. एवमेव धेनुमाग्निपदं चेति शाण्डिल्यः ॥ १४ ॥

पूर्वोक्तमाग्निपद धनु च साधारणमाहरित्यर्थ ॥

अथेष्टीनां दक्षिणामाह—

१२२७. धेनुमनड्वाहं वत्सतरीं वत्सतरमज पूर्णपात्रमिति तद् प्रथमायामिष्टौ दद्यात् ॥ १५ ॥

तदिति, तद्धेन्वादिषट्कमित्यर्थ ॥

१२२८. तथोत्तरयोरन्यत्राजपूर्णपात्राभ्याम् ॥ १६ ॥

उत्तरयोरिष्टयोर्धेन्वादिचतुष्टयमिति ॥ १६ ॥

पक्षान्तरमाह—

१२२९. वरः सप्तमो दक्षिणानां त्रयोदशो वा पञ्चविंशो वा-एतद् वाजसनेयकम् ॥ १७ ॥

अग्न्याधेयस्य सेष्टिकस्य षड् गावो दक्षिणा । तासां सप्तमो वर स्यात् । अथवा द्वादशगाव स्यु । त्रयोदशो वर स्यात् । अथवा चतुर्विंशतिर्गाव । पञ्चविंशो वर स्यात् । तदेतद्वाजसनेयकमतम् अत्रापस्तम्ब: [1]षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति प्राह विकल्पत इति ॥

१२३० अग्न्याधेयान्तान् कुर्वते पूर्णाहुति मग्निहोममिष्टीरिति ॥

अग्न्याधेयस्य *त्रीनन्तानध्यर्यवो विकल्पेन कुर्वते । तदानीमिष्ट्यभावे तद्दक्षिणालोप इति ॥

१२३१ मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ ॥ १९ ॥

दर्शपूर्णमासयोरारम्भार्थेष्टिरन्वारम्भणीया । तस्यां अन्वाहार्यस्थाने मिथुनौ गावौ दक्षिणा । तयो 'प्रजापतेर्भागौ स्थ' इत्यनुमन्त्रणमन्त्रस्योह कार्यं इति ॥ १९ ॥

१२३२ **वाजिनाश्विनघर्माणामृत्विक्षूपहवमिष्ट्वा प्राणभक्षमक्षयेत्॥

आश्विनो नाम सौत्रामण्या कश्चित् ग्रह । चातुर्मास्येषु वैश्वदेवपर्वणि वाजिन नाम हवि । घर्म प्रवर्ग्य । प्राणभक्षोऽवघ्राणमिति ॥ २० ॥

१२३३ प्रत्यक्षभक्ष स्वे यज्ञे ॥ २१ ॥ स्पष्टमिति ॥ २१ ॥

वाजिनस्य भक्षणमन्त्रमाह—

---

*केषाञ्चित् पूर्णाहुत्यन्त, केषाञ्चित् अग्निहोमान्त केषाञ्चित् इष्ट्यन्तमिति ॥

**एतत् सूत्रद्वय एकमेव लाट्यायने ।

1 आप–श्रौ–५ २० १३ ।

१२३४. यन्मे रेतः प्रसिच्यते यद्वा मे अपिगच्छति यद्वा जायते पुनस्तेन मामिश्रमाविश, तेन मा वाजिनं कुरु, तस्य ते वाजपीतस्योपहूत उपहूतस्य भक्षयामि इति वाजिनस्य॥

१२३५. ऋतूनां त्वा वाजिनां वाजिनं भक्षयामि इति वा ॥ २३॥

१२३६. उभाभ्यां वोभाभ्यां वा ॥ २४ ॥ स्पष्टानीति ॥ २४ ॥

आश्विनघर्मयोस्तु मन्त्रो वक्ष्यते ॥
ब्रह्मत्वमिदमाधाने सर्वेष्टिषु च दर्शितम् ।
द्वितीये पटले तच्चव्याख्यातं धन्विनास्फुटम् ॥

चतुर्थःखण्ड. ॥ ४ ॥

द्वादश पटलः समाप्तः*



## अथ त्रयोदशः पटलः

प्रथम. खण्ड.

१२३७. चातुर्मास्येषु वरुणप्रघासानां स्तम्बयजुर्हरिष्यत्सु यजुषो-पविशेत् ॥ १ ॥

चातुर्मास्येष्वित्यधिकारः । चतुर्षुचतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि । वैश्वदेव वरुणप्रघाससाकमेधशुनासीरी-याणि चत्वारि पर्वाणि ऐष्टिक तन्त्राणि । आपो, दारा., इतिवद् वरुणप्रघासा इति नित्यं बहुवचनान्तम्× । तेषां स्तम्बयजुर्ह-

*च. चतुर्थाध्यायः समाप्तः ।

×शब्दश्चायं नित्य बहु वचनान्तः पुल्लिङ्गान्तश्च आ-श्रौ-८-५-१-सूत्रदत्तः ।

रणकालऐष्टिकात् प्रथमोपवेशनादधिकमेतदुपवेशनमपूर्वं कार्यम् । तयाऽध्वर्योर्हस्तप्रक्षालनकालेऽप्यैष्टिकमुपवेशनं द्वितीयं कार्यमिति ॥ १ ॥

१२३८. परिलिखितेचात्वालेऽध्वर्युणासहप्रत्यावृज्याहवनीयं उपविशेत् ॥

उत्तरवेदिनिर्माणार्थं यस्मादवटान्मृदमाहरन्ति तच्चात्वालम् । तस्मान्मृदाहरणकालेऽध्वर्युणा सह गत्वा चात्वालेऽभ्रिया परिलिखिते सति तेनैव सह प्रत्यावृज्याहवनीयं प्रत्युपविशेत् । ननु, इदानीमाहवनीयो नास्ति, उत्तरवेदिकरणोत्तरकालमध्वर्युभि प्रणयनविधानात् । सत्यम् । अत्र पक्षद्वयमध्वर्युभिरुक्तम् । [1]*गार्हपत्यस्य पुरस्तात् वेदिद्वयं कृत्वा [2]गार्हपत्याद् द्वयोरग्न्योः प्रणयनमित्यापस्तम्ब । **आहवनीयस्य पुरस्तात्

*वेदीकृत्वा अग्रेण गार्हपत्यं समे प्राची वेदी भवतः आ श्रौ-८-५-४ अत्र रुद्रदत्त, वेदी कृत्वा वेद्यौ कार्ये, तेच अग्रेण गार्हपत्य, नापरेणाहवनीयं नापि कल्पान्तराभिप्रायेण, अग्रेणाहवनीय इति । काले पशु बन्धवत गार्हपत्यादग्नीप्रणयत. आ-श्रौ-८-५ २२ अत्र रुद्रदत्त', पुनर्गार्हपत्य ग्रहणं कल्पान्तरोक्तस्य अग्रेणाहवनीयं वेदिं कृत्वा आहवनीयात्प्रणयनस्यनिवृत्यर्थं इति ।

**आहवनीयस्य पुरस्तात् वेदीकरोति (का-श्रौत ५-५५) आहवनीय देशस्य पुरस्तादित्येके तदयुक्तं-आहवनीयमुद्धृत्य-तस्य पुरस्तादित्यपरे - तदप्यनुपपन्नं, तस्मात् - यावदाहवनीयो नभवति-गार्हपत्याच्च पृथग्भूतस्यआहवनीयव्यपदेशः तस्मात् आहवनीयोद्धरणस्य पुरस्तादिति सूत्रार्थः । इति कर्क भाष्यम् ॥

1. आप-श्रौ-८-५-४-२२ । 2. क-ख-गार्हपत्यस्य पुरस्तात् द्वयोः ।

वेदिद्वयकरणं, ततश्च प्रणयनमिति बोधायनकात्यायनौ [1]तत्र द्वितीयपक्षाश्रयणेनेदं सूत्रम् । तदानीं पूर्वमेवाहवनीयस्य सद्भावादिति ॥ २ ॥

१२३९ अग्नी प्रणीयमानौ यथैतमनुगच्छेत् ॥ ३ ॥

आहवनीयस्य पुरस्ताद् वेदिद्वयं कृत्वा तत एवाहवनीयाद् द्वावग्नी प्रणेयाविति बोधायनकात्यायनौ । तावग्नी यथैतमनुगच्छेत् । येन पथाध्वर्युः प्रणयति तेन तमनुगच्छेत् । येन [2]प्रतिप्रस्थाता तेन तमनु गच्छेदित्यर्थः ॥ ३ ॥

१२४०. *अग्नेर्वेदेर् यूपात् सक्तमेकस्फ्यया संभिन्द्धि इति स्फ्ये-नाहवनीयात् पांसूनुपहृत्योत्तरस्या वेदेर्दक्षिणादन्तात् कर्षन्नियात्* ॥ ४ ॥

एकयत्नेन [3]स्फ्यकृता कर्षणक्रिया एकस्फ्या । तथा संभेदनमेकीकरणं सकृदेव पांसूनाहवनीयान्तात् संततमाकृष्य तस्याहवनीयस्य पूर्ववेदिद्वयेन मेलनं कुर्विति मंत्रार्थः । उत्तरस्याः वेदेर्दक्षिणमन्तं यावत् पांसून् कर्षन् गच्छेदित्यर्थः । एवं मेलने कृतेऽग्निद्वयमध्येकायतनस्य कृतं भवेदिति भावः ॥ ४ ॥

१२४१. आवेदिमध्यादेका चेत् ॥ ५ ॥

यत्र साकमेधपशुबन्धादिषु पूर्वा वेदिरेकैव भवति तदा तन्मध्यं यावत् पांसूनाकर्षन् गच्छेदिति ॥ ५ ॥

१२४२. प्रोह्य स्फ्यं पश्चिमेन वेदी गत्वा निधीयमानयोरग्न्योस्तूष्णीमुपविशेत् ॥ ६ ॥

---

1. कात्यायन—श्री ५ ३-९[५-२५]  2 क येन प्रस्थाता तेनैतमनुगच्छेत्
3 क. ख. स्फ्येन सकृदाकर्षणक्रिया एकस्फ्या ।

प्रोह्णमुदसनम् । तत् कृत्वा तयोरन्योर्दक्षिणत उपविशेदिति ॥ ५ ॥

१२४३ एतत् कर्माग्निप्रणयनेषु सर्वेषु ॥ ६ ॥

अग्नौ प्रणीयमानौ पर्यंतमनुगच्छेत् इत्यारभ्य [1]यदुक्त तत् सर्वेष्वग्निप्रणयनेषु स्यादिति ॥ ६ ॥

१२४४ *अवभृथन्यङ्ग गच्छत्सु पूर्वेणाग्नी चात्वाल च गच्छेत्॥८

मुख्यावभृथ सौमिक । तस्य क्रियास्वर्गोन्यङ्ग, स यत्रास्ति **तदवभृयन्यङ्ग, तुषनिष्कासप्रतिपादनम । तत कर्तुं-मध्वर्युषु गच्छत्सु पूर्वेण गच्छेदिति ॥ ८ ॥

१२४५ पश्चिमेन वेदी चात्वाल च स्वे यज्ञे ॥ ९ ॥

स्वे यज्ञ सत्रे कुण्डपायिनामयनगतेषु चातुर्मा[2]स्येष्टिष्विस्यर्थं ॥ ९ ॥

१२४६ हविर्यज्ञेष्वेष संचर उत्तरेण विहार कर्मभ्यः ॥ १० ॥

उत्तरेण विहार यानि कर्माणि क्रियन्ते तदर्थमेव एव सचर । न तु अपरेणाहवनीय दक्षिणातिक्रम्य× इत्यापस्तम्बोक्त सचरोऽभिप्रेत इति ॥ १० ॥

---

*एतत्सूत्रादारभ्य सूत्रत्रय एकमेवसूत्र लाट्यायने ।

**अवभृथ एव अवभृथन्यङ्ग, अथवा अवभृथैकदेश अकृत्स्नोह्यवभृथ इति अग्निस्वामी ।

×अपरेणाहवनीय दक्षिणातिक्रम्य उपविश्य यजमानो विधु सि विद्यमे पाप्मानमृतात्सत्यमुपैमि मयिश्रद्धेत्यप आचामति आ श्रौ ६-५-३

---

1 ला ११ १ १ । 2 क ख–चातुर्मास्येष्वित्यर्थ ।

१२४७ यथा चात्वाले तथा यूपे शामित्रे च पशौ ॥ ११ ॥

निरूढपशौ यूपशामित्रयो. पुरस्तादेव संचर चात्वालव-दिति ॥ ११ ॥

१२४८. अवभृथन्यङ्ग प्राध्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयुः ॥

अवभृथदेश गत्वाभ्युक्षणप्रभृति× समिदाधानान्त सुत्यायां यदुक्त तत् सर्वं कुर्यु । एतदन्त वरुणप्रघासेषु बह्व-स्वम् । बहुवचन सर्वार्थमिति । १२ ॥

१२४९. साकमेधेषु क्षीरौदनस्य यथार्थं प्राश्नीयात् ॥ १३ ॥

द्व्यहेन [1]साकमेधानुष्ठानम् । पूर्वस्मिन् दिवसे रात्रौ क्षीरौदनो गृहमेधीय, [2]साकमेधे गृहमेधीयस्य शेष यथेच्छ, प्राश्नीयाद्वा न वेति ॥ १३ ॥

१२५० यजमान ब्रूयात् - प्रभूतमर्श कारय । क्षुधिता अलङ्कृता-भक्तेरपमारयान् ब्रूहि । वत्सांश्च मातृभि सह वासय इति ॥ १४ ॥

कारय, ब्रूहि वासय इति त्रय प्रैषा इति ॥ १४ ॥

१२५१. पूर्वाह्णेऽध्वर्युः क्षीरौदनमृषभस्य रवथे जुहोति ब्रह्माणमुप-वेश्य ॥ १५ ॥

उत्तरेद्यु पूर्वाह्णऋषभमानीय तस्य रवथे-शब्दे सत्यध्वर्यु-र्जुहोतीत्यनुवादोऽयमुक्त रार्थम् । १५ ॥

१२५२. अग्नीत्र्हरति यज्ञे र ब्रूयात् - जुहुधि इति ॥ १६ ॥

×द्रा सू-६ ४-८ to ६ ४-११

1 क ख मेधेनानुष्ठानं । 2 क ख साकमेधगृहमे ।

तस्मिन्नेवस्थानेस्थित्वा मनोन्वा हुवामह इति त्रिभिः गार्हपत्यमुपतिष्ठेरन्निति ॥ ८ ॥

१२६७. रुथा नथित्र आ भुरन् । इ येकपादविमाग्निम् ॥ ९ ॥

स्पष्टमिति ॥ पित्र्या समाप्ता ॥९।

१२६८ *त्र्यम्बका नामापूपा मरुत्येककपालाः । तेषां यमन्वयुं ताखुकर उत्तरपेत् तस्मिन् अय उपस्पृशेयुः-शिवा नः संतमा भव सुमृडीका सरस्वति । मा ते व्योम संदृशि इति ॥ १० ॥

त्र्यम्बकदेवत्वत्वात् त्र्यम्बका नाम केचनापूपा पुरोडाशा । तेषामेकम०वर्युराखु कर निवपति । तस्योत्तरिष्टादेव उपस्पृशेयुरिति ॥ १० ॥

१२६९ आसीनेरेरा हूयमान इति धानञ्जय्यः ॥ ११ ॥

इतरथा पुरोडाशानां होम क्रियमाण आसीनेत्येके मत-मिति ॥ ११ ॥

१२७० तिष्ठेदिति शाण्डिल्यः ॥ १२ गतमिति ॥ १२ ॥

१२७१ हुते तिष्ठन्तो जपेयुः अवाम्बरुद्रमपन्महार देव त्र्यम्बकम् । यथा नः श्रेयसस्करद् यथा नो वस्यसस्करद् यथा न पशुमतस्करद् यथा नो व्यवसाययात् । भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजं सुखं मेषाय मेष्यै सुभेषजं यथासद् इति ॥ १३ ॥

सर्वेषु हुतेषु तिष्ठन्तो जपेयुरिति ॥ १३ ॥

इति द्वितीय खण्ड

---

*१२६८ इद लाटयायने सूत्रद्वयात्मकम् ।

अथ तृतीयः खण्डः

१२७२. यजमानस्यामात्या एकैकमपूपमादाय प्रदक्षिणमग्निं परीयुः । तत्र ब्रह्मा परीयञ्जपेदिति धानंजय्यः ॥ १ ॥

अमात्याश्चतुष्पथमग्निपरियन्ति । तदानीं ब्रह्मापि तमग्निं परिगच्छञ्जपेद् वक्ष्यमाणं मन्त्रमिति ॥ १ ॥

११७३. तिष्ठञ्जिति शाण्डिल्यः ॥ २ ॥

मन्त्रमाह—

१२७४. त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ इति *जामी कुमारी वा या स्यात् पतिकामा सा विपरीयात् त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । ऊर्वारुकमिव बन्धनादितो मुक्षीय ॥ इति ज्ञातीनभिकल्पयेत ॥ ३ ॥

सा कुमारी त्र्यम्बकम् इति मन्त्रं ब्रुवाणा मृत्योर्मुक्षीय इत्यस्य स्थाने इतो मुक्षीय इत्युक्त्वा इत इत्यनेन पादेन ज्ञातीनभिलक्ष्यात् । इतः पितृकुलादित्यर्थः ॥ ३ ॥

१२७५. मामुत इतीष्टमभिनिर्दिशेदमुष्य गृहादिति ॥ ४ ॥

मामृतात् इत्यस्य स्थाने मामुत इतीष्टं परिग्रहं निर्दिशेत् । तद्यथा, मुक्षीय मा पत्युर्महादेवस्य गृहात् इति ॥ ४ ॥

१२७६. एवं त्रिः परीत्योदस्येयुः ॥ ५ ॥

एवमग्निं त्रिः परीत्य पुरोडाशानाकाशे हस्ताभ्यामुदस्येयुरमात्या इति ॥ ५ ॥

---

*जामीत्यारभ्य सूत्रद्वयं नास्ति लाट्यायने ।

सर्वेष्वपि पशुयाजेषु पत्नीसयाजान् क्रियमाणाननुव्रजेत् ब्रह्मेति गौतम इति ॥ १८ ॥

१२९०. सवनीयस्यैवेति *धानञ्जय्यः ॥ १९ ॥

गतमिति ॥ १९ ॥

१२९१ न सवनीयस्य चनेति शाण्डिल्यः ॥ २० ॥

चनेति निपातोऽप्यर्थे, सवनीयस्यापि पत्नीसयाजान् नानुव्रजेदित्यर्थः ॥ २० ॥

१२९२ +हृदयशूलोऽवभृथन्यङ्गस्थाने भवति । २१ ॥

वरुणप्रघासेषु यदवभृथन्यङ्गमुक्त, तत्स्थाने हृदयशूलोद्वासनमत्र भवतीति ॥ २१ ॥

१२९३ तस्मिन्नप उपस्पृशेयु' धाम्नो धाम्नो राजस्ततो वरुण नो मुञ्च । यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ सुमित्रा न आप ओषधय सन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति ॥ २२ ॥

हृदयशूलस्योपरिष्टादुपस्पर्शनमिति ॥ २२ ॥

इति तृतीय खण्ड

अथ चतुर्थः खण्डः

१२९४ अभ्युक्षण प्रभृत्यत ऊर्ध्वम् ॥ १ ॥

अत अभ्युक्षणात् उपस्पर्शनादूर्ध्वमभ्युक्षणप्रभृति सर्वं सौत्यकर्म कुर्युरिति । तत्रादित्योप[1]स्थानमप्युक्तम् ॥ १ ॥

---

*धानञ्जय्य इत्यत्र गौतम इति लाटयायन ।

+१२९२, १२९३ एतत्सूत्रद्वय एकमेव लाटयायने ।

1 ब्रा-६ ४ १ ।

तदिहनकार्यमित्यत आह—

१२९५. आदित्यं नोपतिष्ठेरन् ॥ २ ॥ गतमिति ॥ २ ॥

१२९६. पूर्णाहुतौ हूयमानायामासित्वा हुतायां यथार्थं स्यात् ॥३॥

बोधायनमते पूर्णाहुत्यन्तः पशुरिति ॥ ३ ॥

१२९७. सक्तुहोमांश्चेज्जुहुयुरासीताऽऽतेषां होमात् ॥ ४ ॥

सक्तुहोमाश्च पशौ बोधायनेनोक्ताः । तेषामाहोमादासित्वा पश्चात् गमनमिति ॥ ४ ॥

१२९८. सौत्रामण्यां सुराकर्मस्वा[1]व्राजमासीन ॥ ५ ॥

आव्राजमिति णमुलन्तस्ययोन्तः । अध्वर्युणा सुराग्रहणादिषु क्रियमाणेष्वाव्रज्याव्रज्येत्यर्थः ॥ ५ ॥

१२९९. तत्र द्वावग्नी अभिप्रणयन्ति । सर्वं दक्षिणत आसीत । ६ ॥

ननु च वरुणप्रघासधर्मातिदेशात् सिद्धमेव द्वयोर्दक्षिणत आसनं । सत्यं । पशुबन्धेषु चात्वाले मार्जनानन्तरं [2]यथार्थं स्यात् इत्युक्तम् । तन्माभूदित्येवमर्थं सूत्रम् । मार्जनानन्तरं [3]पुनरप्यासीत न पुनः यथार्थं गच्छेदिति ॥ ६ ॥

१३००. दक्षिणमग्न्यधिकुम्भ्यामासन्नायां [4]शततृण्णायां सुराशेषे ष्वासिच्यमानेषूपतिष्ठेरन् "यत्तेऽग्निरर्चिष्यग्ने विततमन्तरा ब्रह्मतेन पुनीहि मा" इति ॥ ७ ॥

दक्षिणमग्निं, अधिरस्योपरिष्टाच्छतच्छिद्राया कुम्भ्या सुराशेषेष्वासिच्यमानेष्वग्नेरुपस्थान कार्यम् । [5]बहुवचन अध्वर्य्वादेरपि आवश्यकमुपस्थानमिति ॥ ७ ॥

---

1. क ख-'आव्रज'मिति । 2. द्रा-१३-३-१५. 3 घ कुम्भ्यामासक्तायां पुनरपि । 4. शततृण्णायामिति लाट्यायने, 'च पाठे च नास्ति । 5. क, ख महुवचनादन्यैरपि ऋत्विग्भिः उपस्थानमिति ।

१३०१. अश्विनोर्ग्रहस्य भक्षयेत् - यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियेण । इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि इति ॥ ८ ॥

भक्षयेत् - स्पष्टमिति ॥ ८ ॥

१३०२ यजमानं चेत् पशुरसेनाभिषिञ्चेयुरुत्तरेणाहवनीयमन्तरेणाग्नी गत्वा अध्वर्युणोक्त संज्ञानानि गायेत् ॥ ९ ॥

यदि पशुरसेन यजमानमभिषिञ्चेयु तदा सज्ञानसाम्ना गान अध्वर्युणा उक्त इति वचनात् प्रैषाभावे न गायेदिति ॥ ९॥

१३०३ पदाय पदाय स्तोभेत् ॥ १० ॥

परिमाणस्वात् स्वाध्यायवत् गाने प्राप्ते इद वचनमिति ॥

१३०४ निधनान्युपयन्तो यजमानस्य मूर्धानमालभेरन् ॥ ११ ॥

बहुवचन सर्वेषा ऋत्विजां ग्रहणार्थमिति ॥ ११ ॥

केपुन स्तोभा कानि वा निधनानीत्यत आह—

१३०५. 'सन्त्वा हिन्वन्ति' इत्येषां पूर्वःपूर्वः स्तोभ उत्तरं निधनम् ॥ १२ ॥

बृहदिन्द्राय गायत इत्यस्या ऋच पुरस्तात् सन्त्वाहिन्वन्ति धीतिभि ॥ म त्वा रिणन्ति धीतिभिः ॥ सत्वा ततक्षुर्धीतिभि सन्त्वा शिशन्ति धीतिभि इति चत्वारि वाक्यानि गीतानि । चतुर्थं वाक्यमुपरिष्टादपि गीतम् । तदितरेषामपि प्रदर्शनार्थं । तेन तस्यैव गीतिप्रकारेणेतराण्यपि पुरस्तादुपरिष्टाच्च विभज्य गेयानि । तत ओहो वा इत्युपायात् पूर्वं पूर्वोऽश स्तोभ, उत्तरमुत्तर सभवसे इत्यादि निधनम् । स्तोभनिधनभेदात् सामभेद । एकरूपमेवार्चिक गानमिति ॥ १२ ॥

१३०६. 'श्रवसे' इति स्थाने 'जित्यै' इति क्षत्रियस्य, 'पुष्टचै' इति वैश्यस्येत्येके ॥ १३ ॥

सश्रवसे, विश्रवसे, सत्यश्रवसे, श्रवसे इति- चत्वारि निधनानि । तत्र श्रवसे इति स्थाने जित्यै इति क्षत्रियस्य यजमानस्य कुर्यात् । पुष्टचै इति वैश्यस्यकुर्यात् । तद्यथा सञ्जित्यै, विजित्यै, सत्यजित्यै, जित्यै इति । संपुष्टचै, विपुष्टचै, सत्यपुष्टचै, 'पुष्टचै इति' ॥ १३ ॥

१३०७. द्वे सौत्रामण्यौ, कौकिली चरकसौत्रामणी च ॥ १४ ॥

गतमिति ॥ १४ ॥

१३०८. कौकिल्यां सामगान नेतरस्यां । संज्ञानान्निगायेदिति ह स्माह कौत्सः ॥ १५ ॥

कौकिल्यामेव सामगान नेतरस्यामिति कौत्सो मन्यत इति ॥ १५ ॥

अथ [1]केषुपुनर्हविर्यज्ञेषु ब्रह्मत्वमुक्तं, तानाह—

१३०९. सप्तहविर्यज्ञ संस्थाः —अग्न्याधेयं अग्निहोत्रं दर्शपूर्णमासाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी च[2] ॥

स्पष्टम् ॥ १६ ॥

अग्नि[3]होत्रेऽपि ब्रह्मा भवतीति सूत्रकार पक्ष इति । इदानी [4]सोमसंस्थायां ब्रह्मत्वं विधास्यन् तस्याः संस्थायाः भेदात् ब्रह्मत्वविषयानाह—

---

1. क-ख-केषुनर्हविर्यज्ञा येषु । 2. क-ख-इति ।
3. क ख-अग्निहोत्रस्य ब्रह्माभवेदिति । 4 च-सुत्यायां ।

१३१० सप्तसोमसंस्था —अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इत्यप्तोर्याम इति ॥ १७ ॥

द्वादशेऽग्निष्टोमादयः शब्दाः संस्थाविशेषवाचिनो, न पुनः विश्वजिदादिशब्दवदेकाह विशेषवाचिन इत्यर्थः । तेन वाजपेयादि शब्देनेन ब्रह्मत्व विधीयमान तत्संस्थाप्रयुक्त, ([1]न पुनः क्रतुविशेष प्रयुक्तमिति) दर्शित भवति । केचित्तु संस्थानुक्रमण तासा नित्यताप्रतिपादनार्थमित्याहु । तदयुक्त । न ह्यनुक्रमणमात्रान्नित्यतासिद्धि इति ॥ १७ ॥

इति चतुर्थं खण्ड

इति छ दोग सूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीय पटलो वृत्त हविर्यज्ञा निरूपिता ॥

त्रयोदश पटल समाप्त



## चतुर्दशः पटलः

### प्रथम खण्ड

अथ सोमयागेषु ब्रह्मत्व विधातुमुपक्रमते—

१३११ सुत्यायां ब्रह्मणः, प्राक् सुब्रह्मण्याया औद्गात्रेण समानकर्म ॥

सुत्यायामित्यधिकार । [2]क्रीते राजनि सुब्रह्मण्याप्रवृत्तयंत् पूर्वमुद्गातु कर्म तद् ब्रह्मणोऽपि समानम । किं पुनस्तत् । महन्मेऽवोच इति [3]अतिमन्त्रण सोमप्रवाकस्य [4]परिवेषणमिति ॥

1 क-ख-पुस्तके इदं नास्ति । 2 द्रा १२ २३ । 3 द्रा १ १ १० ।
4 द्रा-१ १ १२ ।

१३१२. ईक्षणाक्रमणे वेदेः २ ॥

समानमित्यनुवर्तते । यत् पूर्वमुद्गातु उक्तं उत्तर वेद्यन्तमाक्रम्य दक्षिणमीक्षमाण [1]पितरोभू.इतितदपिब्रह्मण समानमित्यर्थ. । सुब्रह्मण्याप्रवृत्तेरूर्ध्वमुद्गातु वेदेराक्रमणमिति सूत्रारम्भः । [2]देवो देवमेतु इतिमन्त्रेण गमनमप्याक्रमणाङ्गत्वात् ब्रह्मण समानमेवेति ॥ २ ॥

१३१३. सञ्चरधिष्ण्योपस्थान दक्षिणाप्रतिग्रहभक्षाः ॥ ३ ॥

समानमित्येव । [3]अन्तरेण चात्वालोत्करौ सञ्चरः इति यदुक्त यच्च[4] धिष्ण्योपस्थान यश्च दक्षिणाप्रतिग्रह [5] यश्च[6] सोमभक्ष तत् सर्व समानमिति ॥ ३ ॥

१३१४. स्तोमविमोचनाद्योर्ध्वमन्यत् सामगानात् ॥ ४ ॥

तृतीयसवने स्तोमविमोचनादूर्ध्वं [7]यदुक्त तदपि समान अवभृथ [8]वर्जमिति ॥ ४ ॥ तत्रोद्गातवदौ रवसथ्येऽहनि [9]गमने प्राप्त आह—

१३१५. अनुस्यात् तु *दीक्षणीयाम् ॥ ५ ॥

दीक्षणीयामिष्टिमनु ब्रह्मा स्यात् । तत्काल एव मन्त्रेण देवयजन गत्वा वेदेराक्रमणमीक्षणञ्च कार्य दीक्षणीयाया ब्रह्मत्वकरणार्थमिति भाव । तदानी ब्रह्मणोऽपि[10] मधुपर्काहरणन्तु

*दीक्षणीयायामिति लाटचायने, च पुस्तके च ।

1. द्रा १-१-२५ । 2. द्रा-१-१-२३ । 3 द्रा–२–१-६ ।
4. द्रा-४-२-१० । 5 द्रा-५-३-१५ । 6 द्रा-५-१-३ ।
7 द्रा-६-३-४ । 8 द्रा-६-४-१ । 9. द्रा-१-१-२२ ।
10 द्रा–१-२-१ ।

कार्यं । मधुपर्कभक्षणन्तु +शास्त्रान्तरोक्तप्रकारेण ब्रह्मण कार्यम । न पुनरुद्गातु प्रकारेण, अतिदेशाभावादिति ॥ ५ ॥

१३१६. तस्यां संस्थितायामासीत आदीक्षणात् यजमानश्च ॥ ६ ॥

इष्ट्यनन्तर आदीक्षासमाप्तेरुभावपि न कुत्रचित् गच्छेताम् । अदीक्षिष्टाय ब्राह्मण इत्यावेदनात् पूर्वमिति यावदिति ॥

१३१७. त यदाऽध्वर्युर्वाच यमयेदथ यथार्थं स्यात् ॥ ६ ॥

त यजमानमित्यर्थं । दीक्षित, वाच यच्छ इत्यध्वर्युप्रेषानन्तर यथार्थं स्यादिति ॥ ७ ॥

१३१८ महावीरान् संभरिष्यत्सु तूष्णीमुपविशेत् ॥ ८ ॥

[1]दीक्षासु महावीरान सभरति इति कात्यायन सूत्र । महावीरा प्रवर्ग्यपात्राणि । तेषा सभरणकाले वाग्यत उपविशेदिति

१३१९. संभृतेषु यथार्थं स्यात् ॥ ९ ॥ स्पष्टमिति ॥ ९ ॥

१३२० प्रायणीयायां* संस्थितायां पूर्वेण पत्नीशालां तिष्ठेदाऽभिहोमात् पदस्य राजक्रयण्याः ॥ १० ॥

सोमक्रयण्या पदाभिहोम यावत् तिष्ठेदिति ॥ १० ॥

१३२१ अभिद्रुत उत्तरेण सोमवहन गत्वा प्राग्वा पदाभिहोमात् दक्षिणेन यत्र राजानं क्रेष्यन्त स्युस्तत्र गत्वा तूष्णीमुपविशेत् ॥ ११ ॥

+गृह्योक्तप्रकारेणेत्यर्थं

*अत्र यथेन निष्क्रम्य' इत्यधिक लाटयायने

1 कात्या श्रौ २६-१ १ महावीरान सभरति महावीरान् करोतीत्यर्थं महावीरैश्च उपलक्षित अ मदन्यच पिन्वनादि सचियत एव । प्रयोजन तेषामभ्यन्तरार्थे प्रयोक्तृत्वम ■ इति कर्काध्याय ॥

पदाभिहोमे कृते, सोमवहन शकटमुत्तरेण गत्वा यत्र सोम क्रेष्यन्त स्यु, तत्र गत्वोपविशेत् । अथवा पदाभिहोमात् पूर्वमेव सोमवहन दक्षिणेन गत्वा क्रयदेश उपविशेदिति ॥ ११ ॥

१३२२. क्रीते प्राङुत्क्रामेत् पश्चिमेनैन हृत्वा राजानमाध्वर्युराहित पूर्वेण परीत्योह्यमानमनुगच्छेत् दक्षिणेनचेत्गतःस्यात् ॥१२॥

यदि पूर्व सोमवहन दक्षिणेन ब्रह्मा गत स्यात्, तदाक्र्यानन्तर प्राक् प्रसर्पेत् । त पश्चिमेन राजान हृत्वा शकट आध्वर्युरध्वर्येव । अथ ब्रह्मा तमाहित सोम पूर्वेण प्रसव्य परीत्यशकटेनोह्यमानमनुगच्छेत् ॥ १२ ॥

१३२३ उत्तरेण चेत् क्रीते प्रत्यङुत्क्रामेत् पूर्वेणैनं हृत्वा राजानमाध्वर्युराहितं पश्चिमेन परीत्योह्यमानमनु गच्छेत् १३

यदि सोमवहनमुत्तरेण ब्रह्मा गत स्यात्, तदा क्रयानन्तर प्रत्यक् प्रसर्पेत् । गतमन्यदिति ॥ १३ ॥

१३२४. तामेवात्रेपामन्वावर्तेत ॥ १४ ॥

प्राङ्मुखे शकटे वर्तमाने यस्या पार्श्वेन गतस्तत्पार्श्वेनैव प्रत्यङ्मुखे शकटेऽपि गच्छेदित्यर्थ ॥ १४ ॥

कापुनरसौ तामाह—

१३२५. साहि प्राचीवर्तमानस्य दक्षिणेषा भवति ॥ १५ ॥

प्राग्वर्तमानस्य शकटस्य, या दक्षिणेषा सैवासाविति । दक्षिणेषा पार्श्वेनैव प्राग्गमन । तत्पार्श्वेनव प्रत्यग्गमनमपीत्यर्थ

१३२६. विमुक्ते, चान्तरेण सोमवहन पत्नीशालां च दक्षिणोत्क्रम्य तिष्ठेत्, अदीक्षितश्चेत् आराज्ञोऽपहरणात् ॥ १६ ॥

अनडुहि विमुक्ते इत्यर्थः अदीक्षित इति पर्युदास । सर्वे दीक्षितस्यातिथ्याया निर्वापानुसन्धानार्थमन्त प्रवेशस्यावश्यभावात् सत्रादन्यत्र राजरक्षणार्थं तिष्ठेदेवेति ॥ १६ ॥

१३२७ प्रवेश्यमान राजानमनुप्रविशेदव्यवयन्नग्निना ॥ १७ ॥

अग्निना आहवनीयेन सह सोमस्य व्यवायमकुर्वन् प्राग्वंश प्रवेश्यमान राजानमनुप्रविशेदिति ॥ १७ ॥

१३२८ संबाध चेत् स्याद् दक्षिणयापि द्वारा प्रविशेत् ॥ १८ ॥

स्पष्टमिति ॥ १८ ॥

१३२९ उत्तरेणाहवनीय पश्चिमेन वेदिं सञ्चरेदुदीक्षितश्चेद् । १९ ॥

स्पष्टमिति ॥ १९ ॥

॥ इति प्रथम खण्ड ॥

अथ द्वितीयः खण्डः

१३३० आतिथ्यामिष्टिं निर्वपन्ते ॥ १ ॥

अध्वर्यव इत्यर्थ ॥ १ ॥

१३३१. ताश्चेदनपहृते राजनि निर्वपेरन् ब्राह्मणराजनिसमादिश्य तत्रगत्वाऽऽसीत ॥ २ ॥

यदि राज्ञोऽपहरणात् पूर्वमेव निर्वपेरन् तदा राजरक्षार्थं कञ्चिद् ब्राह्मणमादिश्यान्त प्रविशेदिति ॥ २ ॥

१३३२ तस्यां संस्थितायां तानूनप्त्रमाज्यमवमृशन्तो जपेयुः हविरसि वैश्वानरम् । अनाधृष्टमस्यनाधृष्य देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम् अञ्जसा सत्यमुपगेष सुविते माधाः इति ॥ ३ ॥

ऋत्विजामन्योन्य द्रोहपरिहाराय यद् घृतं स्पृश्यते तत् तानूनप्त्रम् । तत् सर्वेऽप्युद्गातारो ब्रह्माचावमृश्यजपेयुरिति ॥३॥

१३३३. अप उपस्पृश्याध्वर्युणोक्तो राजानं विस्रंसयेत् ॥ ४ ॥

सोमोष्णीषं विस्रंसयेत् आप्यायनाय ॥ ४ ॥

१३३४. तं हिरण्यमन्तर्धायाभिमृशेयुः अंशुरंशुष्टे देवसोमाप्यायता-मिन्द्रायैकधनविदे, आतुभ्यमिन्द्रः प्यायतामात्वमिन्द्राय प्यायस्व । आप्याययास्मान् सखीन् सन्या मेधया । स्व-स्तिते देव सोम सुत्यामुदृचमशीय इति ॥ ५ ॥

स्पष्टमिति ॥ ५ ॥

१३३५. काशमये प्रस्तरे निह्नुवीरन् दक्षिणान् पाणीनुत्तानान् कृत्वा सव्यान् नीचः—एष्टा राय एष्टा वामानि प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै इति ॥ ६ ॥

निह्नवो नमस्कारः । कृते हि नमस्कारे पुरुषस्य दोष-एच्छादितो भवतीति । तदुपायत्वान्निह्नुत्र इत्युच्यते । तथा च ब्राह्मणं · न वैदेवा नमस्कारमिति यज्ञो वै नम इति । आतिथ्या संबन्धिनि काशमये प्रस्तरे दक्षिणान् पाणीनुत्तानान् निधाय तत उपरि सव्यान् नीच. कुर्युः । सोऽय नमस्काराञ्जलिरिति ॥

१३३६. सुब्रह्मण्यास्वाहूयमानासु दक्षिणोत्क्रम्य तिष्ठेद् दीक्षितश्चेत् ॥

१३३७. आहूतासु यथार्थं स्यात् ॥ ८ ॥ स्पष्टे इति ॥ ७ ॥ ८।

१३३८. उपसदिष्टिरत ऊर्ध्वं तस्यां तथैवाभिमर्शननिह्नवने ॥ ९ ॥

तस्यामुपसदि संस्थितायां तथैव हिरण्यमन्तर्धाय सोमाभिमर्शननिह्नवे कुर्युरिति ॥ ९ ॥

१३३९ सव्या अपराह्ण उत्तानाः स्युः दक्षिणा न्यञ्चः ॥ १० ॥

आपराह्णिक्यामुपसदि सव्याः पाणय उत्ताना स्यु दक्षिणा पाणयो न्यञ्च स्युरिति ॥ १० ॥

क पुनरुपसदन्तो यत्र निह्नव –तमाह–

१३४० स्रुवेणोपसद्धोमे हुते विद्यात् संस्थितेति ॥ ११ ॥

त्वेष वचोअपावधीत् इत्यध्वर्युणाहुते संस्थितेति विद्यात् इति ॥ ११ ॥

इति द्वितीय खण्ड

अथ तृतीयः खण्डः

१३४१ तस्य घर्मः प्रवर्ग्यवति पूर्वः* तमभीन्धिष्यत्सु ॥ १ ॥

१३४२ गार्हपत्य गत्वा यजुषोपविशेत् दक्षिणेन ॥ २ ॥

प्रवर्ग्यवति क्रतौ तस्या उपसदिष्टे पूर्वं प्रवर्ग्यो भवति। तमभीन्धिष्यत्स्वध्वर्युषु गार्हपत्य गत्वा तस्य दक्षिणत उपविशेदिति ॥ २ ॥

१३४३. **दक्षिणाग्निमुत्तरेण वहिश्चेत् ॥ ३ ॥

यदि गार्हपत्यायतनान् बहि प्रवर्ग्य स्यात्तदानीं दक्षिणाग्निमुत्तरेणोपविशेदिति ॥ ३ ॥

*लाट्यायने 'तमभीन्धिष्यत्सु' इत्यारभ्योत्तर सूत्र ।

**१३४२, १३४३ सूत्रद्वय एकमेव लाट्यायने ।

१३४४. [1]रुचितोघर्म इत्युक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षरन् यमध्वर्युर्ब्रूयात् ॥ ३ ॥

रुचितो घर्मः इत्यध्वर्युणोक्ते अपश्य गोपा इति यमनुवाकमध्वर्युर्ब्रूयात् तेनानुवाकेन महावीरमवेक्षेरन् उद्गातारो ब्रह्मा चेति ॥ ३ ॥

१३४५. त ह्रियमाणं यथेतमनुव्रजञ्जपेत - विश्वा आशा दक्षिण*सत् सर्वान् देवानयाडिह । स्वाहाकृतस्य घर्मस्य मधो पिबतमश्विना इति ॥ ४ ॥

त घर्मं ह्रियमाण यथेतमनुव्रजञ्जपेदिति ॥ ४ ॥

१३४६. आश्राविते उपविश्य जपेत् - अश्विना घर्मं पातं +हार्दिवानमहर्दिवाभिः ऊतिभिः । तन्त्रायिणे ×नमो द्यावापृथिवीभ्यां इति ॥ ५ ॥

१३४७. हुते यजमानं वाचयेत् अपातामश्विना घर्ममनुद्यावापृथिवी अमंसाताम् इहैव रातयः सन्तु इति ॥ ६ ॥

१३४८ घर्मशेषस्य भक्षयेत् मधुहुतमिन्द्रतमेऽग्नावश्याम ते देव घर्म नमस्तेऽस्तु मा मा हिंसी इति ॥ ७ ॥

स्पष्टानीति ॥ ५ ॥ ६ ॥ ७ ॥

१३४९ सत्रे चेत् स्यात् यजमाना उपह्वयध्वं इत्येवोपह्वानम् ॥ ८ ॥

---

*'धत्' इति लाट्यायने ।

+'अहर्द्यानि'मिति लाट्यायने ।

×मोद्यावा पृथिवीभ्यामिति लाट्यायने ।

---

1. श्रा-२-२-२८ ।

सत्रव्यतिरिक्तेषु होतरुपह्वयस्वाध्वर्यं उपह्वयस्व इति कर्मनामधेयेनोपह्वानं कार्यं[1] वाजिनाश्विनघर्माणामृत्विक्षूपहमिष्ट्वा इति वचनादिति ॥ ८ ॥

१३५०. नव सदा प्रवर्ग्योपसदः कुर्यात् ॥ ९ ॥ महावेदेः स्तंब्रयजुर्हरिष्यत्सु यजुषोपविशेत् ॥ १० ॥ विलिखिते चात्वाले यथार्थं स्यात् । ११ ॥ १३५२ उत्तरवेदिं निर्वप्स्यत्सु तूष्णीमुपविशेत् ॥ न्युप्तायां यथार्थं स्यात् ॥ १२ ॥

स्पष्टानि ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

१३५४. अग्निचित्यायां प्राग्दीक्षणीयायाः सावित्रान् होमान् होष्यत्सु यजुषोपविशेत् ॥ १३ ॥

अग्निचित्यायामित्यधिकारः । यदि क्रतावग्निचित्या स्यात् तदेत्यर्थः [2]अनुब्यात्तुदीक्षणीयाया इति वचनात् । साग्निचित्येऽपि सोमयागे दीक्षणीयाप्रभृत्येव ब्रह्मत्वमिति शङ्का स्यात्, तन्निवृत्त्यर्थं प्रागपि दीक्षणीयाया सावित्रेषूपविशेत् । सावित्रहोमस्त्वेक एवेत्या[3]पस्तव, होमानिति बहुवचनं कस्यांचिच्छाखाया होमबहुत्वादिति ॥ १३ ॥

१३५५ तेषु हुतेषूख्या मृत्तिकामाह्रियमाणामनुगच्छेत् ॥ १४ ॥

१३५६. तस्यां ह्रियमाणायामासित्वा संभृतायां यथार्थं स्यात् १५

स्पष्टे ॥ १४ ॥ १५ ॥

इति तृतीयः खण्डः

---

1 श्रा २२४२०।

2 श्रा–14-1-5। 3 आप श्रौ 15-9 3 "सावित्रेण रशनामादाय अरित्विंरास्नाति" इत्यभिमन्त्र्य इत्यादि ।

अथ चतुर्थः खण्डः

१३५७ आहवनीय चेष्यत्सु यजुषोपविशेत् ॥ १ ॥

आहवनीय शालामुखीय । तस्यायतनमिष्टकाभिश्चेष्यत्सु इत्यर्थ इति ॥ १ ॥

१३५८ तस्मिन् सञ्चित उख्यामासन्दी नैऋतीश्चेष्टका अरण्य ह्रियमाणा अनुगच्छेत् ॥ २ ॥

तस्मिन् शालामुखीयेऽध्वर्युणा चितेसति, उख्याग्नि यत्रासन्द्या पूर्वं निहित तामुख्या निधानभूतामासन्दी नैऋर्तीश्चेष्टका अरण्य प्रति ह्रियमाणा अनुगच्छेदिति । २ ॥

१३५९. निधीयमानाना दक्षिणतःस्थित्वा निहितास्वपउपस्पृश्य अनपेक्ष प्रत्याव्रजेत् ॥ ३ ॥ स्पष्टमिति ॥ ३ ॥

१३६०. अग्नि विकृक्ष्यत्सु सर्वौषध च वप्स्यत्सु तत्र गत्वा तूष्णीमुपविशेत् ॥ ४ ॥

महावेद्यामग्निक्षेत्रस्य कर्षण, तत्र बीजावपन च करिष्यत्स्वित्यर्थ ॥ ४ ॥

१३६१ तै सार्धं प्रत्यावृज्य चितीः प्रणीयमाना अनुगच्छेत् ॥

चितीश्चयनार्था इष्टका, प्रणीयमाना इत्यर्थ ॥ ५ ॥

१३६२ निधीयमानाना दक्षिणतः स्थित्वा निहितासु दक्षिणस्य पक्षस्याग्रतो यजुषोपविशेत् ॥ ६ ॥

उपधीयमानानामिष्टकाना तस्यास्तस्या दक्षिणत स्थित्वा सर्वासु समाप्तासु दक्षिणस्य पक्षस्य दक्षिणत रत्निकृष्ट उपविशेदिति ॥ ६ ॥

१३६३. लोकं पृणास्वधीयमानासु ब्राह्मणं तत्र समादिश्य यथार्थं स्यादिति शाण्डिल्यः ॥ ७ ॥

१३६४. आसीतैवेति धानञ्जय्यः ॥ ८ ॥ स्पष्टे इति ॥ ७ ॥ ८ ॥

१३६५. एवं सदा चितिषु कुर्यात् ॥ ९ ॥

एवं पञ्चस्वपि चितिषु कुर्यादिति ॥ ९ ॥

१३६६. सञ्चितकर्माणि करिष्यत्स्वाग्नावासीत ॥ १० ॥

वसवस्त्वा रुद्रै. पुरस्तात् पान्तु इत्याज्यप्रोक्षणप्रभृति मण्डूकादिकर्षणान्तानि संचितकर्माणि। तेष्वावृज्यासीतेति। एतदन्तमग्निचित्यानिमित्त ब्रह्मत्वमिति ॥ १० ॥

१३६७. सम्राडासन्दीं ह्रियमाणामनुगच्छेत् ॥ ११ ॥

प्रवर्ग्योद्वासनकाल इति शेषः ॥ ११ ॥

१३६८. *[illegible] दक्षिणतः स्थित्वा परिषिच्यमानेऽप उपस्पृश्य तैः सार्धं प्रत्यावृज्याग्निं प्रणीयमानमनुगच्छेद-प्रतिरथं जपन् ॥ १२ ॥

घर्मे परिषिच्यमानेऽप उपस्पृश्य तै.सार्धं प्रत्यावृज्य सौमिकमग्निं प्रणीयमानं आशुः शिशानः इति सूक्तमप्रतिरथसंज्ञकमध्वर्युप्रसिद्धं जपन्ननुगच्छेदिति ॥ १२ ॥

१३६९. तूष्णीमनग्निचित्या चेत् ॥ १३ ॥

अग्निचित्याभावे तूष्णीमनुगमनं न सूक्तजप इति ॥ १३ ॥

१३७०. निधीयमानस्य दक्षिणतः स्थित्वा निहिते दक्षिणाबर्हिर्वेदियजुषोपविशेत् ॥ १४ ॥

*निधियमानायां दक्षिणत. स्थित्वा इत्यन्त लाटचायने नास्ति।

अग्निनिधानानन्तरमग्निवत्युत्तरपरिग्राह परिगृह्णातीत्य-ध्वर्युभिरुत्तरपरिग्राहो विहित । तत्काले न केनचिदप्यन्तर्वेदि स्यातव्यमित्यभिप्रायेण बहिर्वेद्युपविशेदित्युक्तमिति ॥ १४ ॥

१३७१. हविर्धाने प्रवर्त्यमानेऽनुगच्छेत् ॥ १५ ॥ स्पष्टमिति ॥

१३७२ परिवार्यमाणयोस्तत्रैव गत्वाऽऽसीत ॥ १६ ॥

१३७३ उच्छ्रितायामौदुम्बर्यां यथार्थं स्यात् ॥ १७ ॥

१३७४. वै*दिकर्मप्रभृतिरग्नीषोमप्रणयनात् प्रणयनात् ॥ १८ ॥

अथवाग्निप्रणयनानन्तरं यद् वेदिकर्मोत्तर परिग्राह तत् प्रभृत्यग्नीषोमप्रणयनात् पूर्वं यथार्थब्रह्मा स्यात् । [1]हविर्धान-प्रवर्तनप्रभृति कर्मानुसन्धानं कुर्यात् वा न वेत्यर्थ. ॥ १६ ॥ ॥ १७ ॥ १८ ॥

चतुर्थः खण्डः

अग्निनाऽऽरोपिते दीपे ब्रह्मत्वस्य विधिं प्रति ।
चतुर्थे पटले स्वर्धं सोमयागस्य कीर्तितम् ॥

इति चतुर्दशः पटलः समाप्तः



अथ पञ्चदशः पटल
प्रथम खण्ड

१३७५. अग्नीषोमौ प्रणेष्यत्सु वेदिमाक्रामेन्मन्त्रेण ॥ १ ॥
स्पष्टम् ॥ १ ॥

*एतत् सूत्रं लाट्यायने नास्ति ।

1 च तयोरत ब्रह्मा त्व कुर्यात् ।

१४०३. आज्येष्वेव गृहीष्यमाणेषु अत्रोपनिशेदिति शाण्डिल्य ॥

आज्यग्रहण वेलायामवाग्नीध्रीयान्निष्क्रम्य हविर्धानस्य पश्चिमेन पूर्वेण वा उपविशेदिति ॥ ११ ॥

१४०४ अध्वर्युणोक्तो वाच यच्छेत् आतृतीय प्रातरनु*वाकस्य ॥

प्रातरनुवाकस्य प्रथमायास्तृतीय यद्वचन आतस्मात् वाग्यत स्यादिति । अथवा आतृतीयमिति आतृतीया ऋच इत्यथ ॥ १२ ॥

१४०५ आ वा परिधानीयायाः ॥ १३ ॥

अथवा प्रातरनुवाकस्य परिधानीयान्त वाग्यत स्यात् इति ॥ १३ ॥

१४०६ आ वा उपांशु अन्तर्यामयोर्होमात् ॥ १४ ॥

स्पष्टमिति ॥ १४ ॥

१४०७ आ वा बहिष्पवमानात् ॥ १५ ॥

प्रातरनुवाकप्रभृति बहिष्पवमानपर्यन्त इति ॥ १५ ॥

१४०८ हविर्धान चेत्पूर्वेणगतः स्यात् उपांश्वन्तर्यामौ होष्यत्सु उदङ्ङतिक्रम्य तिष्ठेत् ॥ १६ ॥

यदि हविर्धान पश्चिमनोपविष्ट तदा उपाश्वन्तर्यामयो होमकाले स्थान न कार्यमिति ॥ १६ ॥

१४०९ दीक्षितश्चेदातयोर्होमात् ॥ १७ ॥

दीक्षितस्य ब्रह्मणो होमसमाप्ति यावत, स्थान न कार्यमिति ॥ १७ ॥

*अनुवाकस्य प्रथमाया, इति लाट्यायने ॥

१४१० नि: सर्पत्सु अन्वारभेत ॥ १८ ॥

बहिष्पवमानार्थं हविर्धानाग्नि सर्पत्सु अध्वर्य्वादिषु, प्रति-हर्तार अन्वारभेत ब्रह्मा । तत् पू[1]र्वमेव सूत्रकृतोक्तमिति ॥ १८॥

१४११. तस्य प्रस्तोत्रा समानं कर्म प्रागुपवेशनात् ॥ १९ ॥

प्रवृतहो[2]मादि कर्म तस्य प्रस्तोत्रा समानमुपवेशनवर्जमिति -

१४१२. आस्तावं प्राप्य अनासन्नो यजुषोपविशेत् प्रस्तोतारं प्रति ॥२०॥

बहिष्पवमान स्तुतिदेश प्राप्य, उद्गातृभ्य किंचित् विप्रकृष्ट प्रस्तोतार अभिमुखो [3]यजुषोपविशेदिति ॥ २० ॥

इति द्वितीय खण्ड

अथ तृतीयः खण्डः

१४१३. [4]रश्मिरसीत्येतावन्तुवाको, स्तोमभागाः ॥ १ ॥

तस्मा एतान् स्तोमभागानब्रवीत् इति [5]ब्राह्मणे स्तोमभागपदेन रश्मिरसि इत्यादय समाख्यायन्ते, इत्यर्थं ॥ समाख्याप्रयोजनञ्च वक्ष्याम इति ॥ १ ॥

१४१४. तै: पृथगनुपूर्वं स्तोत्राण्यनुमन्त्रयेत ब्रह्मन्नोन्यान: प्रशास्त: इत्युक्त ॥ २ ॥

बहिष्पवमानादीनि स्तोत्राण्यनिरिक्तस्तोत्रपर्यन्तानि त्रयस्त्रिंशत् । तानि, तैस्तोमभागै तावन्मन्त्रै: क्रमेणपृथगनुमन्त्रयेत ॥ २ ॥

तत्र विशेष वक्ष्याम इति—

---

1 ब्रा-3.3 11 । 2 ब्रा-3 3-17 । 3 ब्रा-2 4-20 ।
4. ता-ब्रा-1 9-10 । 5 ता ब्रा-१५ ५ २४ ।

१४१५. ऊर्ध्वं प्रथमात् रात्रिपर्यायात् यत्र स्यात् अमुष्मैत्वाइति तं जिन्व इति तत्र ब्रूयात् ॥ ३ ॥

प्रथमाद्रात्रिपर्यायादूर्ध्वं स्तोमभागेषु यत्र यत्र अमुष्मै त्वा इति पदद्वयमस्ति 'अमुष्मा'इति चतुर्थ्यन्तानां पदानां उपलक्षणं, तत्र पदद्वयानन्तरमध्ययनाभावेऽपि तं जिन्व इति ब्रूयात् । तमिति द्वितीयान्ततया प्रयोज्यानां त्रिवृदादि पदानामुपलक्षणं । तेनैवं प्रयोग—त्रिवृदसि त्रिवृतेत्वा त्रिवृतं जिन्व, प्रवृदसि प्रवृते त्वा प्रवृतं जिन्व इति ॥ ३ ॥

१४१६. सवितृ प्रसूता बृहस्पतये स्तुत इत्येकैकस्यान्तः ॥ ४ ॥

तेषु सवितृप्रसूता बृहस्पतये स्तुत इति प्रत्येकमनुषञ्जनीयमिति ॥ ४ ॥

१४१७. पूर्वेषां च ॥ ५ ॥

पूर्वेषां रश्मिरसि इत्यादीनां विंशतिमन्त्राणा[1]मपि सवितृप्रसूता इत्येवान्त । ननु अध्ययनसिद्धमेवैतत्र वक्तव्यम् । सत्यं; वक्ष्यमाणविकल्पदर्शनार्थं अनुवादो मन्त्रपरिमाणज्ञानार्थंश्चेति ॥ ५ ॥

१४१८. [2]भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओम् इत्येतद् ॥ अधिकं कुर्यात् ओंकारं वा ॥ ६ ॥

सवितृ प्रसूताः बृहस्पतये स्तुत इत्यस्यानन्तरमधिक निषेशयेत् विकल्पेनेति ॥ ६ ॥

१४१९. यथाम्नायं सन्धेरनुमन्त्रयेत ॥ ७ ॥

1. ता ब्रा-1-9-1 to 12, 1-10 1 to 8 । 2. ता.१२-२-२८ ।

[1]वसुकोऽसि इत्यादि सन्धिस्तोत्रानुमन्त्रणमविकृतमेवेति ॥

मतान्तरमाह—

१४२०. त्रेधं विभजेदिति धानञ्जय्यः - वसुकोऽसि वस्यष्टिरसि वेपश्रीरसि । वसुकाय त्वा वस्यष्टये त्वा वेपश्रिये त्वा । वसुकं जिन्व वस्यष्टिंजिन्व वेपश्रियं जिन्व सवितृप्रसूता बृहस्पतये स्तुत इति ॥ ८ ॥

वसुकोऽसि वसुकाय त्वा वसुकं जिन्व इत्येवमर्थः संबन्धः सोयमेको विभागः, एवमुत्तरावपीति ॥ ८ ॥

१४२१. स्तुतदेवेन सवितृप्रसूताःइत्यनुमन्त्रयेतमानसंवाजपेये च बृहत् ॥ ९ ॥

अविवाक्ये दशमेऽहनि मानसं स्तोत्रं वाजपेये च बृहदुत्तमं स्तोत्रं स्तुतदेवेन इत्येवमनुमन्त्रयेतेति ॥ ९ ॥

१४२२. आनन्तर्येणेतराणि । १० ॥

इतराणि मानसवाजपेयान्त्यव्यतिरिक्तानि सर्वसंस्थासु संहृत्य त्रयस्त्रिंशदेवस्तोत्राणि, तानित्रयस्त्रिंशता स्तोमभागैः क्रमेण अनुमन्त्रयेत । ननु च अत्यग्निष्टोममेकं अधिकमस्ति । तत् कथं त्रयस्त्रिंशत् स्तोत्राणि ? उच्यते । उक्थ्यानन्तरमुत्पन्नस्यषोडशिनः स्तोत्रस्य, (ततः) तत्रापकृष्य प्रयोगमात्रं न पुनरपूर्वं स्तोत्रान्तरमस्तीति ॥ १० ॥

अथ नैमित्तिकेषु स्तोत्रेषु कथमनुमन्त्रणमत आह—

१४२३. ईशात् स्तोत्राणि पूर्वेण तद्वृद्धेः ॥ ११ ॥

---

1. ता-बा-१-१०-११॥.

ईध्रशब्दो निमित्तवचन । निमित्त च सोमातिरेक. । यदि प्रात सवनात् सोमोतिरिच्येत, इति ब्राह्मणेन[1] निमित्तानि विहितानि । पूर्वेण पूर्वस्तोत्रस्य स्तोमभागेनानुमन्त्रयेत नित्यस्तोत्रस्य वृद्धिमात्रत्वात् तस्येति ॥ ११ ॥

१४२४. परेण वा संनिकामनात् । १२ ॥

पश्चाद्भाविना वा स्तोमभागेनानुमन्त्रणम् । कुत ? [2]माध्यन्दिन वा एष सवन निकामयमानोऽभ्यतिरिच्यते इतीतरस्य माध्यन्दिनादेर्निकामनश्रवणात् (निकामनमिच्छति) ॥ १२ ॥

१४२५ मानसवद्वाऽतिरिक्तसामान्यात् ॥ १३ ।

अथवा मानसस्तोत्रवदनुमन्त्रणमतिरिक्तत्व सामान्यात् । अग्निष्टोमादतिरिक्तं हि मानस । नैमित्तिकमपि नित्यादतिरिक्तमिति ॥ १३ ॥

१४२६ सर्वानुमन्त्रणेन वानुक्तत्वात् ॥ १४ ॥

अथवा य पूर्वमिष्टिप्रकरणे सर्वानुमन्त्रणशब्दो मन्त्र उक्त तेनवानुमन्त्रणमस्यस्य अनुक्तत्वादिति ॥ १४ ॥

१४२७. यद्यत् स्तोत्रं लुप्यते तद्वैव स्तोमभागेन ॥ १५ ॥

[3]यदि पर्यायानभिव्युच्छेत् सर्वेभ्य एक सभरेयु* इत्याश्वलायनोक्ते सभारपक्षे यानि स्तोत्राणि लुप्तानि यश्च षोडशी

*आश्वलायनसूत्रस्यायमर्थ —

"यदा सर्वे पर्याया प्रयुक्ता न भवन्ति, यद्येवमाशङ्का स्यात् अतिक्रान्तप्रायारात्रि सा पर्यायाणा आश्विनस्य वा अप-

1. ता ब्रा–९ ७ १ । 2 ता ब्रा ९-७-२ । 3. आश्व ६-६-१ ।

वैकल्पिकत्वाल्लुप्यते तानि स्वकीयैः स्तोमभागैः सहैव लुप्यन्ते । न तैः शिष्टानुमन्त्रणं कार्यं, क्रमसङ्ख्याभ्यां नियतत्वात् स्तोमभागानाम् । स्तोत्रस्यासाधारणो भागः स्तोमभागः इति हि समाख्या । एतदेव हि समाख्याप्रयोजनम् । ननु च प्रधानलोपे गुणलोपो न्याय्य एवेति, न वक्तव्यमित्येतत् । सत्यम्, आपस्तम्बस्तु [1]स[*]प्तदश वाजपेये इति वदन् तं नियमं मन्यते तदनिष्टमिति दर्शयितुमेतदुक्तमिति ॥ १५ ॥

१४२८. +स्तुते बहिष्पवमाने वपायां हुतायां मार्जयित्वा धिष्ण्यानुपस्थाय उक्तं सदस्युपवेशनम् । १६ ॥

[2]दक्षिणार्धे तु सदस पूर्वमुपवेशनम् । इत्यादि पद्पटल्यामुक्तं अनुसंधेयमिति ॥ १६ ॥

१४२९. स्तुतशस्त्रयोर्वाचं यच्छेत् ॥ १७ ॥ स्पष्टमिति ॥ १७ ॥

१४३०. अनूच्यमाने च सर्वत्र ॥ १८ ॥

सर्वेषु पुरोनुवाक्यामनोतानुप्रवचनेषु वाग्यमनमिति १८

१४३१. वषट्कृते विसृजेत् ॥ १९ ॥ स्पष्टमिति ॥ १९ ॥

---

यष्टेति तदा सर्वेभ्य पर्यायेभ्यः एक पर्यायं संहृत्य कुर्युः" । इति नारायणवृत्ति. । :

*'सप्तदशवाजपेयेऽतिरात्रे च । एकविंशतिः सत्राहीनानां आप-श्रौ-११-१०-१३ ।

+लाट्यायने स्तुते बहिष्पवमाने तत्रैव गत्वासीत इत्येकं सूत्र, वपयामित्यारभ्य अन्यत् सूत्रम् ।

---

1. आप-श्रौ-११-१०-१३ । 2. आ-४-४-६ ।

१४३२ अवभृथादुदेत्यानुष्यात् यज्ञशेषम् ॥ २० ॥

यज्ञशेषमन्वासीतेत्यर्थः ॥ २० ॥

१४३३. अहर्गणेष्वेवं सदाऽति प्रैषेणप्रशास्ता वाचं यमयति राजानं रक्ष इति चाह तदुभय कुर्यादावसतीवरीणां परिहरणात् ॥

प्रशास्ता मैत्रावरुण, स एवमनुप्रैषेणाधवलामन्त्रोक्तेन हारियोजनप्रचारानन्तर वाच यमयति-[1]महान् वाच यच्छ इति ॥

१४३४. तत्सत्रे पर्यायेण कुर्युरहीने तु प्रशैव ॥ २२ ॥

सत्रेषु यजमाना पर्यायेण तदुभय कुर्यु । प्रथमे दिवसे कश्चित् द्वितीये अपर इत्येव । अहीनें तु प्रशैव प्रतिदिवस उभय कुर्यादिति ॥ २२ ॥

इति तृतीय खण्ड

अथ चतुर्थः खण्डः

१४३५. वाजपेये पृष्ठयस्य स्तोत्रमनुपन्न्य सदस्य प्रशासन उपवेश्य निष्क्रामेत् ॥ १ ॥ पूर्वेणाग्नीध्रीयं स्थूणा निखाता स्यात् २

अध्वर्युणेति शेष ॥ १ ॥ २ ॥

१४३७. दक्षिणेन मार्जालीय अन्तर्वेदि इति शाण्डिल्य ॥ ३ ॥

१४३८ तस्यामौदुम्बरं सप्तदशारं रथचक्र प्रतिमुक्त स्यात् ॥ ४ ॥

स्पष्टे इति ॥ ३ ॥ ४ ॥

१४३९. तदभावे यत्किञ्चित् रथचक्रम् ॥ ५ ॥

उदुम्बराभावे यदेव किञ्चित् रथचक्र सप्तदशार स्थूणाया प्रतिमुक्त स्यादिति ॥ ५ ॥

---

1. आप-16-11-16।

१४४०. [1]तस्मिन् बाहू आदध्यात्-देवस्याहं सवितुः प्रसवे सत्यसवसो बृहस्पतेर्वाजिनो वर्षिष्ठमधि नाकं रुहेयं इति ॥ ६ ॥

तस्मिन् रथचक्रे बाहू आदध्यान्मन्त्रेणेति ॥ ६ ॥

१४४१. रथेष्वाजिं धावत्सु आविर्मर्याः इति गायेदाकारमुद्गीथादौ लुप्त्वा तस्य स्थाने प्रत्याहृत्य द्व्यक्षरं अग्मन् इति ॥ ७ ॥

[1]लक्ष्यमुद्दिश्य रथेषु धावत्सु साम गायेत् । आ वाजं वाजिनो अग्मन् इत्युद्गीथादावाकारमुपसर्गं लोपयित्वा तस्य स्थाने अग्मन्निति द्व्यक्षरं प्रत्याहृत्य गायेत् । अग्मन् वाजं वाजिनः इति । किमर्थः पुनः'आ'लोपः । गमनकाले मन्त्रेण गमनमेव प्रतिपादनीय, न पुनरागमनमिति लोप उक्त इति ॥ ७ ॥

१४४२. गतेषु [redacted] ॥ ८ ॥

अथवा रथेषु लक्ष्यं प्रतिगतेष्वेव गायेन्न धावत्सु । अग्मन् इति भूतनिर्देश विरोधादिति ॥ ८ ॥

१४४३. [1]यथाधीतमाधावत्सु ॥ ९ ॥

प्रत्यागच्छत्सु रथेषु यथाधीतमाकारमलुप्त्वैव गायेत् तस्यागमनाभिरूपत्वादिति ॥ ९ ॥

१४४४. आस्तुतेषु वा ॥ १० ॥

आगतेष्वेव गायेत्, भूतनिर्देशादेवेति ॥ १० ॥

१४४५. सर्वत्र वा यथाधीतम् ॥ ११ ॥

गमने चाऽऽगमने चेत्यर्थः । सर्वथापि द्विरेव गानमिति परिवर्तयन् गायेदिति ॥ ११ ॥

---

1. लक्ष्यमुद्दिश्य ।

११४६ गानकाले रथचक्रं बाहुभ्यां प्रदक्षिणं परिवर्तयन् गायेत् ॥

१४४७ परिवर्त्य गायेत् गीत्वा वा परिवर्तयेत् ॥ १३ ॥

अथवा परिवर्तनात् पूर्वकालमुत्तरकालं वा गानं, न समानकालमिति ॥

१४४८ *गायतो [1]वाऽन्यस्त परिवर्तयेत् ॥ १४ ॥

ब्रह्माणि गायति सति, रथचक्रमन्य परिवर्तयेदिति ॥१४॥

१४४९ उदङ्ङवरोह मन्येत विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि ॥ १५

उदङ्मुखो भूत्वा रथचक्रादवरूढमात्मानं मन्येत । अत एव गम्यते न प्रत्यक्षेणारोहणमवरोहणं चेति ॥ १५ ॥

१४५०. अभिदक्षिणमावृत्य सदः प्रविशेत् ॥ १६ ॥ स्पष्टमिति ॥

१४५१ तत्रासीनो हिरण्यस्थालं मधु च नाना प्रतिगृह्णीयात् ॥१७

हिरण्यस्थालं मधुनापूर्णं ब्रह्मणे [2]दद्यादिति वाजपेये वक्ष्यति । तत्र स्थालस्य प्राधान्यात् तस्यैव मन्त्रेण प्रतिग्रहो, न मधुन इति पाङ्क्तनिवृत्त्यर्थं नानेति वचनं इति ॥ १७ ॥

१४५२ ऋतपेये च दक्षिणां चमसम् ॥ १८ ॥

ऋतपेये क्रतौ सोमचमसो दक्षिणा इति [3]ब्राह्मणम् । तत्रापि सोमरसं तत्पात्रं च दक्षिणाभूतं पृथगेव प्रतिगृह्णीयात् ॥

१४५३ ब्राह्मणाय मधु दद्यान्निदधीत हिरण्यम् ॥ १९ ॥

आत्मार्थमेव हिरण्यस्थालं निदधीतेति ॥ १९ ॥

---

* १४४८, १४४९ १४५० सूत्रत्रय एकमेव लाट्यायने ।

1 क ख-अन्य परिवर्तयेत । 2 द्रा-१४ ३ २७ । 3 ता-ब्रा १८-२ १० ।

१४५४. त्रिष्टुप्छन्दसा सर्वभक्षं चमसं भक्षयेत् ॥ २० ॥

सोमचमसस्य दक्षिणार्थत्वादप्राप्तमेवमन्त्रेणभक्षणं, विधीयत इति ॥ २० ॥

१४५५. तं प्रतिगृह्णीयादिति स्थविरो गौतमः ॥ २१ ॥

तं सोमरसमेव प्रतिगृह्णीयान्न पुनः पात्रस्य पृथक् ग्रहणं भक्षः । कुतः । हुतोदेयः इति [1]वचनात् सोमरसस्यैव दक्षिणात्व-प्रतीतेरिति गौतम इति ॥ २१ ॥ गौतममतेनैव चमसभक्षणे मन्त्रान्तरमाह ॥

१४५६. कस्त्वा ददाति सत्वा ददाति कस्मै त्वा ददाति तस्मै त्वा ददाति कस्त्वा कं भक्षयामि इति भक्षयेत् ॥ २२ ॥

१४५७. *वाग् देवी सोमस्य तृप्यतु इति वा ॥ २३ ॥

१४५८. **उभाभ्यां वा उभाभ्यां वा ॥ २४ ॥

गौतमस्य मतेन मन्त्रद्वयमिति ॥ २२ ॥ २३ ॥ २४ ॥

चतुर्थः खण्डः

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
द्वितीये दशके वृत्तः पञ्चमः पटलोऽधुना ॥

पञ्चदश. पटलः समाप्तः+



*१४५५, १४५६, १४५७ एकमेव सूत्रं लाटचायने ।

**एतत्सूत्रं लाटचायने नास्ति ॥

+ख. पञ्चमाध्यायः समाप्तः

1. ब्रा-२४-१-२२ ।

## षोडशः पटलः

### प्रथमः खण्डः

पूर्वस्मिन् पटले स्तोमभागेषु मन्त्रस्वरूपं परिमाणं च दर्शितम् । तद्वत् सन्तनिसाम्नः परिमाणं तदुत्तरा परिमाणं च दर्शयितु प्रस्तौति, 'सन्तनि चोद्यमानमिति' । तत्र प्रथमं सन्तनिनः कथं गानं कार्यमिति विचार्यते । ननुचाध्ययनसिद्धमेव गानं, कोयंविचारः? उच्यते । द्विविधं तावत् सामाध्ययनं, छान्दसमूहश्चेति । तत्र छान्दसमपौरुषेयमिति निर्विवादं, तद्वेदसामेत्याचक्षते । ऊहेपुनरस्ति विप्रतिपत्तिः । पौरुषेयमिति मीमांसकाः, यथोक्त भगवता जैमिना, *सामानि मन्त्रमेके स्मृत्युपदेशाभ्या, तदुक्तं दोषमिति । अपौरुषेयमिति निदानकारः** ।, तत्र अपौरुषेयत्वपक्षे यथाध्ययनमूहश्शिरसा धारणीयो न कश्चिद्, विचार्यः । पक्षान्तरे तु अस्ति विचारावकाश, पुरुषाधीनत्वादूहस्येति मन्वान सूत्रकारो विचारमारभते—

१४५९. सन्तनि चोद्यमानमेकैकस्यां सर्वम् ॥ १ ॥

इह तावच्छान्दसाध्ययने रथन्तरादीनि सामान्येकस्यामध्यधीतानि ऋतु प्रकरणे तृचान्यन्यानि उपादाय रथन्तर भवति

---

*"सामानि मन्त्रमेके स्मृत्युपदेशाभ्याः" (जैमिनि-९-२-१) अत्र ऊहस्य अपौरुषेयत्वे, यद्योन्या तदुत्तरयो इति विधिः व्यर्थः स्यात् । उत्तरयोरपि अध्ययनादेव सिद्धे, इत्युक्तम् ॥

**"ऋषिकृतस्त्वूहा अनृषिकृत इति वै खल्वाहुः" इत्यारभ्य "एतान्येव सामसु उक्तानीत्याचक्षते" इत्यन्तेन खण्डद्वयेन प्रतिपादितम् ॥ निदानसूत्र-प्र-१ ख-१, २ ॥

बृहद्भूवतीत्यादिभिःवचनैः तृचेपुविधानाद्योनिवद्गूहेन प्रत्यृचं गीयन्ते। सन्तनि पुन. छान्दसएवाध्ययने तृचे गीयते, एपस्य धारया सुत इति। तदेव पुनः दशरात्रस्य पञ्चमसप्तमयोरह्नोः असाव्यंशुर्मदाय वृषापवस्वधारयेति च तृचयोः विहितं "सन्तनि-भवतिसन्ततया' इति । तत्र सन्देहः, किमेनच्छान्दसपाठे तृचव्या सक्तं एकं साम तृचान्ते समाप्यते, यथा रथन्तरं स्वयोन्यां सर्वेषु पादेषुव्यासक्तं ऋगन्ते समाप्यते । किं वा तृचे समाप्यत इति । यदि व्यासक्तं ततः तृचेगीतं सर्वमेकं सामेति कृत्वा तस्य सर्वस्य वृषापवस्वधारयेत्येकैकस्यां गानं प्राप्नोति । अथ छान्दसपाठे प्रत्यृचं समाप्यते । ततस्तद्वदेव वृषापवस्वधारयेत्यत्रापि तृचे गानमिति । किं प्राप्त? तत्र प्रतिपद्यते । 'सन्तनि चोद्यमानं एकै-कस्यां सत्रे गेयमिति' । कुत. ? छान्दसपाठे तावत् तृचेव्यासक्त-मेकं सामेति प्रतीम, अन्यथा तृचेगानमनर्थकं रथन्तरादिवदेक-स्यामेवाध्येतव्यमिति ॥ १ ॥

भवत्वेवं, तथापि किमित्येकैकस्यां गीयते । वृषापवस्वधारयेति तृच एव सर्वंगीयताम् । यथेदानीमूहोऽधीयते। अत आह—

१४६०. स्तोमसंभवात् ॥ २ ॥

ननु एवं छान्दसपाठे तृचेगीतस्य महत साम्न एकस्यामृचि गाने सति साम्न सबाध स्यात्। तृचश्च शैथिल्य इति सशरविशेशौ स्याता। अत आह—

१४६१. तथा चान्यानि स्वनिच्छन्दस्सु ॥ ३ ॥

अन्यान्यपि सामानि स्वच्छन्दःसु स्वयोनिसदृशछन्दस्सु विसदृशछन्दःसु च दृश्यन्ते। यथा ककुप्सु रथन्तरम् ॥ ३ ॥

ननु तद्वचन बलात् सत्य, इहापि हेतुबलात् सशरविशेशौ सोढव्याविति भाव। उक्तो हि हेतुरन्यथा स्तोमो न सम्पद्यतीति। यद्येव सन्तनीत्यन्वर्थसज्ञा न स्यात् प्रत्यृच कृत्स्नगाने सन्तानाभावात्तृचे पुनर्न्यौखज्यमाने तत्सिद्धि, अत आह—

१४६२ सन्तनीति यद्वाहिष्ठीयवत् ॥ ४ ॥

वृषापवस्वधारयेत्यत्र सन्तानाभावेऽपि योनिभूते तृचे द्व्यासञ्जमानत सन्तानात्सन्तनीति व्यपदेश, यथा योन्या यद्वाहिष्ठपदसमन्वयादन्यत्र तदभावेऽपि यद्वाहिष्ठीयमिति साम्नो व्यपदेश इति। तदेव प्रत्यृच गेयमिति येक प्रकार ॥ ४ ॥

प्रकारान्तरमाह—

१४६३. त्रिषु वा तृचेष्वेकर्धस्तृचे दर्शनात् ॥ ५ ।

यथैकस्यामृचि दृष्ट रथन्तरमुत्तरयोरप्यृचोरेव गीयते। सादृश्यस्य सपरयर्थं, एवं तृच दृष्ट सन्तन्युत्तरयोरपि तृचयोरेव गेय, एवसति सशरविशेशौ परिहृतौ भवत, सन्तनिव्यपदेशश्च समञ्जस इति भाव। तत्र वृषापवस्वधारयेत्येकस्तृच, अपरौ द्वौ तृचौ आहर्तव्यौ ॥ ५ ॥

नन्वेव तृचद्वयाहरणे चतुर्विंशस्तोमसख्या विरोध स्यात्, नेत्यह्

१४६४. साम्ना च स्तोमसंख्यानात् ॥ ६ ॥

न संख्याविरोधोऽस्ति । न हि क्वचिदप्यृक्संख्यया स्तोमः संख्यानं, तथासत्यतिप्रसङ्गः, एकस्यापि द्वयोस्समाप्तौ स्तोत्रीयद्वयप्रसङ्गः । तथा क्वचिद्व्यर्धर्चे साम्नः समाप्तावपि ऋचोरसमाप्तत्वादेकापि स्तोत्रीया न स्यात्, यथा प्रत्नं पीयूषं पूर्व्यमित्यामहीयवस्य । तस्मात्साम्नां स्वरूपतोऽभ्यासतश्च यावतीसंख्या सैव स्तोमसंख्यानमिति । तृचद्वयाहरणेऽपि न स्तोमविरोधः तृचे सामसमाप्तेरेकर्चतुल्यत्वात् एकैव स्तोत्रीयेति न कश्चिद् दोष इति ॥ ६ ॥

सिद्धान्तमाह—

१४६५. तिसृष्वाचार्याः स्मृतेर्यथान्यानि सामानि ॥ ७ ॥

नैकैकस्यां सर्वं गेयं, नापि त्रिपुतृचेषु । किन्तु छान्दसपाठवदेव तिसृषु गेयं, यथा रथन्तरं । कुतः? छान्दसपाठे प्रत्यृचं सामसमाप्तेः, सैवकुतइतिचेत्, वसिष्ठादेरूहकारस्य स्मृतेरिति ब्रूमः । स्मृतेरेव किं मूलमिति चेत्, प्रत्यभिज्ञेति ब्रूमः । छान्दसपाठे यथा प्रथमायामृचि सन्तनिनो गानं तथैवोत्तरयोरपि प्रत्यभिजानीमः । प्रस्तावस्तु केवलमवृध्यते, तस्मात् सन्तनिनो न कश्चिद्विशेषस्सामान्तरैरिति ॥ ७ ॥

१४६६. सन्तानाच्च सन्तनि ॥ ८ ॥

किं च सन्तानात् सन्तनीत्युच्यते । एकैकस्यां सर्वगानपक्षे तत्सर्वथाऽनुपपन्नं । ननु च भवत्पक्ष एव सन्तानानुपपत्तिः । प्रत्यृचं सामसमाप्तेः । नैवं, तत्रापि इदमेवोत्तरं "सन्तानाच्च सन्तनीति" । सत्यं, प्रत्यृचं सामसमाप्तिः, किन्तु प्रथमप्रस्ताव-

मेवोक्तम्। ननु तत्र सन्तनिविषय, उच्यते। सन्तनियज्ञमपत्य शाक्वरवर्णमिति साम चतुष्टय छान्दसपाठे तृचेषु दृश्यते। तेषु सर्वेष्वप्युत्तरयो प्रस्तावो न दृश्यते। तेष्वेकत्रदृष्ट वचन इतरेष्वपि भवति, तुल्यन्यायत्वादधिक विवक्षाया सन्तनि चोद्यमान मिति सूत्रे सन्तनिन प्रस्तावस्य ॥ १४ ॥

तदिदानी अधिक वक्तुमारभते—

१४७३ तस्य स्तोत्रादावावृत्तिषु प्रस्ताव पर्यायादिषु वा ॥ १५ ॥

गवामयनस्य मध्यमेऽहनि पृष्ठेषु ब्रह्मसामत्वेन सन्तनि विहितमार्षेय कल्पे अस्ताविम-मपूर्वमिति सन्तनीति। तच्चावृत्तिस्तोत्र सप्तदशस्तोम। तत्रदमुच्यते, तस्य सन्तनिन आवृत्तिस्तोत्रेषु स्तोत्रोपक्रमे प्रथमगाने सकृदेव प्रस्ताव पर्यायादिषु वा न पुन पुनरिति। कुत एतत्? सन्तत गायतीत्यत्र पक्षद्वय गान सान्तत्यविधिरित्येक पक्ष। प्रथमगानेन सन्ततमुत्तराणि गानानि गायेत् इति गानसान्तत्यस्यैव श्रुते, ऋक्सान्तत्यविधिरिति पक्षान्तरमिति। प्रथमया सन्ततमुत्तरे ऋचौ गायेन्नपृथक् पृथक् प्रस्तुयादिति। उभयथापि पवमाने न कश्चिद्विशेष आवृत्त्यभावात् आवृत्तिस्तोत्रे त्वस्ति विशेष। तत्र गानसान्तत्य पक्षे इद सूत्रमिति ॥ १५ ॥

१४७४ सर्वत्र प्रथमायामिति धानञ्जय्य ॥ १६ ॥

ऋक् सान्तत्यविधिरिति धानञ्जय्यमतम्। कुत? उत्तरयोरेवहि छान्दसपाठे प्रस्तावलोपो दृश्यते। न प्रथमाया, तेन यावत् कृत्व प्रथमा गीयते तत्र सर्वत्र प्रस्ताव कार्य इति॥१६॥

अथ प्रस्तावरहितता कथ गानमत आह—

१४७५. निधनवृता प्रतिहारवत्योऽप्रस्ताव्याः ॥ १७ ॥

आदित आरभ्य निधनस्वरेण प्रस्तावरहिता सर्वे गायेयु । प्रस्तावत् प्रतिहारस्यापि लोपमाशक्योक्त प्रतिहारवत्यो भवेयुरिति ॥ १७ ॥

१४७६. धानञ्जय्येन प्रथमायां शाण्डिल्य उत्तरे तु स्तोत्रीये विष्टावमुखेष्वेवाप्रस्ताव्ये विष्टावेषु चैकेषु ॥ १८ ॥

धानञ्जय्येन सप्रतिपन्न शाण्डिल्य । यथा धानञ्जय्येनोक्त, तथैव प्रथमाया सर्वदा प्रस्ताव कार्यो न तत्र विवाद, उत्तरयोस्तु यदा त्रिस्त्रिर्वचन, तदा विष्टावमुखे प्रथम एव वचने प्रस्तावो न भवति । द्वितीयतृतीययोस्तु वचनयोर्भवत्येव प्रस्ताव । तथा एषुविष्टावेषु उत्तरस्तोत्रीये अप्रस्ताव्ये प्रस्तावरहिते भवत इति शाण्डिल्यमतम्, तस्य किं प्रमाण? ऋगन्तरापेक्षया ऋगन्तरस्य सन्तानविधि न पुनः एकस्या एकर्च, पुन पुनरभ्यासेसान्तत्यविधिरिति । तेन यदा प्रथमामृच समाप्य द्वितीयामारभते तदा प्रस्तावलोप, यदा द्वितीया समाप्य तृतीयामारभते तदा च लोप । अन्यत्र सर्वत्र न लोप इत्युक्त भवतीति ॥ १८ ॥

१४७७. त्रिवृत् स्तोमे च परिवर्तिनीविधानम् ॥ १९ ॥

आदित्यानामयेन, व्यूढाग्निष्टोमदशरात्रे पञ्चमसप्तमयोरह्नो पृष्ठेषु ब्रह्मसामत्वेन बार्हद्गिरस्यर्क्षुसन्तनि काण्वस्यर्क्षु सन्तनोति कल्पकार । उभयत्रापि त्रिवृदेवस्तोम, तत्रत्रिवृत परिवर्तिनी विष्टुति कार्या। न पुनरुद्यती विष्टुति । तथा

सत्युत्तरयोः पृथक् हिंकारेण प्रस्तावात्छन्दानकरणाशक्तेरि-त्यभिप्राय इति ॥ १९ ॥

१४७८. उभयोः स्तोत्रीययोः छन्दस्तो विप्रतिपत्तिः ॥ २० ॥

आवृत्ति स्तोत्रीयेपि प्रस्ताविमन्मपूर्व्यमित्यादि प्रगाथेषूत्त-रयोः स्तोत्रीययोश्छन्दोविप्रतिपत्तिराचार्याणां भवति ॥ २० ॥
तामेव दर्शयति–

१४७९. द्विपदे स्यातामप्रस्ताव्ये ककुभौ प्रस्ताव्ये ॥ २१ ॥

आवृत्तिस्तोत्रेषु सन्तनिन उत्तरयोर्मतभेदेन प्रस्तावलोपः-तत्कारण चोमत । तत्र यदाऽप्रस्ताव्ये प्रस्तावरहिते भवतः तदा ते द्विपदे एव स्याताम् । समिन्द्रो रायो बृहतीरनूनुतेति विष्टा-रपङ्क्तेः पूर्वोर्द्धं एकाद्विपदास्तोत्रीया, उत्तरोर्द्धं इतरा द्विपदे इति, यदा ते प्रस्ताव्ये प्रस्तावयुक्ते भवतस्तदा ते ककुभौ स्यातामस्ताविमन्मपूर्व्यमिति बृहत्या उत्तमं पाद पुनः पुन-रभ्यस्य रथन्तरवदुत्तरे ककुभौ कुर्यादिति । प्रस्तावयुक्तः पूर्व-पदाभ्यास इति मन्यते ॥ २१ ॥

१४८०. बृहत्यौ शाण्डिल्यः ॥ २२ ॥

नौधसप्रगाथवदुत्तरे बृहत्यौ प्रस्तावयुक्ते कुर्यादिति शाण्डिल्यः इति ॥ २२ ॥

१४८१. ककुभावप्रस्ताव्ये तथा सति ॥ २३ ॥

तथा सतीति कोऽर्थः? यदि प्रस्तावपक्षे बृहतीकारे तथा सति प्रस्तावरहिते ककुभावेव स्यातामित्यर्थः ॥ २३ ॥

१४८२. उभे ककुभौ त्रिशिरो गौतमः ॥ २४ ॥

प्रस्तावयुक्ता प्रस्तावरहिता चोभे अपि ककुभावेव स्या-तामिति गौतम इति ॥ २४ ॥

१४८३. बृहत्यौ धानञ्जय्यः ॥ २५ ॥

उभे अपि प्रस्ताव युक्ता तद्रहिताच बृहत्यावेव कर्तव्ये इ यर्थं । तदेवं प्रस्ताविमन्मपूर्व्यमिति प्रगाथे उत्तरयो. पञ्च-प्रकारं सन्तनिनो मानं, बृहतीकारं कृत्वा प्रस्तावसदसद्भावेन द्वयं ककुभौ कृत्वा, प्रस्तावसदसद्भावेन द्वयं द्विपदाकारं कृत्वा, प्रस्तावलोपेन पञ्चमः प्रकारः, तदिदं पञ्चसन्तनीति, तलवका-रिणामूहाऽध्ययने महान् घोषः । अस्माकं च एकएवप्रकार. । प्रस्तावरहिते ककुभौ कृत्वा गीयत इति ॥ २५ ॥

इति प्रथमः खण्डः

### अथ द्वितीयः खण्डः

पूर्वस्मिन् खण्डे त्रिवृत्स्तोमे च परिवर्तिनीविधानमिति विष्टुतिप्रसङ्गात् सर्वा एव विष्टुतीरनुसन्धत्ते, आद्याभि. विष्टु-तिभिरिति खण्डेन । अत्र पञ्चविंशब्राह्मणे तिसृभ्यो हिंकारोती-त्युपक्रम्य त्रिवृदादि स्तोमानां प्रत्येकं बहुधो विष्टुतयः समा-म्नाताः । ताः सर्वा अपि फल्पैरन्नविशेषात् । न च नित्यकाम्य-तया विशेष. । सर्वासामपि फलश्रवणेन (नित्य) काम्यत्वात् फलरहितायाः कस्याश्चिदनाम्नानात्, नि.यप्रयोगे ता ताामेव विकल्पः । अथ यदि फलश्रवणं अर्थवादः स्यात्, तदा सर्वा अपि नित्या एवेति विकल्प एव । किन्च तामेतां प्राथाहणय उपासते, तामेतांभाल्लवय उपासत इति च तैस्तैर्नित्योपासनं नित्यतामेव दर्शयति । एवं प्राप्ते ब्रूमः ।

१४८४. आद्याभिर्विष्टुतिभिः स्तोमविधानमनादेशे ॥ १ ॥

यत्र विशेषादेश क्रियते, सत्रेषु दशरात्रे सर्वा प्रयुञ्जीतेत्यादिना ततोऽन्यत्र नित्य प्रयोगे आद्याभिरेव विष्टुतिभि, स्तोमसपादन कार्यम् । नेतराभिरिति ॥ १ ॥

तत्रहेतुमाह—

१४८५. ताः पथ्याः ॥ २ ॥

ताः पथ्याविष्टुतयः । पथ्याः - पथोऽनपेताः, न्याय्या इत्यर्थः । कि पुनः न्याय्यत्व ? पर्यायविष्टात्वसाम्य दोषविरहश्चेति ब्रूमः ॥ २ ॥

हेत्वन्तरमाह--

१४८६. सर्वाभिप्रायाश्च ॥ ३ ॥

सर्वत्राभिप्रयन्ति सञ्चरन्तीति सर्वाभिप्रायाः— नित्या इत्यर्थः । तथा च *निदानकारा नित्ये सर्वाभिप्रायपदं प्रयुङ्क्ते । तेषा किं काम्य किं सर्वाभिप्रायमिति । **श्रुतिरपि एवं वै प्रति-

*तस्य यज्ञस्य ज्योतिष्टोमस्य षड्व्यञ्जनस्थानानि भवन्ति, प्रतिपत् गायत्र त्रिणिधनं विष्टुति ब्रह्मसामोक्थ्यप्रणय सन्धिसामेति । तेषा किं काम्य, किं सर्वाभिप्रायमिति, प्रतिपत्, यत्खल्वस्य ज्योतिष्टोमस्य चरति तत्तत्सर्वाभिप्राय, अथ यत्काम्य निवर्तते तत्कामप्रतिपत्, इत्यादिना प्रपञ्चयते । निदानसूत्रे प्र-३-ख-३ ।

**शश्वत् ब्राह्मण भवति एतेवात्र प्रतिपदौ सर्वाभिप्रायौ यदुपवतीच अग्रियवती च कामायवा इतरा आह्नियन्त इति । नि-सू-प्र-३ ख-३ ।

पदौ सर्वाभिप्राये यदुपवनी वाग्निपवतीव कामायेतराः प्रतिपद इति ॥ ३ ॥

१४८७. यथाशिषं वा विदध्यात् ॥ ४ ॥

आशोः फल, तदनुसारेण वा काम्या अपि कुर्यात्। एतदुक्त भवति द्वावेवाद्यप्रकारौ फलकामनया वा कुर्यात्, तदभावे प्रथमाभिरेव कुर्यात्। न पुनस्तृतीय प्रकारो विकल्पोऽस्तीति। अथ यदुक्त सर्वाऽपि फलश्रवणात् नित्यकाम्यतया विशेष इति, तदयुक्त। प्रथमास्वेव विष्टुतिषु फलश्रवणमर्थवादः इतरास्तु प्रजाकामा इत्यादि कामपदोपबन्धात् काम्या एव। यत्रचित्कामपदाभावेऽप्यर्थवादबलात् फल कल्प्यम्। न पुनः प्रथमाया विकल्पः, अथ्यात्मेन वैषम्यादिति। प्रावाहणय उपासन् इति च फलाद तथैवोपासन न नित्यपर्येति मन्त यमिति ॥ ४ ॥

१४८८. द्वितीयां त्रिवृतः पथ्यामेके । ५ ॥

त्रिवृत्स्तोमस्य द्वितीया परिवर्तिनी पथ्यामेके वदन्ति ॥५॥ तत्रहेतुमाह--

१४८९ अविष्टा वा द्वाये । ६ ॥

आद्याविष्टुतिरुद्यतीनाम, सा विष्टावयून्यत्वादपथ्येत्यर्थ। विष्टावो नाम पर्यायस्य तृचे विभाग इति ॥ ६ ॥

हेत्वन्तर चाह---

१४९० संहारशिरःसन्निसन्नानिषु चानुपपन्ना ॥ ७ ॥

सहाराद्यर्थचतुष्टये च त्रिवृतः प्रथमविष्टुतिरनुपपन्ना। कथ? सहारे तावदनाम्नानपर्यायस्य स्तोमस्याम्नानपर्यायात्-

स्तोमात् पर्यायसंहारं वक्ष्यति । यावन्मित्रोनन्तर एव समौ तयोः पर्यायान् संहरेदिति । तत्र त्रयोदशस्तोमे त्रिवृत्स्तोमादिकः पर्यायः, पञ्चदशाच्च द्वौ पर्यायावाहर्तव्यौ, तत्र यदि त्रिवृतः उद्यत्या पर्यायं संहरेत्तदानीं तत् स्थाने पर्यायान्तरेण न प्रवेष्टव्यं । कुत ? सप्रथमया समध्यमया स [1]उत्तमयेत्येवमुद्यतीपर्यायाणां पृथगेवासाधारण स्थानकल्पनात्तदनुरूप फलश्रवणाच्च, नान्योऽन्यस्य प्रजा आददते यथा क्षेत्रं कल्पन्त इति । ततश्च पञ्चदशपर्यायस्योद्यतीपर्यायस्थाने प्रथमायां निवेशानुपपत्तिरिति । अथ महाव्रते शिरसि अतिरात्रे सन्धिस्तोत्रे च न संगच्छते, उभयत्रापि नवर्च्चविधानादुद्यत्याश्च एकर्च्चविषयत्वात्, तथा सन्तनि साम्नि चानुपपन्ना । कथं, प्रथमो त्रिकस्था तदनन्तरं मध्यमो हिंकारे कृते पृथक् पर्यायोपक्रमात् पूर्वप्रस्तावभक्त्युपजीवनाभावात् पृथक प्रस्ताव. कार्य. । ततश्च सन्तानविच्छेद इति दोषः । तथा च तद्भयादेव [2]पूर्वमुक्तं त्रिवृत् स्तोमे च परिवर्तिनी विधानमिति ॥ ७ ॥

१४९१ अयर्पुकरिष्यति चास्याम् ॥ ८ ॥

अस्यामुद्यत्यां विष्टुतावयर्पुकस्तु पर्जन्यो भवतीति दोषश्रुतिरप्यस्ति । तस्मादप्यपञ्चा त्रिवृतः प्रथमाविष्टुतिरिति ॥८॥

१४९२. [3]इषोर्व्यत्यासमिषुभ्याम् ॥ ९ ॥

[4]षड्विंशब्राह्मणे इषुसञ्ज्ञके द्वेविष्टुती स्तः । अस्ति चेषुर्नामैकाह. तस्य स्तोत्राणि ताभ्यामिषुभ्यां व्यत्यासं विदध्यादित्यर्थः ॥ ९ ॥

---

1. छ. उत्तमयेत्येवपर्यायाणां । 2. द्रा-१६-१-१९ ।
3. छ इषोर्व्यत्यासमिति । 4. षड्वि-ब्रा-३-५-१ ।

१४९३. तयोः पूर्वा श्येनस्याग्निष्टोम साम्नि ॥ १० ॥

तयो. इषुसंज्ञकयोः पूर्वाविष्टुति. श्येनैकाहाग्निष्टोमसाम्नि भवेदिति ॥ १० ॥

१४९४. सत्रेषु दशरात्रेऽपर्वाः प्रयुञ्जीताभिचरणीया उद्धृत्येति शाण्डिल्यः ॥ ११ ॥

अभिचारार्था विष्टुतीः वर्जयित्वा तद्व्यतिरिक्ताः सर्वा अपि विष्टुतीः सत्रेषु दशरात्रे निष्कामोऽपि प्रयुञ्जीतेत्यर्थः ॥११॥

१४९५. शाण्डिल्यायनः कुलायिनीम् ॥ १२ ॥

उद्धृत्य प्रयुञ्जीतेत्यनुवर्तते । 'अधरोत्तरमपावगतोरव-रुद्धयै' इति कुलायिन्या दोषश्रवणात्ता एकामुद्धृत्य तदन्याः सर्वाऽभिचरणीयाश्च निष्कामेन प्रयोज्या इति ॥ १२ ॥

१४९६. भस्त्रां चोभौ ॥ १३ ॥

यं द्विष्यात्तस्य कुर्यादिति भस्त्राविष्टुते. द्वेष्यविषयत्वात् तामप्युद्धरेदिति उभावप्याचार्यावूचतुरिति ॥ १३ ॥

१४९७. धानञ्जय्यस्तामेव ॥ १४ ॥

भस्त्रामेवोद्धरणीयां मन्यते धानञ्जय्य, तस्या. केवल द्वेष्यैकविषयत्वात्, कुलायिनी तु प्रयोज्यैव यद्यपि तस्या दोषः श्रूयते तथापि गुणबाहुल्यमपि श्रूयत इत्यभिप्रायः ॥ १४ ॥

इदानी प्रयोगप्रकारमाह—

१४९८ पञ्चाभिर्होतृनामानि विदध्यादपञ्चाभिरितराणि ॥ १५ ॥

स्पष्टमेतत् ॥ १५ ॥

१४९९. समासासु ॥ एवादिता पुनः प्रयुञ्जीत ॥ १६ ॥

समाप्तासु पुनरप्यादित पथ्यामुपक्रम्य पूर्ववत् प्रयुञ्ज्या-
दिति ॥ १६ ॥

१५०० तथा कुर्वन् प्रागाथिकानि परिवर्तिन्या प्रथमस्थेति शा-
ण्डिल्यः ॥ १७ ॥

तथा कुर्वन् पुन पुन प्रयुञ्जान इत्यर्थं । तदानीं प्रथम-
स्याह्न प्रागाथिकानि रथन्तरनौधस कालेय यज्ञायज्ञीयस्तोत्राणि
त्रिवृत परिवर्तिन्यैव विष्टुत्या प्रयुञ्जीत । न उद्यतीकुलायि-
नीभ्या इत्यर्थं । तथा सति प्रगाथत्व विरोधात् । तथा हि
प्रगाथत्व नाम पूर्वस्तोत्रीया पूर्वमुक्त्वा तस्या उत्तम पाद पुन-
रभ्यस्य तेन सहोत्तरस्तोत्रीयाकरणम् । तच्च कुलायिनीपक्षे
सर्वथा न सगच्छते । कथ? तिसृभ्योहिंकरोति या मध्यमा सा
प्रथमेति कुलायिनी स्वरूप, तत्र ईशानमिन्द्रतस्थुषो न त्वावाँ
अन्यो दिव्यो न पार्थिव इति । मध्यमाया प्रथमयोगे प्रगाथत्व-
विरोध । एवमुद्यत्यामपि द्रष्टव्य । तत्पर्यायाणामसङ्कीर्णस्था-
नत्वात् प्रगाथेषु च पूर्वोत्तर स्तोत्रीययो एकदेशसंस्काराच्चेति ॥

१५०१. सकृत्सर्वा समाप्य पथ्ययैव तत ऊर्ध्वमिति धानञ्जय्य ॥
स्पष्टमिति ॥ १८ ॥

१५०२. असमाप्तासु स्वपिहोतृणाम पथ्ययैव ॥ १९ ॥

असमाप्तास्वपि यदा मध्ये होतृपामागच्छति, तदा पथ्य-
यैव कार्यमिति ॥ १९ ॥

१५०३. तथा कुर्वन् कुलायिनीं चेत् प्रयुञ्जीत प्रथमस्थाने द्वितीयं
पूर्व तथा विद्ध्यात् ॥ २० ॥

असमाप्तास्वपि होतृषाम पथ्यया कुर्वन् · प्रथमेऽहनि कुलायिन्याः प्रयोगपक्षे ता वामदेव्यस्तोत्रे निवेशयेत् । त्रिवृत-स्तावत्, पञ्चविष्टुतयः परिवर्तिनी, उद्यती, कुलायिनी, इषुद्वयं चेति । तत्र कुलायिन्या उद्धारपक्षे न किञ्चिद्वचसनम् । प्रयोग-पक्षे तु स्वस्थानं तृतीयमाज्यस्तोत्रमनिलंघ्य वामदेव्ये निवेशः कार्यः । अन्यथा होतृषामणि रथन्तरे पथ्यावरुद्धे निवेशमलभ-माना द्वितीय इषुविष्टुतिः वामदेव्ये निपतेत्, ततः को दोषः? अव्यवायेन प्रयोज्यमिषुद्वयं व्यपेतं स्यादिति दोष इति ॥ २० ॥

१५०४. पञ्चस्याह्न उक्थ्यमुत्तमयुत्तमया त्रयस्त्रिंशस्य विष्टुत्या त्रिदध्यात् ॥ २१ ॥

त्रयस्त्रिंशस्य पञ्चविष्टुतयः । तत्र उत्तमा पञ्चमीविष्टुतिः वामदेव्ये निविशते । पूर्ववदेव होतृषाम्णः पथ्यावरोधात् पुन-रपि पथ्यामुपक्रम्य प्रयोगे सति उत्तमोक्थ्ये तां पञ्चमीं निवेश-येदित्यर्थः । ननु च प्राप्तमेवेदं न वक्तव्यं, सत्यं, पुनः प्रयोगस्य निदर्शनार्थमुदाहरणमेतत् । एवमन्या अपि विष्टुतयो द्रष्टव्या इत्यभिप्रायः । केचित्त्वाहुः – सत्रादन्यत्राऽपि नियमार्थमेतत् सूत्रम् । उत्तमविष्टुतेः प्रतिष्ठाहेतुत्वान्महावृक्षरूपस्य पञ्चहस्या-न्तमारूढानां प्रत्यवरोहानुरूपत्वाच्चेति ॥ २१ ॥

१५०५. उक्तः प्रयोगो ब्राह्मणेन चतुश्चत्वारिंशे ॥ २२ ॥

प्रयोग इति जातावेकवचनं । द्वौ प्रयोगावुक्तौ इत्यर्थः । प्रथमप्रयोगश्चतुश्चत्वारिंशस्य तिस्रो विष्टुतीरधीत्यानन्तरमुक्तः आज्यानां प्रथमा, पृष्ठानां द्वितीया उक्थानां तृतीयेति । अथ द्वितीयः प्रयोगः, याऽऽज्यानां सा होतुरिति *ब्राह्मणेनोक्तः तस्य

*ता-ब्रा-अ-३-ख-११ ब्रा-२ ।

च अयमर्थः । होतुराज्यमुपक्रम्य त्रिष्वाज्येषु क्रमेण तिसृणां विष्टुतीनां प्रयोगः । पुनश्चतुर्थमाज्यमुपक्रम्य त्रिषु स्तोत्रेषु समाप्त, पुनश्चैवं, इत्येवं चतुरावृत्तिभिः तिसृभिर्विष्टुतिभिः आज्यपृष्ठोक्तानि द्वादशस्तोत्राणि कार्याणीति । सोऽयं द्वितीय. प्रयोगः । तयोः समीपन्तीति संज्ञा *ब्राह्मणेन दर्शिता । तौ पदान्तरोपश्लेषेण व्याचष्टे ॥ २२ ॥

१५०६. सवनसमीपन्ती पूर्वः प्रयोगः ॥ २३ ॥

१५०७. स्तोत्रसमीपन्त्युत्तरः ॥ २४ ॥

त्रीणि सवनानि समं गच्छन्तीति सवनसमीपन्तीति स्तु· तिर्विशेष्या, त्रीणि स्तोत्राणि समं गच्छन्तीति स्तोत्रसमीप· न्तीति ॥ २३ ॥ २४ ॥

१५०८. तथा कुर्यादहर्णीजि ॥ २५ ॥

यदा चतुश्चत्वारिंशस्तोम कृत्स्नमहर्भजते-व्याप्नोति तदा-नीमेवं प्रयोगं कुर्यादित्यर्थं । अहर्णाजीति सप्तिसप्तमीति ॥२५॥

१५०९. पथ्यामन्यत्र ॥ २६ ॥

यदा पुनरेकमेव स्तोत्रं एकं वा सवनं चतुश्चत्वारिंशो भजते, न पुन कृत्स्नमह, तदानी पथ्यामेव तत्र कुर्यादिति । तत्र प्रयोगद्वयमहोने सत्रे च भवति ब्राह्मणे विशेषाश्रवणादिति ॥

१५१०. अष्टाचत्वारिंशस्योत्तरया मैत्रावरुणस्यैवाऽऽज्यं विदध्यात्॥२७

अष्टाचत्वारिंशस्य द्वे विष्टुतीस्तः, तयोरुत्तरया मैत्रावरुणाज्यं केवलं कार्यं, नान्यत्किञ्चिदिति ॥ २७ ॥

१५११. सर्वाणि वा होतृकग्राणानि ॥ २८ ॥

*ता बा-अ-३-ख-११-बा-४ ।

यद्वा सर्वाणि होतृकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छा-वाकानां सामानि कुर्यादिति ॥ २८ ॥

१५१२. मध्यमे मध्यमे वा सवनेषु ॥ २९ ॥

मध्यमे इति द्विवचनान्तं, एतस्मिन्नपि सवनेष्विति स्तोत्राणां मध्यमे मध्यमे द्वे स्तोत्रे द्वितीयया कुर्यादित्यर्थः ॥ २९

१५१३. द्वितीय चतुर्थे वा ॥ ३० ॥

अथवा आवृत्तिस्तोत्राणां चतुर्णां द्वितीयचतुर्थे स्तोत्रे तथा कुर्यादिति ॥ ३० ॥

१५१४. उत्तरे वा ॥ ३१ ॥

यद्वा उत्तरे तृतीयचतुर्थे इत्यर्थः ॥ ३१ ॥

एव तावत् सत्रे विशेष उक्तः । तत्रैव दशरात्रव्यतिरिक्तेषु अहस्सु विशेषमाह–

१५१५. अथ दशरात्रेषु सत्रेषु पथ्या एवेति गौतमः ॥ ३२ ॥

१५१६. सर्वा इति धानञ्जय्यः ॥ ३३ ॥ स्पष्टे ३२ ॥ ३३ ॥

॥ इति षोडशे द्वितीय. खण्ड. ॥

## अथ तृतीयः खण्डः

अथ कल्पब्राह्मणविषया परिभाषा आरभ्यते—

१५१७. तृचसूक्तानामादिग्रहणेन विधिरनादेशे ॥ १ ॥

उपास्मैगायतानर इत्यारभ्य तृचसूक्तान्येकर्चानि च ऋनुविषयत्वाम्नातानि । तत्र सामविधानार्थं कल्पे वा ब्राह्मणे वा यत्र यत्र तृचसूक्तादीनि गृह्यन्ते, तत्र सर्वत्र सूक्तानां तृचानाञ्च विधिं, न केवल ऋङ्मात्रस्येति मन्तव्यम् । कुतः? अन्यथा स्तो-

मविष्टुभोरसंभवात् । तथाहि पवस्ववाचो अग्रिय इति द्वितीयस्याह्न प्रतिषद्भवतीत्यादिषु ब्राह्मणवाक्येषु यदि केवलमृङ्मात्रं गृह्यते, तदा पञ्चदशादिस्तोमो न संभवेत् । तथाऽऽवृत्तिस्तोत्रेषु केवलमृङ्मात्र ग्रहणे सति स तिसृभिस्स एकया स एकयेत्येव ऋगवलम्बिनी विष्टुतिर्न संभवेदिति । तत्र सूक्तपरिमाण पञ्चर्चो भवतीत्यादि ब्राह्मणवाक्यशेषादवगन्तव्यम् । किञ्च बह्वृचानां आर्षं सूक्तानुक्रमणं अस्ति तान्येवास्माकं सूक्तानीति न किञ्चित् व्यसनमस्तीति ॥ १ ॥

१५१८ तृचोत्तमायां प्रतिलोमः ॥ २ ॥

तत्रैव कल्पे ब्राह्मणे वा यत्र तृचोत्तमो गृह्यते तृचस्य प्रतिलोमप्रयोग उक्त इति मन्तव्यम् । यथाय स महादेव पशून् हन्यात् स न पवस्व धगव इति प्रतिपद कुर्यात् ॥ २ ॥

१५१९ मध्यमाया सैव ॥ ३ ॥

यत्र तृचस्य मध्यमा गृह्यते तत्र सैव केवलमध्यमा ग्राह्या । यथा आदित्यानामयने व्यूढाग्निष्टोम दशरात्र तृतीयाष्टमनवमेष्वहस्सु कल्पकार, सन इन्द्राययज्यव इति गायत्र, तवत्यइन्दोअन्धस इति गायत्र पवमानोरथीतम इति गायत्रमिति॥ तत्र तृचेषु मध्यमाया एव ग्रहणमिति–

१५२० रेतस्यैकत्रिकस्य बहिष्पवमानम् ॥ ४ ॥

एकत्रिकमेकाहमधिकृत्यकल्पकार उपास्मै गायतानर इति एकया बहिष्पवमानमिति । तत्र तृचस्य ग्रहणे प्राप्ते इदमुच्यते । रेतस्या प्रथमैवकेवल बहिष्पवमानमिति ॥ ४ ॥

१५२१ उद्भिधनुष्टुभमेकर्चं शाण्डिल्यः ॥ ५ ॥

उद्भिदेकाहे सप्तमीस्तोमं बहिष्पवमानं । तत्र यास्तृचाः कल्पकारेण प्रतीकेनोपात्ताः तत्र स्तोमविरोधात् द्वयो ऋचोः उद्धारः कार्यः ॥ ५ ॥

तत्रैवमुच्यते—

१५२२. अनुरूपं तृचमेकर्चं कुर्यादिति स्तोत्रीयं गौतमधानञ्जय्यौ ॥६

स्तोत्रीयं तृचमेकर्चं कुर्यादिति मतान्तरं । स्तोत्रीयानुरूपाविति बहिष्पवमानस्य प्रथमद्वितीययोः तृचयोः संज्ञे ब्राह्मणे कृते इति ॥ ६ ॥

१५२३. उत्तमौ तृचौ बहिष्पवमाने साहस्रोत्तमचातुर्मास्येषु ॥ ७ ॥

साहस्रा नाम चत्वार एकाहाः । तेषामुत्तमे स्तोमे चातुर्मास्येषु च बहिष्पवमानविष्टुतये पञ्चतृचाः प्रतीकेन कल्पे विहिताः, तेषां उत्तमौ तृचौ कार्यौ, इतरे त्रय. एकर्चाः कार्याः । सर्वत्र त्रिवृत्स्तोमसंगत्यर्थमिति ॥ ७ ॥

१५२४. सर्वे सर्वस्वारे ॥ ८ ।

सर्वस्वारे क्रतौ बहिष्पवमाने त्रीणि सूक्तानि सप्तर्चं-मध्यर्चानि प्रतीकेनोपात्तानि । तानि सर्वाणि तृचाः कार्याः । अन्यथा त्रिवृत्स्तोमविरोधादिति ॥ ८ ॥

१५२५. वामदेव्य यज्ञायज्ञीयारण्येगेयपृष्ठपूर्वाणां तृचकरणमुत्तरयोः पवमानयोरन्येषां च अविप्रतिषेधः ॥ ९ ॥

यत्र उत्तरयो . पवमानयोः बहूनिसामानि विहितानि सर्वेषां तृचकरणे स्तोमविरोधश्च भवति । तत्रावश्यं कानिचित्सामानि तृचे, कानिचिदेकर्चे इति व्यवस्थाऽऽश्रयणीया । तत्रेदमुच्यते—वामदेव्यादीनां तत्र तृचे करणं इतराण्येकर्चानि कार्या-

णीति । यदा तु अन्येषामपि तृचकरणे स्तोमविरोधो न भवेत्तदा तेषामपि तृचेकरणम् । तदेतदुक्त अन्येषां च अविप्रतिषेध इति॥

यानि पूर्वं कदाचित् पृष्ठस्थाने भूत्वा पवमानयोर्भवति तानि पृष्ठपूर्वाणि रथन्तरादीनि उदाहरणम्—

१५२६. निश्चिति ब्राह्मणे रथन्तरं प्रथमंबृहदुत्तमंमध्यइतराणि ॥१०

पवमाने रथन्तर विहित । तथाऽन्ययापि ब्राह्मणमनुष्टुभि बृहद्भवति, यज्ञायज्ञीयमनुष्टुभि भवतीत्यादि ॥ १० ॥

१५२७. एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यादिति ॥ ११ ॥

एक साम स्तोमविरोधादेकर्चं कुर्वन् प्रथमायामेव सामगणस्यादित. कुर्यात् ॥ ११ ॥

१५२८. न द्वितीयायां न तृतीयायां वा न मध्येनाप्यन्ततः ॥ १२ ॥

यथा महाव्रते पुरोजितीवोऽन्धस इति गौरीवितञ्च मधुश्चुन्निधनञ्च श्यावाश्वमान्धीगवे इति सामचतुष्टय सतृप्तम् । तत्रादितो गौरीवितमाद्यायामृचि भवतीति नान्यदिति ॥ १२ ॥

१५२९. द्वौ तस्यामेवेति ॥ १३ ॥

द्वावेकर्चौ स्तोमविरोधात् कुर्वंश्च प्रथमायामेव कुर्यात् । यथा पृष्ठस्य प्रथमेऽहनि आभंरे गायत्रमहिते सामनी इति ॥

१५३० त्रीनेकतृचे नानास्तोत्रीयासु ॥ १४ ॥

एकस्मिन्नेवतृचे त्रीनेकर्चानन्यवशान्नेम कुर्वन् पृथगेव तिसृष्वृक्षु क्रमेण कुर्यात् । यथा दशरात्रस्य नवमेऽहनि परोक्षो-पिश्वासुतमित्यत्र कौल्मलबर्हिषार्कपुष्पदैर्घश्रवसानि त्रीणि सामानीति । तथाबृहत् पूर्वं यत्र एकर्चा रथन्तरादुत्तरत्र इति गूहोक्तानि चेति ॥ १४ ॥

१५३१. चतुर्षा प्रथमायां द्वावितरौ नानोत्तरयोः ॥ १५ ॥

एकस्मिन्नेव तृचे यदा चत्वारि सामानि एकर्चानि कर्तुमिष्यन्ते, तदा तेषामादितो द्वे सामनी प्रथमायां उत्तरयोरुत्तरे द्वे इति । उदाहरण - समूढे पृष्ठ्य षडहे तृतीये माध्यन्दिने बृहत्यां अभिसोमास आयव इति पौरुमद्गं प्रथमायां, तस्यामेवाभीवर्तः कालेय द्वितीयाया, गौतम तृतीयायामिति चत्वार एकर्चाकल्पे क्लृप्ता ॥ १५ ॥

१५३२. माध्यन्दिने चेदेको द्वौ वा बृहत्यामेव ॥ १६ ॥

यदा माध्यन्दिने एको द्वौ वा एकर्चौ कर्तुमिष्टौ नाधिकं, तदानी बृहत्यामेतौ कार्यौ गायत्र्यामित्युदाहरणम् ॥ १६ ॥

१५३३. वाजपेयाप्तोर्यामादीनि त्रीनन्यतरस्यां संभवेयुः ॥ १७ ॥

माध्यन्दिने पवमाने त्रीनेकर्चान् कर्तुं इच्छन् गायत्रीबृहत्यो. मध्ये यद्यन्यतरस्यान्ते त्रयस्सभवेयुः तस्या कुर्युर्न बृहत्यामेवेति नियमः, त्रीनिति त्रिप्रभृतीनामुपलक्षणम् । उदाहरण पुनस्तोमस्य माध्यन्दिनः पवमानस्तत्र षट्सामानि विहितानि, तेषां त्रीणि तृचेषु त्रीण्येकर्चेषु भवन्ति, तथा द्वितीये गौतमचतुष्टोमे पवमाने अप्टिस्तोम. तत्र षट्सामानि तेषां षड्वैकर्चागायत्री बृहत्यो विभज्यभवन्तीति ॥ १७ ॥

१५३४. अनभ्यासा चेत् द्वयोरन्यतरे गायत्र्यां यानज्ञप्यः ॥१८॥

साभ्यासा अनभ्यासा चेति द्विधा बृहती, परोतोपिश्वताऽभिसोमास आयव इति द्वे बृहत्यौ साभ्यासे, अन्या. सर्वा अनभ्यासा. । अभ्यास इति तयोर्बृहत्यो. उपरिष्टादधीतद्विपदा द्वयमुच्यते । नृभिर्येमाणोहर्यतोविचक्षणो, राजा देवस्समुद्रय इति ।

तथा परिस्वानश्रक्षसेदेचमादन॰, ऋतुरिन्दुर्विचक्षण इति । एवं स्थिते इदमुच्यते । यत्रानध्यासा बृहती तस्याः कर्तुं इष्यते, तदा अध्यास्याया मेवान्ततस्सामगणस्य एकर्चः कार्यः । यथाऽस्य तृतीयेऽहनि बृहत्या सामचतुष्टयं तत्र प्रथमं प्रथमाया॰ मन्त्यमध्यासा, यथा महाव्रते माध्यन्दिने पवमाने बृहत्यां सामचतुष्टय मक्लृप्तं, तत्र चतुर्थसामैकर्चमिति ॥ १८ ॥

१५३५. द्वौ तस्यां चैवादितश्च ॥ १९ ॥

यदि साध्यास्याया द्वावेकर्चौ भवतः तदाऽध्यास्यायां अन्ततः एकः, प्रथमायामादितः एकः कार्यः । यथा पृष्ठस्य तृतीयेऽहनि बृहत्या सामचतुष्टयं तत्र प्रथमं प्रथमायमन्त्यमध्यास्यायामिति ॥ १९ ॥

१५३६. सा शशकर्णक्लृप्ता ॥ २० ॥

एवं भूता बृहती शशकर्णक्लृप्तेत्युच्यते । यथा शशकर्णौ मध्यतः स्थूलमादितोऽन्ततश्चाणीयानेवमेषा बृहत्याऽऽदितोऽन्ततश्च एकर्चाकरणात् मध्ये तृचकरणाच्चेति ॥ २० ॥

१५३७. त्रिष्वध्यासा लुप्येत ॥ २१ ॥

यदा साध्यास्याया त्रय एकर्चाः कर्तुमिष्टास्तदानीं अध्यास्यालुप्यते—न प्रयोक्तव्येत्यर्थः । तदानीमितरास्वेव स्तोत्रीयासु तयोप्येकर्चाः क्रमेण भवेयुरिति ॥ २१ ॥

१५३८. तृचे च ॥ २२ ॥

लुप्यत इत्यनुवर्तते । तृचेचाऽपेक्षिते अध्यास्या लुप्यते । कोऽर्थः ? यदाऽध्यास्यायां एकर्चाकरण नापेक्षितं तृचएव सर्वाणि

सामानि कर्तुं शक्यते समस्तोमत्वात्तदा च लुप्यतेऽप्यास्येति। उदाहरणं चतुर्वीरे चतूरात्रे तृतीयचतुर्थयोरह्नो चतुर्विशेपव-माने बृहतीति ॥ २२ ॥

१५३९. चतुरो नाना स्तोत्रीयासु। २३ ॥

साध्यास्थाया बृहत्या चतुर एकर्चान् कुर्वन् नानैव चतसृषुस्तोत्रीयासु तान् कुर्यात्। तत्र अध्यासा चतुर्थीस्तोत्रीयेति। उदाहरणं व्यूढाग्निष्टोमदशरात्रे तृतीयेऽहनि पौरुमद्ग गौतमान्तरिक्षाण्कारणिधनानि ॥ २३ ॥

१५४०. आर्भवे चैवैकोऽनुष्टुभि ॥ २४ ॥

आर्भवे पवमाने यद्येकर्च कर्तुमिष्टं, तदानीमनुष्टुभ्येव असौ कार्यो, महाव्रते गौरीवितमुदाहरणमिति ॥ २४ ॥

१५४१. द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येण ॥ २५ ॥

यदा पुन द्वौ त्रयश्चत्वारो वा एकर्चा कर्तुमिष्यते तदानी आर्भवे ककुप्प्रभृतिषु आनन्तर्येण तान् कुर्यात्। प्रकृतिभूते ज्योतिष्टोमेसफपौष्कले उदाहरणम् ॥ २५ ॥

ननु च प्रकृतिभूते ज्योतिष्टोमे काकुभऔष्णिहश्च द्वौ तृचावाम्नातौ पयस्वमधुमत्तमइन्द्रमच्छेति। तत्र सफपौष्कलयो एकचीकरणे सति तृचाम्नानमनर्थक स्यादत आह—

१५४२ उष्णिक्ककुभोस्तृचैकर्चत्वमव्याघातेन ॥ २६ ॥

स्तोमस्याव्याघातेन अविरोधेन, तयोस्तृचयो तृचत्वमेकर्चत्व च सपादनीयम्। यदा सफपौष्कलयोस्तृचेकरण विकृतिषु शक्यते स्तोमानुगुण स्यात्, तदानीमेव तृचैकरण, तदर्थमेव च प्रकृतौ तृचाम्नान न पकृत्यर्थमिति मन्तव्यमिति ॥२६॥

इति तृतीय खण्ड.

अथ चतुर्थः खण्डः

१५४३. वामदेव्यं तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीय प्रभृतीनि च त्रीणि ॥ २८ ॥

विश्वजिच्छिल्पो नामैकाह्. । तस्यार्भवोऽष्टादशस्तोम, तत्र सामदशक विहितम् । चत्वारि तृचेषु कार्याणि पडेकर्चानि । अन्यथा स्तोमविरोधात्, तत्र द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेति वचनात् ककुप्प्रभृतिपण्णा साम्नामेकर्चीकरणे प्राप्ते, तदन्तर्गतानां वामदेव्य यज्ञायज्ञीय वारवन्तीयानामप्येकर्चीकरण प्राप्त निषेधति । वामदेव्य तृचेकुर्याद्यज्ञायज्ञीय प्रभृतीनि त्रीणि सामानि तृचेषु कुर्यादितराणि पडेकर्चानि । यज्ञायज्ञीयप्रभृति द्वय चेति वक्तव्ये त्रीणीतिवचन पवमानान्त्यस्य कावस्य तृचकरणनियमार्थम् । ननु च सिद्धमेवैतत् वामदेव्ययज्ञायज्ञीयारण्येगेयानां तृचकरणमिति पूर्वमुक्तत्वात् । सत्य, मध्ये निधनमैडमार्भव इति उत्तरत्रविशेषविधेराधीगवमपि पक्षे तृचे स्यात् । तत्परिसङ्ख्यानार्थं सूत्रमिति ॥ १ ॥

१५४४. संभवति स्तोमेऽन्त्य सर्वत्र तृचे ॥ २ ॥

सर्वत्र तावदुत्तरयो पवमानयोरन्त्य साम तृच एव कार्यं सभवति स्तोमे । असभवे तु तच्चान्यच्च सर्वमेकर्चेष्वेव कार्यम् । यथैकत्रिकस्तोम इति ॥ २ ॥

१५४५ द्वितीयञ्चेदरण्ये गेयम् ॥ ॥ ३ ॥

यदि पवमानान्त्येन सह यत्किञ्चिद्द्वितीयमपिसाम तृचे कर्तुं शक्यते तदानीमरण्ये गेयमेव तथाकुर्यान्नान्यत्सामेत्यर्थः ॥ ३

१५४६. तदभावे यदन्त्यात्पूर्वम् ॥ ४ ॥

यदा द्वितीयमरण्ये गेयं न विद्यते तदानीं पवमानान्त्यात् पूर्वमनन्तरं यत्सामतृचे कुर्यादिति ॥ ४ ॥

१५४७ एकर्चस्थानेष्वनापद्यमानानि तृचेषु कुर्याद्गायत्रं त्रिणिधनं मध्यन्दिने मध्येनिधनमैडमार्भवे ॥ ५ ॥

संभवति स्तोमे इत्यनुवर्तते । माध्यन्दिने पवमाने गायत्रञ्च त्रिणिधनञ्च यौधाजयादिकं सामान्यतस्तावत्तृच एव कुर्यात्तथाऽऽर्भवे पवमाने मध्ये निधनमैडमान्धीगवादिकं तृच एव कुर्यात् । किमेवं सर्वत्र? नेत्याह, एकर्चस्थानेषु अनापद्यमानानीति । अयमर्थः-यत्र पवमानान्त्यं वर्जयित्वा सर्वाण्येव सामान्येकर्चानि भवन्ति तदेकर्चस्थानं, यथा त्रिवृत्स्तोमेषु ऋतुष्वार्भवः पवमानो यथाऽऽदित्यानामयने व्यूढाग्निष्टोम दशरात्रे प्रत्यहमुत्तरो पवमानो तत्र गायत्र्यादीन्यप्येकर्चेष्वेव कुर्यात् ततोऽन्यत्र तृच एवेति ॥ ५ ॥

१५४८. अनादिष्ट तृचैकर्चान्येतेनोद्देशेन कल्पयेत् ककुभश्च माध्यन्दिने एकर्चस्तस्याम् ॥ ६ ॥

कल्पकारेण यानि नादिश्यन्ते इदमेकर्चे स्यादिदं तृच इति तानि सामानि विहितानि, तेषामेकमवश्य एकर्चे कार्यं । तत् ककुभिकर्तव्यमिति ॥ ६ ॥

१५४९. अन्यत्रोत्तमाद्व्रात्यस्तोमात् ॥ ७ ॥

उत्तमे व्रात्यस्तोमे चतुर्विंशो माध्यन्दिनः पवमानोऽष्टौ च सामानि । सर्वाणि तृचेकार्याणि पवस्वमधुमत्तम इति कालेयमपि तृचेकार्यं, तदेतदाहान्यत्रोत्तमाद्व्रात्यस्तोमादिति ॥ ७ ॥

१५५०. द्विपदा ककुब् च तत्स्थाने ॥ ८ ॥

व्रात्यस्तोमानामार्भवे पवमाने ककुभ स्थाने प्ररिप्रधन्वेति द्विपदा विहिता । सा तद्वद्भवेदित्यतिदेशोऽयं । किं प्रयोजनं, द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेति यत्पूर्वमुक्तं तस्य प्रवृत्तिः । तेन द्विपदा प्रभृत्यानन्तर्येण साम्नामेकर्चाकरणमिति सिद्धं भवति ॥ ८ ॥

१५५१. पूर्वयोर्व्रात्यस्तोमयोरार्भवे गायत्रमेकर्चे धानञ्जय्यस्तृचे मरुतां संस्तोभम् । ९ ॥

पूर्वयोरार्भव पवमान षोडशस्तोम अष्टौ च सामानि । तत्र चत्वार्येवण्यमेकर्चकार्याणि, अन्यथा स्तोमविरोधात् । तत्र द्विप्रभृतीन् ककुप्प्रभृतीनीति वचनात् चतुर्णामेकर्चकरणे प्राप्ते प्रतिषेध इति । गायत्रमेकर्चे धानञ्जय्यस्तृचे मरुतां संस्तोभमिति तत्र हेतु मरुतां संस्तोभस्य विशेषविधिरिति ॥ ९ ॥

१५५२. विपरीतं शाण्डिल्यः ॥ १० ॥

तत्र हेतु गायत्रस्य सर्वविद्याप्रच्युतेरभ्यर्हितत्वमिति ॥

१५५३. चतुर्ऋचानामावृचिषन्त्यामुद्धरेत् ॥ ११ ॥

चतुर्ऋचानां सूक्तानां इन्द्रमिद्गाथिनोबृहदित्यादीनां आवृत्तिस्तोत्रगतानां अन्त्यामृचमुद्धरेत् । अन्यथा विष्टुतेरसम्भवात् ॥ ११ ॥

१५५४ तृतीयां सर्वस्वारस्वरसाम्नोः ॥ १२ ॥

सर्वस्वारे सनौ स्वरसाम्नि चाज्यस्तोत्रे चतुर्ऋचे सूक्ते तृतीयामृचमुद्धरेदिति ॥ १२ ॥

१५५५. प्रत्नामर्चन्तीति द्वितीयाम् ॥ १३ ॥

प्रयामर्चन्तीति चतुर्ऋचे सूक्ते द्वितीयामुद्धरेत् । पूर्वसूत्रेण विशेषविधानादिति ॥ १३ ॥

१५५६. सुषमिद्धइत्यत्रि वसिष्ठशुनककण्वसंकृतिवध्रयश्वानां तानूनपातीम् ॥ १४ ॥

अत्रिवसिष्ठादि गोत्राणां यजमानानां सुषमिद्ध इति चतुर्ऋचे तनूनपाद्देवत्यां मधुमन्तं तनूनपादित्येतामृचमुद्धरेदिति ॥ १४ ॥

१५५७. नाराशंसीमन्येषाम् ॥ १५ ॥

अत्रिवसिष्ठादि व्यतिरिक्तगोत्राणां यजमानानां नराशंसमिहप्रियमित्येतां नाराशंसीमुद्धरेदिति ॥ १५ ॥

१५५८. समवाये तु भूयसां कल्पः ॥ १६ ॥

अत्रिवसिष्ठादीनामन्येषां च गोत्राणां सत्रेषु समवाये सति, भूयसां कल्प आदरणीयः । यदि बहवो यजमानाः वासिष्ठाः तदा तानूनपातीमुद्धरेत्, अन्येषां यद्यपि नाराशंसी प्रयोज्या, तथापि भूयसां न्यायेन सैव प्रयोज्येति ॥ १६ ॥

१५५९. गृहपतेर्वा प्राधान्यात् प्राधान्यात् ॥ १७ ॥

यस्य गृहपतेः कल्प आदरणीयः तस्य प्राधान्यादिति । ननु च, [1]अभिन्नकल्पानामेव सत्रासनंविद्यात इति मीमांसकाः । सत्य, कल्पसूत्रकारास्तु सर्वेषां विधत्तेएव इत्याहुरिति ॥ १७ ॥

इति चतुर्थः खण्ड

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः ।
द्वितीये दशके षष्ठे सन्तन्यादिनिरूपितम् ॥

षोडशः पटल समाप्तः



1. क. भिन्नकल्पानां नैव ।

अथ सप्तदशः पटलः

प्रथमः खण्डः

१५६०. वर्धमानेषु स्तोमेषु ॥ १ ॥

त्रिवृदादिस्तोमाना द्वादशरात्रिकाणामेव ब्राह्मणे पर्याय-विष्टावक्लृप्तिः आम्नाता । अन्येषामनाम्नातपर्यायाणां पर्याय-विष्टावक्लृप्ति वक्ष्यति । प्रथमं तावत्तेषु पर्यायेषु विष्टाव क्लृप्ति दर्शयितुमारभते, वर्द्धमानेषु स्तोमेष्विति । दशरात्र-स्तोमान् अपेक्ष्य ये वर्धन्ते दश द्वादश प्रभृतयस्ते वर्धमानास्तेषु यद्वक्तव्य तदुच्यत इति शेष । वर्धमानग्रहण अष्टसप्तप्रभृतय. तेषामप्युपलक्षणमिति । तत्र तावत्समाविषमाश्चेति द्विविधा-स्तोमा, तेषा पर्यायक्लृप्ति वक्ष्यति ॥ १ ॥

प्रथमं तावत् तेषु विष्टावेषु क्लृप्ति दर्शयति—

१५६१. प्रथमस्य पर्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनम् ॥२॥

प्रथमपर्यायसंबन्धिनीप्रथमाऋक् तृचभागेति संज्ञां लभते । तस्यास्त्रिर्वचनं कार्यं. एकैवसती त्रिर्वचनात्तृचत्व भजत इति । तृचभागेति अन्वर्थेय सज्ञेति ॥ २ ॥

१५६२. मध्यमाऽऽवापस्थानम् ॥ ३ ॥

त्रिर्वचननियमः प्रथमपर्यायसंबन्धिनो येऽभ्यासास्तेषां आवापस्थानं मध्यमेत्यर्थ. । तत्राविशेषात् सर्वेषां अभ्यासानां तत्रावापे प्राप्ते, अन्त्यमेकमभ्यासं परिशिष्येति बोद्धव्यम् । अन्यथा उत्तमाया ऋचः पर्यायेण संबन्धो न स्यादिति ॥ ३ ॥

१५६३. उत्तमा परिचरा ॥ ४ ॥

प्रथमे पर्याये उत्तमा ऋक् परिचरेति संज्ञां लभते । या सकृद्वचनेनैव प्रायेण चरति, न पुनः पुनरभ्यस्यते सा परिचरेति ॥ ४ ॥

१५६४. परिचरातृचभागाऽऽवापस्थानमिति मध्यमे ॥ ५ ॥

मध्यमे पर्याये ता एव तिस्रः स्तोत्रीयाः क्रमेण परिचरादि संज्ञां लभन्त इति ॥ ५ ॥

१५६५. आवापस्थानं परिचरा तृचभागेत्युत्तमे ॥ ६ ॥

उत्तमे पर्याये ताएव तिस्रऋचः क्रमेणावापादिसंज्ञां लभन्ते । ता एताः संज्ञा दाशरात्रिकेष्वपि बोद्धव्याः, ब्राह्मणे कथनादिति ॥ ६ ॥

१५६६. एते विष्टावाः ॥ ७ ॥

एवं ये प्रतिपर्यायं त्रयो विभागा उक्ताः ते विष्टावा इत्यर्थः । एवं पर्यायविभागे सूत्रकारस्य किं प्रमाणं इति चेदेकविंशादि स्तोमेषु तथैव ब्राह्मणे क्लृप्तेरिति ब्रूमः । क्लृप्तेन हि प्रकारेण कल्प्यं कल्पयितुं न्याय्यम् । किञ्चात्र जैमिनिसूत्रे श्रुतिरप्युपन्यस्ता 'त्रिप्रायणास्तोमाः त्रिर्मध्याः त्र्युदयना भवन्तीति विज्ञायत इति ॥ ७ ॥

अथ यत्र विष्टावा न सन्ति, पर्यायास्तु विद्यन्ते यथा त्रिकस्तोमे त्रिवृतश्च उद्यत्या विष्टुतौ, तत्र कथं पर्यायधर्मः कुशाविधानं कार्यं, अत आह—

१५६७. तदभावे तृचभागास्थानेषु पर्यायाणां पर्यायाः स्युः ॥ ८ ॥

स्तोमान्तरे तावद्विष्टावाः पर्यायाश्चोभये वा पृथक् पृथक्

स्थानेषु कुशाभिर्गणनीयाः। तत्र नवस्थानानि भवन्ति। [1]यथो यतगुदगग्रं प्रथमं विष्टामित्यादि। [2]तथैव विधा पर्याया उत्तरोत्तरा इति। तत्र त्रिकस्तोमे विष्टावाभावात् पर्यायाणामेव स्थानत्रये गणनमपेक्षितम्। कानि तानि स्थानानीत्यपेक्षित इदमुच्यते। स्तोमान्तरे पर्यायाणां यानि तृचभागानां स्थानानि तृचभागागणनस्थानानि इत्यर्थः। तेषु त्रिकस्तोमस्य पर्यायाः स्युः। पर्यायास्तत्र गणनीया इत्यर्थः। एवं सति पर्यायाणा उत्तरोत्तरदेशत्वं पूर्वानुपयुक्तस्थानपरिग्रहश्च सिद्धो भवतीत्यभिप्रायः॥ ८॥

१५६८. यथा वा एकः पर्यायः॥ ९॥

अथवा स्तोमान्तरेष्वेकः पर्यायो यादृशो येषु स्थानेषु तेषु त्रिकस्तोमपर्यायाः स्युः। एतदुक्तं भवति। एकपर्यायसंबन्धिषु तृचभागाख्यापरिचरास्थानेष्विति। स्पष्टश्चेवं ×निदानकारेणोक्तं। त्रिवृत उद्यत्या कुशाविधाने विप्रतिपद्यन्ते यथैकः पर्याय इत्येके तृचभागस्थानेषु पर्यायाणां पर्यायाः स्युरित्येके, इति॥ ९॥

१५६९. नैकिनि पर्याया क्रियन्ते, तथा त्रिके विष्टावाः॥ १०॥

स्पष्टम्॥ १०॥

×प्रस्तोतायिष्टुतीर्विदध्यात् उदगग्राभिः प्रथमं विष्टावं प्राक्संस्थ, इत्यादिना कुशाविधानमुक्तं-तत्र त्रिवृत उद्यत्या इत्यारभ्य-एतेनैव जातीया व्याख्याताः इति विशदीकृतम्-नि-सू प्रपा-१ ख-११।

1. द्रा-४-२-१२। 2. द्रा-४-२-१४।

१५७०. त्रिवृतश्चोद्यत्याम् ॥ ११ ॥

त्रिवृत्स्तोमस्य उद्यत्यां त्रिष्टुतौ विष्टावा न सन्ति । पर्यायस्य तृचेविभागाभावादिति ॥ ११ ॥

इदानीं समानां विषमाणाञ्चभेदेन पर्यायक्लृप्तिं वक्ष्यन् समलक्षणन्तावदाह—

१५७१. समेषु समप्रयोगः स्तोत्रीयाणाम् ॥ १२ ॥

समेषु स्तोमेषु स्तोत्रीयाणां त्रिषु पर्यायेषु समशो विभज्य प्रयोगो भवति । यत्र समशस्तेषांविभागः शक्यते ते समा इति । समलक्षणकथनमिदं स्पष्टमाह *निदानकार. ।। यस्त्रैधं व्यूह्यमान समाः पर्याया भवन्ति स सम.ततोऽन्यो विषम इति।।१२

समलक्षण कथनादेवार्थाद्विषमाः लक्षिताः । तानेव द्विधा विभज्यप्रदर्शयति—

१५७२. एकैकाधिशयेषु अधिका द्वे द्व्यधिशयेषु ॥ १३ ॥

एकाधिशयेष्वेकास्तोत्रीयाऽतिरिच्यते । किमुक्तं भवति ?- येषु समविभागस्याशक्तेः एकाऽतिरिच्यते ते एकाधिशयानाम विषमा । यत्र द्वे अतिरिच्येते द्व्यधिशयानाम विषमा इति इदमपि लक्षणकथनं । **अत्र निदानकारः – य एकया समतामतिक्रामति, स एकाऽधिशय इति ॥ १३ ॥

---

*अथातस्तोमान् व्याख्यास्यामः इत्यारभ्यस्तोमविधानमुक्त, तत्र यस्त्रैध व्यूह्यमानः समाः पर्याया भवन्ति स समः अतोऽन्येविषमाः. इति प्रपञ्चः । नि-सू-प्र-१-ख-८

**यएकया समतामतिक्रामति सएकाधिशयः यो द्वाभ्यां सद्व्यधिशयः त्रिकप्रभृतयः षडुत्तराः इत्यादिना तृचभागावाप परिचरव्यवस्था निरूप्य, युग्मायुक् पर्यायाश्च सम्यक् प्रदर्शिताः निदा-सू-प्र-१-ख-८

१५७३. ते विषमाः ॥ १४ ॥

त एकाधिकयाद्व्यधिकयाश्च विषमा इति कण्ठेनैवोक्तं विस्पष्टार्थमिति ॥ १४ ॥

एवं तावत् समविषमलक्षणमुक्त, अथविषमेषु तत्सजातीयात् समस्तोमात्पर्यायसंहारं वक्ष्यन्, सजातीयत्वन्नाम युग्मत्वमयुग्मत्वं वेति मन्वानः तल्लक्षणमाह—

१५७४. युग्मायुग्मा द्व्युत्तरौ भावेन(ण) वर्तेते ॥ १५ ॥

युग्मत्वमयुग्मत्वञ्च द्व्युत्तरौ भावेन वर्तेते ॥ १५ ॥

तदेवदर्शयति—

१५७५. अयुज एकि प्रभृतयः ॥ १६ ॥

एकिप्रभृतयो द्व्युत्तरा अयुज इत्यर्थः । यथैकत्रिकः पञ्चकः सप्तकः इत्यादयः स्तोमा इति ॥ १६ ॥

१५७६. द्विकप्रभृतयो युजः ॥ १७ ॥

द्विकप्रभृतयः द्व्युत्तरा युग्मा इत्यर्थः । यथा द्विकश्चतुष्कः षट्क इत्यादयः ॥ १७ ॥

ननु च अनर्थकमेव [1]युग्मायुग्मलक्षणकथनम् । यदि समो विषमश्च प्रत्येक युग्मायुग्मस्वरूपेण द्विविधःस्यात् तदानीं युग्मात् समात्, अयुग्मे विषमे पर्याय सहरेदित्येवं विशेषणार्थं लक्षणकथनं अर्थवत्स्यात् नान्यथेत्याशङ्कामपनुदन्नाह—

१५७७. व्युत्तरौ भावेनोभयेषाम् समत्वैपम्यम् ॥ १८ ॥

1. क. युग्मायुग्मकथनं ।

उभयेषु युग्मानामयुग्मानाञ्च साम्यमस्ति । तथैव वै-षम्यञ्च अस्ति । समो विषमश्च प्रत्येक युग्मायुग्मरूपेण द्विविध इत्यर्थं ॥ १८ ॥

तदेव दर्शयति—

१५७८. एकिप्रभृतय एकाधिशयाः ॥ १९ ॥

एकिप्रभृतय न्युत्तरा ये व्यत्यासमयुजोयुजश्च ते सर्वे एका-धिशयविषमा इत्यर्थं ॥ १९ ॥

१५७९ द्विकप्रभृतयो द्व्यधिशया ॥ २० ॥

द्विकप्रभृतयस्त्र्युत्तरा ये व्यत्यासमयुजो युजश्च ते सर्वे द्व्यधिशयविषमा । अनेन सूत्रद्वयेन विषमाणां स्तोमाना युग्मायुग्मरूपेण द्वैविध्य दर्शितमिति ॥ २० ॥

१५८०. समास्त्रिकप्रभृतयः ॥ २१ ॥

त्र्युत्तरीभावेणैव त्रिकप्रभृतय. त्र्युत्तरा ये व्यत्यास युजोऽयुजश्च ते सर्वे समा इत्यर्थं । यथा त्रिकत्र्यष्टको नवद इत्यादय । एव तावद्युग्मायुग्मत्व सम वैषम्य एकाधिशय द्व्य-धिशयत्वञ्चेति त्रीणि रूपाणि दर्शितानि ॥ २१ ॥

अथ तन्निमित्तकान् पर्यायान् कल्पयति—

१५८१. विषमाः समस्यार्थैः वर्द्धन्ते ॥ २२ ॥

विषमाः स्तोमा पञ्चविंशादयः समानामेकविंशादिस्तो-माना पर्यायैं वर्द्धन्ते इति ॥ २२ ॥

कथमित्याह—

१५८२. यावन्मितोनन्तरौसमौ तयो पर्यायान् संहरेत् ॥ २३ ॥

१५९७. यदवसानः पूर्वः पर्यायः तत्प्रभृतिभिः उत्तरस्तत्समात्-साम्यम् । ८ ।

पूर्वस्य पर्यायस्य यदवसान उत्तमाया. सकृद्वचन, त्रिर्वचन, चतुर्वचन वा तदेवोत्तरस्य पर्यायस्य प्रथमाया कार्यम् तत् समात्-साम्यमित्याचक्षत इति ॥ ८ ॥

१५९८ तदुभय कुर्यात् ॥ ९ ॥

तदनन्तरोक्तमुभयमपि दोप समात्साम्यञ्च सर्वत्रावश्य-सपादयेत् । कुतः? ब्राह्मणेन सर्वास्वपि विष्टुतिषु तथैव दर्शना-दिति ॥ ९ ॥

१५९९. ब्रह्मायतनीयाश्च ॥ १० ॥

कुर्यादित्यनुषङ्गः, स्वयमेव ता व्याख्यास्यति ॥ १० ॥

१६००. तथा पर्यारोहम् ॥ ११ ॥

अत्रापि कुर्यादित्यनुषङ्गः । पर्यायरोहोनाम उत्तरोत्तर पर्यायाणां ज्यायस्त्व, यथा पञ्चकः सप्तको नवक इति ॥ ११ ॥

१६०१. असंभवस्तु सर्वेषु समात्समामेव चिकीर्षेत् ॥ १२ ॥

यथोक्त गुणचतुष्टयस्य क्वचित्परस्पर विरोधेनासभवे-तेषु समा समामेव विष्टुतिं चिकीर्षेत् । इतरदुपेक्षेत । तत्र यत्र तृतीय पर्यायो ज्यायांस्तत्सर्वमुदाहरण, तत्र समात्साम्यब्रह्माय-तनीययो विरोधः तृतीयपर्यायोपक्रमे ब्रह्मायतनीयायाः सिद्धयर्थं अधिकस्तोत्रीयावापे सति पर्यवसानेन साम्य न सिद्ध्यति, अथ यदि तत्रनावपेत्तदा ब्रह्मायतनीया न सिद्ध्यति, सोऽयं विरोध. ॥ १२ ॥

ननु च तृतीयपर्यायस्य ज्यायस्त्वादय विरोध इति पर्यायारोहस्त्वज्यतो, नेत्याह—

१६०२. पर्यायप्रत्यवरोहन्तु वर्जयेत् ॥ १३ ॥

प्रत्यवरोहो नाम प्रथम ज्यायास पर्याय कृत्वा कनीयसः पश्चात्करणमिति ॥ १३ ॥

१६०३. त्रिडायतनीयाश्च ॥ १४ ॥

वर्जयेदित्यनुषङ्ग. ॥ १४ ॥

१६०४. प्रथमायाः प्रयोगे भूयिष्ठे ब्रह्मायतनीया ॥ १५ ॥

प्रथमाया ऋच प्रयोगे ऋगन्तरात्‌भूयिष्ठे ब्रह्मायतनीयेति विष्टुतिरुच्यते ब्राह्मणे इति ॥ १५ ॥

१६०५. मध्यमायाः क्षत्रायतनीया ॥ १६ ॥

प्रयोगे भूयिष्ठे, इत्यनुवर्तते इति ॥ १६ ॥

१६०६. उत्तमायाः विडायतनीया ॥ १७ ॥

उत्तमाया प्रयोगे भूयिष्ठे त्रिडायतनीयेति ॥ १७ ॥

१६०७. दाशरात्रिकेभ्यः पर्यायकृतौ पश्चापर्यायानेन संहरेत् ॥ १८

दाशरात्रिकेभ्य त्रिवृदादिभ्य. पर्यायेषु कल्प्यमानेषु दाशरात्रिकाणा पश्याविष्टुतेरेव पर्यायानाहरेत् । यथा अष्टादशेषु सप्तदशात् पर्यायाहरणे सप्तदशस्य विष्टुतीना प्रथमाया एवाहरणमिति ॥ १८ ॥

१६०८. परिवर्तिन्यास्तु त्रिवृतोऽन्यादेशे ॥ १९ ॥

यत्र क्वचित्, त्रिवृत्स्तोमात् यदा पर्यायाहरण, तदा त्रिवृत. परिवर्तिन्या एव त्रिष्टुतेराहरेत्, नोत्तरया. पश्चात्वेपी-

त्यर्थ । अनादेशे इति दशस्तोम उद्यतीपर्यायस्यापि विकल्पेना ऽऽहरण आदेक्ष्यति । तद्वर्ज्यमित्यर्थ ॥ १९ ॥

१६०९ एष न्यायो अनादिष्टानां ॥ २० ॥

ब्राह्मणे, अनादिष्ट पर्यायाणा स्तोमाना विषम, उक्तो न्यायो वेदितव्य इति ॥ २० ॥

इदानी तेष्वेव केषुचिद्विशेष दर्शयति—

१६१० एकित्यावृत्तिस्थानगते त्रिः पुरस्ताद्धिंकार शाण्डिल्य ॥ २१॥

आवृत्तिस्तोत्रगत एकिस्तोम त्रि पुरस्ताद्धिंकार कर्तव्य। त्रयाणा पर्यायाणा स्थाने निवेशादिति ॥ २१ ॥

१६११ त्रिके च प्रथमयास्तोमपूरणम् ॥ २२ ॥

त्रिकस्तोमे प्रथमयैवर्चा त्रिरावृत्तया त्रिस्तोमसपादनञ्च, स एव शाण्डिल्यो मन्यत इति ॥

१६१२ तृचेन धानञ्जय्य. ॥ २३ ॥ स्पष्टमिति ॥ २३ ॥

१६१३ सकृदेकिनि हिंकारम् ॥ २४ ॥

एकिस्तोमे च सकृदेव हिंकार च धानञ्जय्यो मन्यत इति ॥

१६१४. जातिसहारपक्षिनि ॥ २५ ॥

पक्षिस्तोम जातिसहार एव काय न युग्मायुक् सहार । तत्र त्रिकस्तोमात्पर्यायद्वय त्रिवृतस्तोमादेक इति युग्मायुग्म सहारपक्ष त्रिकस्तोमादेक पट्कात्पर्यायद्वयमिति स्यात् । तत्र कोदोषः? उत्तमाया सकृद्वचनमपि न स्यादिति ॥ २५ ॥

१६१५ पञ्चदश पर्यायैः पृथगनुपूर्वं शान्त्रिपर्याधाश्चिदव्यात् ॥ २६ ॥

गतम् ॥ २६ ॥

इति द्वितीय खण्ड

अथ तृतीयः खण्डः

१६१६. संलंघितायामिति माडितायनः ॥ १ ॥

यदि पर्यायैः अस्तुतमभिव्युच्छेत् पञ्चदशभिः होत्रे स्तुयुः। पञ्चभिः पञ्चभिः इतरेभ्य इति ब्राह्मणं, तत्र होतृपामवर्जं त्रयोपि रात्रिपर्यायाः पञ्चिस्तोमाः। तत्रापि जातिसंहारे प्राप्ते इद-मुच्यते। *ऋत्विग्भिः प्रमादात्राल्यां संलंघितायां*–सामस्त्येन लंघितायां सर्वैरपिरात्रिपर्यायैः अस्तुते व्युष्टायां इत्यर्थः। तदानीं पञ्चदशस्तोमस्य ये पर्याया ब्राह्मणे समाम्नाताः तैस्त्रिभिस्त्रीन् रात्रिपर्यायान् क्रमेण पृथक् पृथक् विदध्यादित्यर्थः ॥ १ ॥

पञ्चभ्यो हिंकरोति इति ब्राह्मणोक्तः प्रथमः पर्यायः प्रथमे रात्रिपर्याये स्यात्। द्वितीये द्वितीयः तृतीये तृतीयः। कथं तत्र क्रियाप्रकार इत्याह—

१६१७. तत्र विष्टावा पर्यायस्थानेषु स्युः ॥ २ ॥

तत्र पर्यायाणां विष्टावाः ते अत्र पर्यायस्थानेषु स्युरिति तदीयान्विष्टावान् अत्रपर्यायत्वेन कल्पयेदिति ॥ २ ॥

१६१८. पृथक् च स्तोत्रीयासु पर्यायाः ॥ ३ ॥

ते च विष्टावरूपाः पर्याया पृथगेव स्तोत्रीयासु भवेयुः, तद्यथा तिसृभ्यो हिंकरोति सप्रथमया एकस्यै हिंकरोति स उत्त-मयेति॥ एवं प्रथमस्य पञ्चदशपर्यायस्य त्रीन् विष्टावानत्र पर्या-यत्वेन कल्पयेत्। एवमितरयोरपीतिमाडितायनस्य पक्ष इति॥ ३॥

१६१९. दाशरात्रिकेभ्य एकमा ज्यायस्तु तस्मात्पूर्वस्योत्तमे पर्याय आवपेत् ॥ ४ ॥

दाशरात्रिकेभ्यः त्रिवृदादिभ्यः एकया स्तोत्रीयया अधिकेषु षोडशपञ्चविंशप्रभृतिषु तेभ्यः पूर्वस्योत्तमे पर्याये, एकामावपेदिति ॥ ४ ॥

१६२०. ब्रह्मायतनीया तु तेषु ॥ ५ ॥

तु शब्दो अवधारणे । यद्यपि विरोधे समात्समामेव विकीर्षेत् इति *पूर्वमुक्तं, तथापि तेषु ब्रह्मायतनीयैव विष्टुतिः कार्या इत्यर्थः ॥ ५ ॥

१६२१ क्षत्रायतनीया वा ॥ ६ ॥

अथवा तेषु क्षत्रायतनीया विष्टुतिः स्यात् । उत्तमे पर्याये मध्यमायामधिका एका स्तोत्रीया आवपेदित्यर्थः । तदानीं समात्साम्यसिद्धिरिति ॥ ६ ॥

१६२२. आक्रन्दन्तु गौतमचत्वारिंशे ॥ ७ ॥

आक्रन्दस्य लक्षणं महाव्रते पूर्वोक्तम् । "चतुर्विंशेन स्तुत्वा मध्यमामर्हि कृत्वा तृचस्य प्रस्तुयात्स आक्रन्दो नामे"ति । एवं सति एकाचत्वारिंशस्तोमं समम्भो विभज्य त्रिभिः पर्यायैः स्तुत्वा पुनः———ध्यमां ऋच हिंकाररहितां प्रस्तुत्य सकृद्—भिदादिति ॥ ७ ॥

१६२३. धानञ्जय्य इतरेषु ॥ ८ ॥

इतरेषु पूर्वोक्तेषु दाशरात्रिकेभ्य एकया अधिकेष्वित्यर्थः । तेष्वाक्रन्दं कर्तुं मन्यते धानञ्जय्य इति ॥ ८ ॥

१६२४. दक्षिणिचतुष्को मध्ये परिवर्तिनी पर्यायावमिति ॥ ९ ॥

*ला-११-४४, ५ ।

। दशिस्तोमे मध्यम पर्यायः चतुष्को भवेत्, प्रथमोत्तमौ परिवर्तिनौ पर्यायाविति ॥ ९ ॥

१६२५ उद्रत्या वा ॥ १० ॥

अथवा उद्रत्या विष्टुते. प्रथमोत्तमौ पर्यायौ, तदानी मध्यमायामेव चतुष्क पर्याय अन्यथा उद्रतीत्वविरोधात् । तदा क्षत्रायतनीमपि सोढव्येति ॥ १० ॥

१६२६. उद्रतीपर्याययोः ब्रह्मायतनीयां कुर्वन् प्रथमायां चतुष्कं कुर्यात् ॥ ११ ॥

उद्रतीपक्षे यदि ब्रह्मायतनीया कर्तुमिच्छेत्तदानी, प्रथमाया त्रृचि चतुष्क पर्याय कुर्यात् । न मध्यमायामिति । ११ ॥

१६२७ द्वादशे तृचभागस्थानेषु द्विकाविष्टावा आवापस्थानेषु वा ॥ १२ ॥

द्वादशस्तोमे चतुष्का पर्याया इति तावत्सिद्धम् । विष्टावप्रकारे तात्रद्विकरूपः । तृचभागस्थानेषु द्विकाविष्टावा स्युः । आवापस्थानेषु वेति ॥ १२ ॥

१६२८. त्रयोदशत्रयोविंशयोः पञ्चविंशे च मध्यमः पर्यायो ज्यायान् एकज्यायस्सु कनीयानेककनीयस्सु ॥ १३ ॥

त्रिपुपर्यायेष्वेक पर्यायो ज्यायान् यस्य एकज्यायानिति बहुव्रीहि । तथैककनीयानित्यपि त्रयोदशपञ्चविंशौ जातिसहारपक्षे एककनीयासौ, युग्मायुक् सहार तु एकज्यायासौ, त्रयोविंशस्तु विपरीत । एतेषु त्रिषु यो य ज्यायान् पर्यायस्समध्यमः कार्यः । कनीयानपि पर्यायो मध्ये निवेशनीय इति ॥ १३ ॥

अथ तासां प्रयोगप्रकारः– आज्यानां प्रथमा, पृष्ठानां द्वितीया, उक्थानां तृतीयेति, चतुश्चत्वारिंशे ब्राह्मणोक्तो यः प्रकारः स इहापि स्यात् । तत्र सवनसमीपन्तौ पूर्वं प्रयोगः, स्तोत्रसमीपन्तौ उत्तरः इत्युक्तम् । तत्प्रयोगद्वयमपि द्वात्रिंशे तथैव कुर्यादिति धानञ्जय्यमतम् । तत्र यत्पूर्वमुक्तं, 'तथा कुर्यादहर्भाजि पथ्यामन्यत्रे'ति तदप्यत्र द्रष्टव्यमिति ।

१६४३. अप्यहर्भाजि प्रथमयैवेति शाण्डिल्यः ॥ २८ ॥

न तिस्रो विष्टुतयः कार्याः । तासां प्रथमैव केवलं कल्प्या तयैव द्वात्रिंशस्तोमविधानं कार्यं । यद्यपि द्वात्रिंशस्तोमः कृत्स्नमहर्भजते छन्दोमदशाहे, तदापि तयैव प्रथमया कार्यम् । न चतुश्चत्वारिंशन्याय अत्रादरणीय इति ॥ २८ ॥

इति तृतीयः खण्डः

अथ चतुर्थः खण्डः

१६४४ चतुष्टोमयोः चतुष्पर्यायाः ॥ १ ॥

*पञ्चविंशब्राह्मणे अथैष चतुष्टोम इत्यनुवाकद्वयेन द्वावेकाहौ चतुष्टोमसंज्ञकौ विहितौ स्तोमश्च तयोः क्लृप्तः चतसृभिर्बहिष्पवमानं अष्टाभिराज्यानि द्वादशो माध्यन्दिनः पवमानः, षोडशानि पृष्ठानि, विंश आर्भवः, चतुर्विंशोऽग्निष्टोम इति । प्रथमस्य क्लृप्तिः । द्वितीयस्य चत्वारि चतसृभिः चत्वार्यष्टाभिश्चत्वारि द्वादशभिश्चत्वारि षोडशिभिरिति स्तोमक्लृप्तिः । चत्वारि चत्वारि स्तोत्राणि क्रमेणोक्तस्तोमानीत्यर्थः । प्रथमोऽ-

*ता० ब्रा०-१९.५,६ ।

-ग्निष्टोमो द्वितीयष्षोडशिसंस्थ तत्र सूत्रकार प्रतिपद्यते । चतुष्टोमयोरिति। चतुष्टोमयोरेकाहयो र्ये स्तोमाः आवृत्तिस्तोत्रगताः ते सर्वे चतुष्पर्यायाः कार्या इत्यर्थः । तत्र प्रमाण चतुर्भिः हिंकरोतीति शाखान्तरमस्तीति *निदानकार इति ॥ १ ॥

१६४५. तत्र चतुष्के द्वौ प्रथमायां पर्यायौ स्यातां यदि ब्रह्मायतनीयां कुर्यात् ॥ २ ॥

तत्र चतुष्के तावदेकतश्चत्वार पर्यायाः तेषां त्रिभिः पर्यायैः तृचेऽवरुद्धे चतुर्थस्य कुत्र निवेश इत्यपेक्षायां इदमुच्यते । द्वौ पर्यायौ प्रथमायामानन्तर्येण कुर्याद्यदि ब्रह्मायतनीयामिच्छेत् इति ॥ २ ॥

१६४६. मध्यमायां क्षत्रायतनीयाश्चेत् ॥ ३ ॥

यदि क्षत्रायतनीयामिच्छेत् मध्यमायां द्वौ स्यातामिति ॥

१६४७ तथाऽष्टिनि ॥ ४ ॥

अष्टिस्तोमेऽपि तथैव कामनानुसारेण कर्तव्यमिति ॥ ४ ॥

१६४८. द्विकास्तु तस्य पर्यायाः ॥ ५ ॥

अष्टिस्तोमस्यपर्यायाद्विपरिणामा स्यु । तत्र च द्वाभ्या हिंकरोति स प्रथमयेति प्रथम. पर्याय. । एवमेव द्वितीयः, स मध्यमयेति तृतीय, स उत्तमयेति चतुर्थ इति ॥ ५ ॥

तत्रैव मतान्तरमाह—

१६४९. **पूर्वयोः पूर्व उत्तरयोः उत्तर एव विहितावपराविति शाण्डिल्यः ॥ ६ ॥

*तदपिशश्वत् ब्राह्मणे भवति यच्चतुश्चतुर्हिंकरोति । नि-सू-प्र-७-ख-८ ।

**एतत्सूत्रानन्तरं "पूर्वयो. द्वितीय. पृथक् स्तोत्रीयास्त्वितर इति धानञ्जय्यः" इत्यधिकमेकं सूत्रं ज-पुस्तके ।

प्रथमाया द्वितीययो. ऋचोः द्वितीय पर्याय इत्येते त्रय पर्याया तिसृष्वृक्षु क्रमेण पृथक्स्युरित्यर्थं । तद्यथा द्वाभ्या हिंकरोति स प्रथमयेति प्रथम पर्याय । द्वयो ऋचो द्वितीय, समध्यमयेति तृतीय, स उत्तमयेति चतुर्थ इति ॥ ६ ॥

१६५०. द्वादशे व्याख्यातौ प्रथमोत्तमौ ॥ ७ ॥

चतुष्टोमादेकाहादन्यत्र द्वादशे स्तोमे त्रिणवाद्यावत्समा इति वचनाच्चतुष्का पर्याया, तद्वदेवात्रापि प्रथमोत्तमौ पर्यायौ भवत । तयोश्च द्वादशे तृचभागास्थानेषु त्रिकाविष्टावा इति सूत्रेणैव विष्टावकल्प्ति उक्ता । तदिदमुक्त व्याख्यातौ प्रथमोत्तमाविति ॥ ७ ॥

१६५१. मध्यमौ द्विकौ ॥ ८ ॥

द्वादशस्तोमस्य मध्यमौ पर्यायौ द्विपरिमाणौ स्यातामिति

१६५२. पूर्वयो पूर्वउत्तरयोरुत्तरः ॥ ९ ॥

तयोर्द्विकयो पूर्व पर्याय प्रथमद्वितीययो ऋचोर्भवेत् । मध्यमोत्तमयोरुत्तर इति ॥ ९ ॥

१६५३ षोडशे चत्वारो द्वादशपर्याया ॥ १० ॥

चतुष्टोमादन्यत्र द्वादशस्तोमस्य ये पर्यायाश्चतुष्कास्ते चत्वारष्षोडशे स्युरित्यर्थं । द्वादशपर्याया इति बहुवचन तत्रदेव विष्टावसिद्धयर्थं । यथोक्त द्वादशे तृचभागास्थानेषु द्विकाविष्टावा इति ॥ १० ॥

१६५४. तेषां मध्यमौ सदृशौ ॥ ११ ॥

तेषा पर्यायाणा चतुर्णां मध्यमौ विष्टावतस्सदृशौ

स्याता । स एकया स द्वाभ्या स एकयेति द्वयोरपि तुल्यो विष्टाव इत्यर्थः ।। ११ ।।

१६५५. चतुर्विंशे चत्वारः षट्काः पर्याया द्विका विष्टावाः ॥ १२

षट्का पर्यायाइति न्यायसिद्ध, द्विका विष्टावा इत्येतद्विधिरिस।म् । अन्यथा त्रिचमागाया त्रिवंचन स्यादिति ॥१२ तदेकस्मिन्नेव तृचे पर्यायचतुष्टयमपि प्राप्नम् । तन्निवारयति—

१६५६. पृथक् तृचेषु तु चतुस्तृचः ॥ १३ ॥

चतुर्णां तृचाना समाहार चतुस्तृचम् । पृथगेव चतुर्षु तृचेषु चतुर्विंशस्य च वार पर्यायाः कार्या इत्यर्थः । के पुनस्ते तृचा इति चेत्तत्राह कल्पकार । यज्ञायज्ञीयस्य तृचे वारव तीयेन षड्भि सा कमश्वस्य तृचे षड्भि हारिवर्णस्य तृचे षड्भिस्तैरश्च्यस्य तृच षड्भिरिति । श्रुतिश्च भवति—एक साम बहूनि छन्दासि तस्मादेको बहून् पोषान् पुष्यतीति । तत्र यज्ञायज्ञीयतृचे वारवन्तीयेन स्तुवन् षड्भ्योहिंकारोति सद्वाभ्या सद्वाभ्यां सद्वाभ्यामिति समान्विष्टावान् कुर्यात् । एवमुत्तरेष्वपि तृचेषु द्रष्टव्यमिति ॥ १३ ॥

१६५७ द्वयोर्द्वयोर्वा द्वैधम् ॥ १४ ॥

यद्वा द्वयोर्द्वयोरेक पर्याय कुर्यात् । ननु च चत्वार एव तृचाविद्यन्ते । तेषु पर्यायद्वये कृते इतरस्य पर्यायद्वयस्य केषु प्रवृत्ति इत्यपेक्षाया उक्त द्वैधमिति ॥ द्वधा पर्यायान् प्रवर्तयेत् । पूर्वमिन् पर्यायद्वये सकृत्समाप्ते पुनरपि तेष्वपर पर्यायद्वय कुर्यादित्यत्यर्थः । तद्यथा यज्ञायज्ञीयसाकमश्वतृचयोः प्रथमः पर्यायः,

हारिवर्णतैरश्च्यतृचयोः द्वितीयः, पुनरप्येवमितरौ पर्यायाविति ॥
प्रकारान्तरं सूत्रचतुष्टयेन दर्शयति-

१६५८. यज्ञायज्ञीयर्क्षु वा प्रथमः प्रथमासु च ॥ १५ ॥

यज्ञायज्ञीयतृचे साकमश्वादीनाञ्च प्रथमास्वृक्षु प्रथमः पर्यायः कार्य इति ॥ १५ ॥

१६५९. यज्ञायज्ञीय प्रथमायां द्वितीयः साकमश्वर्क्षु परमध्यमयोश्च ॥

यज्ञायज्ञीयस्य प्रथमाया साकमश्वस्य कृत्स्ने तृचे परयोः साम्नोः हारिवर्णतैरश्च्ययोः मध्यमयो ऋचोश्चैतासु द्वितीयः पर्याय इति ॥

१६६०. पूर्वमध्यमयोः तृतीयो हारिवर्णर्क्षुतैरश्च्योत्तमायाश्च(श्च) । १७

पूर्वयो यज्ञायज्ञीय साकमश्वयो मध्यमे ऋचौ तयोश्च हारिवर्णस्य च कृत्स्ने तृचे तैरश्च्यसाम्न उत्तमस्याञ्च तृतीय पर्याय इति ॥ १७ ॥

१६६१. पूर्वोत्तमासु चतुर्थः तैरश्च्यर्क्षु च ॥ १८ ।

पूर्वेषा यज्ञायज्ञीयादीना त्रयाणा साम्नामुत्तमासु ऋक्षु तैरश्च्यस्य च कृत्स्ने तृचे चतुर्थ पर्याय इति ॥ १८ ॥

१६६२ उपोत्तमो वा द्विकत्रिशाओऽश्वमेधेऽष्टादशादिरे ॥ १९ ॥

एव चतुष्टोमयो पर्यायक्लृप्ति उक्ता । तयोराद्यश्चतुष्टोमोऽश्वमेधस्य प्रथममहर्भवति । तथा च ब्राह्मण गश्चतुष्टोम सोमो भवति अश्वस्य सर्वत्वायेति । तत्रैकस्मिन्नेव तृच यज्ञायज्ञीयमग्निष्टोमसाम विहित कल्पकारेण । तत्र यदुक्त चतुर्विधे चत्वार पट्वा पर्याया द्विकत्रिष्टाया इति, तत्र तृचा-

न्तराभावादेकस्मिन्नेव तृचे प्रवर्तते । तत्रैवेदं पक्षान्तरमुच्यते । चतुष्टोम उपोतमस्तृतीय एव पर्याय केवल द्विकविष्टावः स्यात् । अष्टादशस्तोमादितरे त्रय पर्याया आहर्तव्या इत्यर्थ ॥

पक्षान्तरमाह—

१६६३. पञ्चदशस्य पर्यायौ पूर्वैकविंशस्योत्तराविति वोत्तराविति वा ॥

पञ्चदशस्तोमस्य द्वौ पर्यायौ स्याता, एकविंशस्योत्तर पर्यायद्वयमिति । इदमश्वमेध एवोक्तमिति द्रष्टव्य । समाप्तिसूचनार्थोऽभ्यास इति ॥ २१ ॥

स्तोमानां प्रविभागज्ञः सोमसालोक्यमश्नुते ।
अनन्तां श्रियमायुश्च कीर्तिञ्च लभते ध्रुवम् ॥

इति सप्तदशपटले चतुर्थ खण्ड

इति काश्यपगोत्रेण वह्निना प्रीतये हरे. ।
छन्दोगसूत्र दीपेऽस्मिन् कृतस्तोमविनिर्णय ॥

सप्तदश पटल समाप्तः



## अथ अष्टादशः पटलः

### प्रथम खण्ड

इदानीं विकृतिष्वार्षेय कल्पस्य मूलमतिदेश प्रस्तौति—

१६६४ छन्दो दैवतसामान्तयोग न्यायान् ब्रुवते यथा षोडशिमतो अतिरात्रस्य ज्योतिष्टोमस्य । १ ॥

योगशब्द प्रत्येकमभिसबध्यते । छन्दो योगो दैवतयोगस्सामान्त योगश्च । यथा तेन प्रकारेण, षोडशिमतोतिरात्रस्य

ज्योतिष्टोमस्य छन्दोयोगा दैवतयोगास्सामान्तयोगाश्च भवन्ति, तानुत्तरेष्वपि क्रतुषु तथैव न्यायानुक्तान् ब्रुवते न्यायविदः । कुत ? ज्योतिष्टोमे सर्वधर्माम्नानादुत्तरेषु धर्मानाम्नानात्तेषां धर्मापेक्षत्वाच्चेति । छन्दोयोगो नाम गायत्रीषु कृत्स्नमाज्यं बहिष्पवमानं, त्रिछन्दा माध्यन्दिनः पवमानः, पञ्चछन्दा आर्भवः बार्हतानि पृष्ठानीत्येवं प्रकारः । दैवतयोगो नाम सर्वपवमाना सौमदैवत्याः । नाना दैवत्यान्याज्यानि । सर्वाणि पृष्ठानि ऐन्द्राणीत्येवमादि । सामान्तयोगः कथं ? विकृतिषु सामान्तराणमपि प्राकृता एव सामान्ता स्युः । तद्यथा पवमानान्त्ययोः औशनकावयो स्थाने यानि सामानि तानि स्वाराण्येव स्युः । तथा ऐडनवृहतीमारभन्त इत्येवमादि द्रष्टव्यम् । तत्र ज्योतिष्टोमवत्सर्वं विकृतिष्विति वक्तव्येऽछन्दोदैवतेति वचनं विकृतिषु कॢप्तसामान्यत्वेपि छन्दोदैवतानि तान्येव प्रवर्तन्ते इति वक्तुमिति ॥ १ ॥

१६६५. उक्थ्योक्थमे अनुष्टुभोन्यायाः ॥ २ ॥

उक्थ्यानि त्रीणि स्तोत्राणि भवन्ति, तेषामुत्तमस्तोत्रं विकृतिषु सर्वास्वनुष्टुभ एव न्यायाः ॥ २ ॥

ननु च प्रकृतौ त्रिच्छन्दस ऋचो भवन्ति । ककुप्प्रथमाऽथोष्णिगथ पुरउष्णिगिति [1]ब्राह्मणम् । तत्कथमनुष्टुभोन्याया, अत आह—

१६६६ त्रिच्छन्दसस्तु वचनात् ॥ ३ ॥

---

[1] ता ब्रा ८ ख २६ । नि-सू प्र २ ख ११ ।

सत्यं, अस्ति ब्राह्मणमतिरात्रमध्यगते उक्थ्योत्तमे तद्वचनं, न पुन. उक्थ्यसंस्थे ज्योतिष्टोमे, इत्यभिप्रायः । तथा च वक्ष्यति अनुष्टुभ स्तोत्रीया स्यादुक्थ्यान्तेषु वैछन्दसोऽतिरात्रेष्विति ॥ ३ ॥ ननु च प्रकृतौ मन्त्रव्यतिरेकेण स्तोत्राणां न काचन देवता विद्यन्ते । येन विकृतौ देवताऽऽदिश्येत, अत आह—

१६६७. यद्देवत्यासु स्तुवते सा स्तोत्रदेवता । ४ ॥

सत्यमेवं, यद्देवत्यास्वृक्षु स्तुवते सैव स्तोत्रदेवता न पृथगस्ति, तेन विकृतौ ऋगन्तरागमे प्रकृतिवत्तद्देवत्या एव ऋच आहर्तव्या इति ॥ ४ ॥

१६६८. अन्वध्यायमपवादनिशामनम् ॥ ५ ॥

पूर्वोक्तस्य सामान्यातिदेशस्य प्रत्यक्षाध्ययनानुसारेणापवादो द्रष्टव्य इत्यर्थः । अध्ययनमध्याय प्रत्यक्षवचनमुत्तरापाठ इत्यादिक यथाग्निष्टुत्स्वाग्नेयीषु स्तुवत इति प्रत्यक्षवचनं, तथा व्यूढदशरात्रे त्रिष्टुब्जगतीनां प्रतिपदां प्रत्यक्षवचनं, तथा विश्वजिति बहिष्पवमाने नानादैवत्यानामृचां विधानम् । तथा अग्निष्टुत्स्वाग्नेयीषु स्तुवत इति प्रत्यक्षवचनात्सर्वस्तोत्राणां आग्नेयत्व । तथा छन्दोमेषु निधनान्ताः पवमाना भवन्तीति वचन प्रकृतसामान्ययोगादपवादः । एवमन्यदपि तत्र तत्र द्रष्टव्यमिति ॥ ५ ॥

अथ सामान्तयोगे विशेषं वक्ष्यन् सामानि तावच्चतुर्धा विभजति—

१६६९. स्वाराणि हाइकारस्वारपदानुस्वाराणि च । ६ ॥

ओहाइ इत्यनेन स्वरेण यानि सामानि समाप्यन्ते तानि

ह्राइकारस्वाराणि । ऋचामन्त्यमक्षरं स्वरयित्वा यानि समाप्यन्ते तानि पदानुस्वाराणि । यथौशनसावे सामनीति ॥ ६ ॥

१६७०. तेभ्योऽन्यान्यैडवाङ्निधनेभ्यश्च निधनवन्ति ॥ ७ ॥

इडेतिनिधनं येषां तान्यैडानि स्वारवाङ्निधनैडेभ्यः सामजातेभ्यः यदन्यत्सामजातं तन्निधनवदुच्यत इत्यर्थः । तदेवं चत्वारि सामजातानि ॥ ७ ॥

तत किमित्याह—

१६७१. सर्वेषां तुल्यान्तसन्निपाते जामि ॥ ८ ॥

सर्वेषां साम्नां तुल्यान्तेन तुल्यनिधनेन साम्ना सन्निपाते, जामिदोषो भवति । ऐडस्यैडेन सन्निपाते जामि, स्वारस्य स्वारेण सन्निपाते, निधनवतो निधनवता सन्निपाते । तथा च [1]ब्राह्मणं, "जामि वा एतद्यज्ञे क्रियते इत्याहु यत्सर्वाणि निधनवन्ति सह क्रियन्त" इति ॥ ८ ॥

१६७२ वाचोऽन्यत्र ॥ ९ ॥

वाङ्निधनादन्यत्र जामिदोषः, न वाङनिधनयो सन्निपात इत्यर्थः ॥ ९ ॥

१६७३. [illegible] कुर्यादनादेशे ॥ १० ॥

तज्जामि क्वचिदपि न कुर्याद्वचनादृते, यथा सर्वस्वारे सर्वस्वरा कार्या इति वचनम् । ततोऽन्यत्र प्रकृतिवज्जामिदोषः परिहरणीय इति ॥ १० ॥

१६७४ दशरात्रान् षाडहिकान्यष्टमनवमयोश्चैतान्यहीनतन्त्राणि ॥

1. ता-ब्रा-१६ ५-२५ । नि-सू प्र १ ख १२ १३ ।

दशरात्रे यानि पृष्ठयषडहस्य तन्त्राणि अष्टमनवमयोश्च ये तन्त्रे तानि दशरात्रादुद्धृतानि द्विरात्रप्रभृत्यहीनेषु प्रवर्तन्त इत्यर्थं । सप्तमदशमयोरह्नोर्नप्रकृतित्वमभिहित । तयो सवन-मुखीयगायत्र्यो अहरन्तरवत्पृथग्विधानाभावादिति ॥ ११ ॥

१६७५ ज्योतिषश्च गोश्चैकाहिके तन्त्रे ॥ १२ ॥

ज्योतिष्टोमस्य गोष्टोमस्य च ये तन्त्रे, ते एकाहेषु प्रवर्तेते, इत्यर्थं । तत्र रथन्तरपृष्ठेषु ज्योतिस्तन्त्र बृहत्पृष्ठेषु गोस्तन्त्रमिति स्वरसतो व्यवस्था । ननु च नवय ब्राह्मणे गोस्तन्त्रमधीमहे । सत्य, शाखान्तरे अधीतमिति प्रकृतित्वमिति ॥

१६७६. तयो समास उभयफलकम् ॥ १३ ॥

तयो ज्योतिष्टोमगोष्टोमतन्त्रयो समास उभयफलक नाम तन्त्र, तदपि क्वचिदेकाहेषु प्रवर्तते, इत्यर्थ ॥ १३ ॥

१६७७. कल्पसमायाण्युक्सामानियत्रसमवयन्ति तदाशीस्तन्त्रं यथाऽभिचरणीयेषु ॥ १४ ॥

य काम क्रतुस्तदभिवादि द्रव्य कल्पसमायमित्याचक्षत इति *निदानकारः । कल्प क्रतु तत्फलाभिरूपाणि ऋक्सामानि प्रायेण यत्र भवन्ति, तदाशीस्तन्त्र । यथा वज्रादिष्वेकाहेषु अपघ्नन् पवसे मृध इत्यादि । तदेव द्वादशतन्त्राणि । एतान्येव विकृतिषु प्रवर्तन्ते । नान्यत्किञ्चिदिति ॥ १४ ॥

ननु च नैषामेकमपि तन्त्र विकृतिषु दृश्यन्ते, सर्वत्र कल्प-

*अथ यत्तदभिवादि द्रव्य भवति यत्काम क्रतु तत्कल्प-समायमित्याचक्षते तदेतत्सार्वक्रतुकम् नि-सू-प्र-६-ख-२ ।

कारेणान्यथाऽन्यथा कल्पनात्। तस्मान्न तन्त्रनिश्चयः शक्यते कर्तुं अत आह—

१६७८. भूयिष्ठं तन्त्रलक्षणम् ॥ १५ ।

सत्यमन्यथाकल्पनं, तथापि यदीयमङ्गजातं यत्रभूयिष्ठं दृश्यते, तत् तन्त्रस्य ज्ञापकमित्यर्थः ॥ १५ ॥

१६७९. उत्तरयोः सवनमुखीये गायत्र्याविति गौतमस्थिः ॥ १६ ॥

यद्वा विकृतीनामुत्तरयोः सवनयोः मुखे ये गायत्र्यौ ते तन्त्रस्य लक्षणमिति मतान्तरम्। कुतः? प्रकृतिभूतेषु दशाहस्सु तयोरेव हि प्रत्यहं भेदोभवति। अन्यत्तु यज्ञायज्ञीयादिकं भूयिष्ठं साधारणं, तेन विकृतिष्वसाधारणगायत्रीदर्शनात्तंत्रनिश्चयः कार्य इति। तथा च कल्पकारवल्लृप्तान् स्विरात्रानधिकृत्य+ निदानकारः। 'आह्नीनिकतन्त्राणीति गौतमः। तद्गायत्रीभिःविजानीमः' इति ॥ १६ ॥

१६८०. माध्यन्दिनीयाश्वाचार्याणाम् ॥ १७ ॥

माध्यन्दिनसवनमुखीये विकृतिषु दृष्ट्वा तन्त्रस्यलक्षणं, तस्याः क्वचिदप्यव्यभिचारादिति बह्वाचार्यमतम्। ननु च यदि द्वादशैव तन्त्राणि तर्हि द्वादशभिरेव तन्त्रैः विकृतयः कल्पनीयाः न पुनः विकृतिषु अन्यथा कर्तव्यम्, उच्यते प्रत्यक्षविहितस्तोमसंभवार्थं तन्त्रस्यान्यथाकरण क्वचिदाहत्यैव सामान्तरविधानात्, क्वचिच्छाखान्तरात्। एवं तत्र तन्त्रनिदानं द्रष्टव्यमिति ॥१७॥

१६८१. द्विरात्रप्रभृत्यहीनेषु प्राक्षडहेभ्योऽन्त्यमन्त्यमेकाहिकमिति राणायनीपुत्रः ॥ १८ ॥

द्विरात्रादिष्वहीनेषु पञ्चरात्रपर्यन्तेष्वन्त्यमन्त्यमहः ऐका-

+ नि-सू-प्र-ख-ख-५।

हिकं तन्त्रं, एवं कुत ? तस्यातिरात्रत्वेन चोदनात् प्रकृतिभूते-
चाहीन दशरात्रे किंचिदतिरात्रस्याभावादिति ॥ १८ ॥

१६८२. सर्वाण्याहीनिकानीति वैयाघ्रपद्यः ॥ १९ ॥

अन्त्यान्यनन्त्यानि च सर्वाण्यप्यहान्यहीनतन्त्राण्येव ।
अहर्गणत्वसामान्यादहीनधर्मत्व प्राप्तिः । एव सति प्रकृतावहीने
रात्रिरविद्यमानापि वचनाद्भविष्यति । अहरशस्तूभय्यपर्यन्त
आहीनिक एव न्याय्यः इति मतान्तरम् ॥ १९ ॥

१६८३. अहीनैकाहसमासन्तु लामकायनः ॥ २० ॥

उभय्यपर्यन्तोऽहर्गणोऽहीनैकाहसमास. स्यात् । कुत ? रात्रि-
वर्णनात् एकाहधर्म स्यात्, अहर्गणत्वसामान्यादहीनधर्मश्च ।
एवं समास एव न्याय्यः इति ॥ तथा च कल्पकारो अन्त्येहन्य-
हीनस्य प्रतिपदमैकाहिकीञ्च माध्यन्दिनीया गायत्र्यौ गायत्री
समस्य करोतीति ॥ २० ॥

इति प्रथमः खण्डः

अथ द्वितीयः खण्डः

१६८४. अथसाम्नां पञ्चधाकारः ॥ १ ॥

वक्ष्यत इति शेषः ॥ १ ।

१६८५. प्रस्तावोद्गीथौ प्रतिहारोपद्रवौ निधनमन्तत ॥ २ ॥

अन्तिमो भागो निधनं, ततः पूर्वचत्वारो भागाः । अस-
मासनिर्देशोऽवान्तरसंबन्धसूचनार्थः । तथाहि, प्रस्तावनिमित्त-
भवसादन ओंकारेण उद्गीथश्शमयतीति तयोरवान्तरसबन्धः ।
तथैव प्रतिहारोपद्रवयोरिति शाट्यायनिनः तथैवाधीयतेचेति ॥

१६८६. तत्सर्वे श्रुतिसामर्थ्यात् ॥ ३ ॥

तच्छब्देन निधनपरामर्श, तन्निधन सर्वे ब्रूयु । न केवलमुद्गाता । कुत ? श्रुतिसामर्थ्यात् । एकाक्षर निधनमुपयन्ति रथन्तरस्यानतिवादाय,आतमितो निधनमुपयन्ति इत्यादिवाक्येषु निधनस्तुतौ तद्गुणविधौ च कर्तृबहुत्वश्रवणात् । प्रस्तावो द्गीथप्रतिहारास्तु प्रस्तोतेत्यादि समाख्यानुरोधात् पृथक् पृथक् ब्रूयु । तथोपस्ति[1]ब्राह्मणे प्रस्तोतर्यादिगतेत्यारभ्य प्रस्तावादिषु पृथगेव कर्तॄन् दर्शयति । उपद्रवस्तु उद्गातुरेव । उद्गातैव कुर्यादित्यादेश इति वचनात् । केचित्तु निधनमन्तः सर्व इति लुप्त तच्छब्दमेव सूत्र पठन्तीति ॥ ३ ॥

१६८७. गायत्रे तु विकल्पः सर्वे वोद्गाता वा ॥ ४ ॥

गायत्रे तु साम्नि सर्वे निधन ब्रूयुरुद्गाता वेति विकल्प इति ॥ ४ ॥

१६८८. सप्तधाकारमप्येकवचनात् ॥ ५ ॥

[2]उपनिषदि पञ्चविध सामोपासीत, सप्तविध सामोपासीतेति पक्षद्वयस्यापि श्रवणादिति ॥ ५ ॥

१६८९ हिंकारः प्रस्तावात्पूर्वं ॥ ६ ॥

१६९० उद्गीथादोङ्कारः ॥ ७ ॥

य प्रस्तावात् पूर्वो हिंकार, यश्च उद्गीथात पूर्वं ओंकार तौ सप्तविधपक्षे भक्तिद्वयमिति ॥ ६ ॥ ७ ॥

१६९१ चतुष्टयानि सामानि त्रिपञ्चसप्तनिधनानि पदमस्तोमस्तोमत्रिभाग्यानि यथा प्रगाथांगिरस महावैश्वामित्र सौमित्रम् ॥ ८ ॥

1 छान्दोग्ये अ १ ख १० वा ७ ॥

2. छान्दोग्य अ-२ ख-२ वा १, अ २ ख ४ वा १ ।

विभाग्यशब्द प्रत्येकमभिसबध्यते पदविभाग्यानि सस्तोभविभाग्यानि केवलस्तोभविभाग्यानीति त्रिविधानि । तदन्यानि विषमभक्तीनीत्येव चतुष्टयानि सामानि । तत्र यस्मिन् साम्नि प्रस्तोतुरेक पाद उद्गातुरेक प्रतिहर्तुरेक पुनश्चोद्गातुरेक इत्येव विभज्यते तत्पदविभाग्यम् । यत्र स्तोभसहितानां पादानां विभागः, तत् सस्तोभपदविभाग्य। यत्र केवलस्तोभैरेव विभाग पादास्तु सर्वेनिधनान्तर्भूता साधारणा त्रिभिरपि प्रयोज्या तत्स्तोभविभाग्यम् । स्वयमेवैतत् सूत्रकार स्पष्ट वक्ष्यति । त्रयाणामपि विभाग्याना क्रमेणोदाहरणानि प्रवद्भार्गवादीनि ॥ तत्र प्रथम विषमभक्तिषु भक्तिपरिमाण दर्शयितुमारभते—

१६९२. अवसान प्रस्तावान्तलक्षणं अविभाग्यानाम् ॥ ९ ॥

यावति प्रदेशे साम्न प्रथममवसान अध्ययनपारम्पर्यसिद्ध तावान् प्रस्तावो ऽविभाग्यानामिति । अत्र चतुर्थमन्द्रावमितमित्यादि शास्त्रान्तरादवसानविशेषोऽवगन्तव्य न केवलमवसानमात्रमिति ॥ ९ ॥

१६९३. द्व्यवसानः पूर्वे वारवन्तीये ॥ १० ॥

पूर्वस्मिन् वारवन्तीये साम्नि द्वाभ्यामवसानाभ्यां परिमितः प्रस्ताव इति ॥ १० ॥

१६९४. पूर्वेण वा ॥ ११ ॥

यद्वा प्रथमेनैवावसानेन परिमित. स्यादिति ॥ ११ ॥

१६९५ चतुरक्षरो वाजभृत्कार्णश्रवसाञ्जिगानाम् ॥ १२ ॥

वाजभृदादीना त्रयाणाश्चतुरक्षर परिमित. प्रस्ताव इति ।

१६९६. गुरुपयोश्च ॥ १३ ॥

तत्र यथात्यक्तं भार पतितमन्यः क्षिप्रं शिरसोद्गृह्णीयात्, तादृशमोंकारेणादानमिति ब्राह्मणार्थः । तत्रोंकारेणेत्येतावच्छ्रूयते न पुनः स्थानापत्त्येन, नाप्यधिकेनेति । तेन मतद्वयमिति ॥ १ ॥

मतान्तरमाह—

१७११. स्वारादिषु वा तमेव स्वरमोंकारं व्यञ्जनादिषु ॥ २ ॥

स्वारादिषु उद्गीथभक्तिषु तमेव स्वरमोंकारीकुर्यात् । व्यञ्जनादिष्वधिकमोंकारमिति व्यवस्था ग्राह्येति ॥ २ ॥

१७१२. प्रत्यवेतस्वरेषु ॥ ३ ॥

पूर्वोक्ता च व्यवस्था प्रत्यवेतस्वरेष्वेवोद्गीथेषु नान्यत्रेत्यर्थः । प्रत्यवायो नाम नीचस्वरेणोद्गीथारभः । प्रत्यवेतस्वरादन्यत्र नैव प्रणवेनादान । नीचारभे ह्युत्तमनापेक्षा नान्यत्रेति भाव इति ॥ ३ ॥

इदानी लोपपक्षे लुप्तवर्णस्य धर्मानोंकारेऽतिदिशति—

१७१३. प्रत्यक्षपरोक्षक्षिप्रचिरन्यस्तोदात्तकृशकृशानां येन संस्वरेत् तत्कुर्यात् ॥ ४ ॥

लुप्तस्याक्षरस्य प्रत्यक्षादीनां रूपाणां मध्ये येन रूपेण प्रणवं सदृशमुच्चरेत् तद्रूपं कुर्यात् । यदि लुप्तोवर्णः प्रत्यक्षो विकाररहितः स्यात्तदा प्रणवेऽपि तथैव कुर्यात् । यदि आइमावादिविकारेण लुप्तः परोक्षः स्यात्तदा प्रणवेऽपि परोक्ष एव स्यात् । दीर्घप्लुतादेः अधिका मात्रा चिरमित्युच्यते । न्यस्तोनाम अनुदात्त । प्रसिद्धमन्यत् । अथवा सर्वेषामेव साम्नामूहप्रकारोऽयंविधीयते । योनिगतानां प्रत्यक्षादिवर्णानां सदृशमेव उत्तरा-

स्वपिगेयमिति । यथावक्ष्यति - अक्षरपरिमाणं यथायोनि चिकीर्षेदिति । तादृशमेतदिति ॥ ४ ॥

१७१४. सर्वं तु लघीयसा मात्राऽविलोपेन ॥ ५ ॥

लघीयो गरीयश्चेति द्विविध पुरुषस्योच्चारणवृत्तं । व्यासक्तं गरीयस्तद्विपरीतं लघीयस्तेनवृत्तेन सर्वं साम गायेत्, न केवलमुद्गीथमेवेति । लघीयसेत्युक्ते दीर्घप्लुतादि मात्रा विलोपशंकास्यात् तेनोक्तं मात्राऽविलोपेनेति ॥ ५ ॥

अथ प्रतिहारं लक्षयन् परिभाषां करोति ॥

१७१५. पदादिः प्रतिहारस्थानं सर्वत्र ॥ ६ ॥

प्रतिहारे निरूपिते पारिशेष्यसिद्धमुद्गीथपरिमाणं न पृथग्वक्तव्यं । तेषा द्वे अक्षरे प्रतिहार इत्यादिना यद्वक्ष्यामः, तत्र पादस्यादौ प्रतिहारः नमध्ये नाप्यन्त इति सामान्यतो विद्यादिति ॥ ६ ॥

१७१६. पदानिर्देशे चोत्तमे पादे ॥ ७ ॥

ऋचः पादविशेषानिर्देशेसति उत्तमे पादे, इति प्रतीयादिति ॥ ७ ॥

१७१७. संख्याविशये चाक्षराधिकारः ॥ ८ ॥

द्वे त्रीणीत्येवमुत्तरत्र संख्या निर्देशेषु, कस्य सङ्ख्येयेति संदेहे अक्षराणामधिकारः, अक्षराणि संख्येयानि इति विद्यादित्यर्थः ॥

१७१८. अन्त्यं प्रतिहारं स्तोभान् प्रतिहर्ताब्रूयात् ॥ ७ ॥

त्र्यक्षरश्चतुरक्षरो वा प्रतिहार इत्युक्ते तदन्तर्गतान् ऋगक्षरस्याधिकानपि स्तोभान् प्रतिहर्तेव ब्रूयादिति ॥ ९ ॥

१७१९. ऊर्ध्वं चार्चिकाऽव्यपेतान् ॥ १० ॥

प्रतिहारादूर्ध्वमपि ये स्तोभास्तानृगक्षरैरव्यपेतान् स एव ब्रूयादिति १० ॥

१७२० अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र षड्विभ्यः ॥ ११ ॥

येषां साम्नामुत्तमः पादोऽष्टाक्षरस्तेषां चत्वार्यक्षराणि उत्तमे पादे प्रतिहारः, षड्विषु गीयमानं साम वर्जयित्वेति ॥

१७२१. तस्मिन् न्याय्यसंज्ञा ॥ १२ ॥

तस्य चतुरक्षरस्य उत्तमपादगतस्य प्रतिहारस्य न्याय्य इति संज्ञेति ॥ २२ ॥

१७२२ पदान्तमविशेषेणोपोत्तमपदात्प्रतीयात् ॥ १३ ॥

पदान्त इत्युक्ते विशेषानिर्देशे उपोत्तमस्य पादस्यान्त प्रतीयात् । विशेषनिर्देशे तु यथानिर्देशं यथा वैदन्वते चाभ्यासवत्युत्तमे तु पदान्तस्येति । अत्रोत्तमग्रहणादुत्तमस्य पादस्यान्त इति निश्चय इति ॥ १३ ॥

१७२३. एष न्यायोऽनादेशे ॥ १४ ॥ स्पष्टमिति ॥ १४ ॥

१७२४ सौमेधस्यौर्णायवयो ऋषभस्य पावमानस्यैनिधनस्य मार्गीयवस्यैतेषामुपरिष्टात्प्रतिहारस्योद्गाता स्तोभं भजते ।१५॥

'ऊर्ध्वं चार्चिकाव्यपेतानिति' पूर्वोक्तस्यापवादोऽयम् । सौमेधादि सामपञ्चके प्रतिहारस्योपरिष्टात् स्तोभानुद्गाता ब्रूयात् । पावमानस्येत्यृषभविशेषणम् । ईनिधनस्येति मार्गीयव विशेषणमिति ॥ १५ ॥

1 ६ १८ ३-१० ।

१७२५. न्याय्यप्रतिहाराणां इडानांसंक्षाराऽऽश्वसूक्तैडस्वार वार्षाहर स्वारकौत्सानां गोराङ्गिरसस्यसाम्नोऽभ्यासवतश्च क्रौञ्चस्याग्निमीयामस्यैनेषां पुरस्तात् प्रतिहर्ता ॥ १६ ॥

इडानां सक्षरादि सामाष्टकप्रतिहारं अष्टाक्षरपदोत्तमानां चत्वारीति वचनात् जानीयात् । पक्षान्तरमप्यस्ति उत्तरेण व्यावर्गेण प्रतिहरेदिति धानञ्जय्यवचनात् । तत्र यदा न्याय्यप्रतिहारस्तदातेषां पुरस्तात् प्रतिहारस्यस्तोभान् प्रतिहर्ता ब्रूयादित्यर्थः । उद्गातुः प्राप्ते वचनमेतत् । यज्ञायथा अपूर्व्येत्यस्यामिडानिधनं स्वरमैडस्वरमित्युच्यते । अग्निमीडेपुरोहितमित्येषा योनिर्यस्य साम्नस्तदाऽग्निमीयाम इत्युच्यत इति ॥ १६ ॥

१७२६. संहितमार्षभं शाक्लं वाजदावर्यः स्वारं सौमित्रं पदनिधने काण्व रोहितकूलीये ॥ १७ ॥

स्पष्टमिति ॥ १७ ॥

इति तृतीयः खण्डः

अथ चतुर्थः खण्डः

१७२७. यौक्ताश्वे सौपर्णानांउत्तरे योधाजयं नौधसमाप्कारणिधनं काण्वं यौक्तस्रुचं नाम्न तिरश्चीननिधनमायास्यमिन्द्रस्ययशो वैष्णवमुत्तरं सफं प्रमंहिष्ठीयं दीर्घं पौष्कलमान्धीगवं बृहदाग्नेयं श्यावाश्व त्रैशोके तेषां द्वे ॥ १ ॥

*संहितादि गणस्य द्वे द्वे अक्षरे प्रतिहाराः । ते चोत्तमपादोपक्रमा इत्यर्थसिद्धं, स्वारमिति सौमित्रविशेषणं । पदमार्चिक-

*पूर्वपटलान्तिमसूत्रस्थ "संहितमार्षभ" इत्यादिः संहितादिगणः ॥

मेवाक्षरं निधनं यस्य तत्पदनिधनं। बहिर्णिधननिवृत्यर्थमेतद्विशेषणं। तिरश्चीननिधनमित्यायास्यविशेषणं। उत्तरमिति वैष्णवविशेषणम् ॥ १ ॥

तत्रैवसूत्रपञ्चकेन विशेषमाह—

१७२८. पुरस्तात्स्तोमो पौंक्ताश्वयोः पूर्वस्य ॥ २ ॥

पुरस्तात्स्तोम इति बहुव्रीहिः पुरस्तात्स्तोमसहितः प्रतिहारो भवेदित्यर्थः ॥ २ ॥

१७२९. श्यावाश्वश्रैशोक्रयोः पदान्तः ॥ ३ ॥ स्पष्टमिति ॥ ३ ॥

१७३०. अन्तोमस्तु श्यावाश्वस्य ॥ ४ ॥

ऊर्ध्वं चार्चिकाव्ययेतानिति प्राप्तस्य स्तोभवचनस्य निषेधोयमस्तोमः स्यात् प्रतिहार इति ॥ ४ ॥

१७३१. पदान्तो वाग्नेन्याय्यो वा ॥ ५ ॥

वाग्नस्य न्याय्यो वा प्रतिहार. पूर्वोमतोवेति ॥ ५ ॥

१७३२. ओकारादिस्तृतीय चतुर्थाभ्यां विशोविशीये ॥ ६ ॥

विशोविशीये साम्नि उत्तमेपादे तृतोयचतुर्थाभ्यां अक्षराभ्यां प्रतिहार ओकारादिरिति। पुरस्तात्स्तोमैकदेशस्याप्राप्तस्य विधानमिति ॥ ६ ॥

१७३३. हिंकारादिर्वा पञ्चमषष्ठाभ्याम् ॥ ७ ॥

स्पष्टमिति ॥ ७ ॥

१७३४. औक्ष्णोरन्ध्रे द्विप्रतिहारे ॥ ८ ॥

द्वौ प्रतिहारौ यस्येति द्विप्रतिहारमिति ॥ ८ ॥

तावेवप्रतिहारौदर्शयति—

१७३५. प्रथमनवमाभ्यां शौक्तस्य ॥ ९ ॥

उत्तमे पादे प्रथमेनाक्षरेण प्रथम प्रतिहार नवमेनाक्षरेण द्वितीयः प्रतिहार इति ॥ ९ ॥

१७३६. पदान्तश्चतुर्भिपूर्वोनार्मेधस्य चतुर्भिरेवमध्यमैरुत्तरः ॥ १० ॥

नार्मेधस्योपोत्तमपादान्तैश्चतुर्भिरक्षरैः प्रथम प्रतिहार, अन्त्यस्य पादस्यमध्यमैश्चतुर्भिरक्षरैर्द्वितीय प्रतिहार इति १०

१७३७. एकप्रतिहारं वोत्तरेण ॥ ११ ॥

अथवा नार्मेधमुत्तरेण एकप्रतिहारमेव भवति ॥ ११ ॥

१७३८. मासयैरूपयोर्गायत्रीसाम्नोः पदान्तः ॥ १२ ॥

गायत्र्या गीयमानयोः इत्यर्थः ॥ १२ ॥

१७३९. द्वार्ग्या भासे ॥ १३ ॥

१७४०. चतुर्भिरुत्तरस्य ॥ १४ ॥

द्वयमपि स्पष्टमिति ॥ १२, १४ ॥

१७४१. तृतीयेन पदेन यज्ञायज्ञीयनिधने सौहविषे ॥ १५ ॥

यज्ञायज्ञीयेन सदृशनिधने सोहविषेमाम्नि तृतीयेन पदेन प्रतिहार इति ॥ १५ ॥

१७४२. श्रायन्तीय वरुणसाम द्वैगताज्ञमा दश ॥ १६ ॥

श्रायन्तीयादि सामत्रयस्य [चतुष्कस्य] दश दशाक्षराणि-प्रतिहार इति ॥ १६ ॥ कथमित्याह—

१७४३. तेषां पूर्वयोः मर्व पदं द्वे च पुनरुक्तस्य ॥ १७ ॥

तेषां पूर्वयो. श्रायन्तीय वरुणसाम्नो. सर्वमष्टाक्षरं पदं तस्यैव पादस्य पुनरभ्यस्यादितो द्वेचाक्षरे इत्येव दशाक्षरप्रतिहार इति ।। १७ ।।

१७४४. द्वैगते तु पदान्तः ॥ १८ ॥

द्वैगते तु साम्नि पदान्तो दशाक्षर. प्रतिहार इति ॥ १८

१७४५. उपोत्तमस्य पदस्य पदादिरक्षरः ॥ १९ ॥

उपोत्तमस्य पादस्यादितो दशाक्षर इत्यर्थ. ॥ १९ ॥

१७४६. विशोविशीयप्रभृतीनां वा नवानांउत्तमस्य पदस्यादौ द्वे ॥

पूर्वोक्ताना विशोविशीय प्रभृतीना द्वैगतपर्यन्ताना उत्तमस्य पादस्योपक्रमे द्व्यक्षरा प्रतिहारा. पूर्वोक्तावेति विकल्प इति ॥ २० ॥

१७४७. हाइकारान्तो विशोविशीये ।। २१ ॥

हाइकारादूर्ध्वस्य स्तोभाक्षरस्य निषेधोयमिति ॥ २१ ॥

१७४८. श्रायन्तीयवरुणसाम्नोरभ्यासादिः ॥ २२ ॥

उत्तमस्य पादस्य पुनरभ्यासे आदितो द्व्यक्षर इत्यर्थ. ॥

१७४९. चत्वारि वा प्राग्घिकारात् प्राग्घिकारात् । २३ ॥

अथवोत्तमे पादे हिंकारात् प्राक् चत्वार्यक्षराणीति ।।

इति चतुर्थ. खण्ड.

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
अष्टम पटलोवृत्तः द्वितीये दशकेऽमुना ॥

अष्टादश पटल. समाप्तः

# अथ एकोनविंशः पटलः

## प्रथमः खण्डः

१७५०. वामदेव्यं स्वारं साकमश्वं पार्थ्रौहं निधनकामं मत्रासाहीयं काक्षीवतं(च) च्यावनं गायत्रीसामौशनं निधनवद्देमवाहं तेषां पञ्चमषष्ठे विकल्प्येते न्याय्येन ॥ १ ॥

स्वारमिति साकमश्वविशेषणं, गायत्रीसामेत्यौशनविशेषणं, वामदेव्यादीनां नवानां उत्तमे पादे पञ्चम षष्ठे अक्षरे प्रतिहारः न्याय्यो वेति विकल्प इति ॥ १ ॥

१७५१. गूर्दस्तौमेधंमाधुच्छन्दसमौदलंसौश्रवसमुत्तरं वार्त्रतुरमृषभो रैवतः कौत्समौष्णिहं आसीवादीयं क्रोशमोकोनिधनं स्वारं सामराजं मारुतमौष्णिहमाक्षारं हारिवर्णं सुज्ञानं सांवर्तं जागतं वरुणसाम मरुतां धेनु सौम्यतं तेषां चत्वारि ॥ २ ॥

गूर्दादिविंशकस्य सामगणस्यान्त्ये पादे चतुरक्षरः प्रतिहार इति । उत्तरमितिसौश्रवसविशेषण, रैवत इत्यृषभविशेषणं, औष्णिहमिति कौत्सविशेषणं, स्वारमिति सामराजविशेषणं, मारुतमौष्णिहमित्येकं साम, जागतमिति च वरुणसामविशेषणं ॥

तत्र विशेषमाह—

१७५२. अभ्यासे गूर्दस्य ॥ ३ ॥

गूर्दास्योत्तमे पादे मध्यमस्य चतुरक्षरस्य योऽभ्यासस्स प्रतिहार इति ॥ ३ ॥

१८५३. अभ्यासादिरुत्तरेषां त्रयाणाम् ॥ ४ ॥

गूर्दादुत्तरेषां त्रयाणां अभ्यासादिः चतुरक्षरः प्रतिहार इति

१७५४ उत्तमानि सौश्रवसे ॥ ५ ॥

अन्त्यपादस्योत्तमानि चतुरक्षराणि प्रतिहार इति ॥ ५ ॥

१७५५ अष्टौ वा वार्त्रतुरे ॥ ६ ॥

अन्त्ये पादे वार्त्रतुरस्य चत्वार्यष्टौवेति विकल्प इति ॥ ६

१७५६. पूर्वयोश्च न्याय्यौ ॥ ७ ॥

वार्त्रतुरात्पूर्वयो औदलसौश्रवसयो न्याय्यौ प्रतिहारौ, यद्वा पूर्ववितो अभ्यासादि, 'उत्तमानि सौश्रवस' इत्युक्तश्चेति विकल्प इति ॥ ७ ॥

१७५७ मध्यम मधनं ऋषभे ॥ ८ ॥

ऋषभे साम्न्युत्तमे पादे उत्तम चतुरक्षर विरभ्यस्यते । जुहूमसिद्यवि यतीरयन्न तत्र मध्यमोऽभ्यास प्रतिहार इति ॥ ८ ॥

१७५८ मध्यमान्युत्तरेषां पञ्चानाम् ॥ ९ ॥

ऋषभादुत्तरेषां कौत्सादीनां सामराजपर्यन्तानामुत्तमे पादे मध्यमानि चतुरक्षराणि प्रतिहार इति ॥ ९ ॥

१७५९. प्रागभ्यासादुत्तमानि कौत्से ॥ १० ॥

यद्वा कौत्से साम्न्युत्तमे पादे प्रागभ्यासादुत्तम चतुरक्षर पूर्वोक्त वा मध्यममिति विकल्प इति ॥ १० ॥

१७६०. प्रथमानि वा सामराजस्य सपुरस्तात्स्तोभः ॥ ११ ॥

सामराजे प्रथमानि मध्यमानि वा चतुरक्षराणीति विकल्प इति। प्रथमपक्षे पूर्वस्तोभयुक्त. प्रतिहार इति ॥ ११ ॥

१७६१. पञ्च वा पञ्चमप्रभृतीनि मारुते ॥ १२ ॥

अन्त्ये पादे पञ्चमाक्षरप्रभृतीनि षडक्षराणि पूर्वोक्तानि वा ऽऽदितश्चतुरक्षराणि इति विकल्पः ॥ १२ ॥

१७६२. आश्वरथन्तरयोः पञ्च ॥ १३ ॥ स्पष्टमिति ॥ १३ ॥

१७६३. वैदन्वते चाभ्यासवति ॥ १४ ॥

अभ्यासवति वैदन्वते च साम्नि पञ्चाक्षरः प्रतिहार इति ॥

१७६४. उत्तमे तु पदान्तस्तस्य ॥ १५ ॥

तस्य वैदन्वतस्योत्तमे पादे पदान्तः प्रतिहारः "पदान्तमविशेषेणोपोत्तमात्पदादिति"[1] पूर्वं परिभाषितं, तत्राविशेषेणेत्युक्तं, विशेषनिर्देशोऽयं उत्तमेतु पदान्त इति ॥ १५ ॥

१७६५. आदौ वा द्वे उभयतःस्तोभे ॥ १६ ॥

यद्वोत्तमपादस्यादौ द्वे अक्षरे उभयतः स्तोभसहिते प्रतिहार इति ॥ १६ ॥

१७६६. तृतीयं वा ॥ १७ ॥

यद्वा तृतीयमक्षरं वैदन्वते प्रतिहार इति ॥ १७ ॥

१७६७. उभौ वैकः ॥ १८ ॥

अथवा वैदन्वतस्यादितः द्व्यक्षरं तृतीयञ्चोभौ सह एक एव प्रतिहारो भवति ॥ १८ ॥

इति प्रथम. खण्ड.

---

1. ला-सू-१८-३-१३ ।

अथ द्वितीयः खण्डः

१७६८. आकूपारकौत्से गायत्रीसामनी दैवातिथं गौषूक्तं रौरवं द्विर्हिकारंवामदेव्यमोकारान्तप्रस्तावं वैयश्वमरण्येगेयं शाक्वर वर्णं सौभरं वार्हद्गिरायोराजीये स्वारमध्यमवाहं गौश्रृङ्ग हारायणकौल्मलबर्हिषे जनित्रसुधरं वैतहव्यमिहवद्वामदेव्यं प्रतीचीनेडंकाशीतं वैष्णवपूर्वं श्यैतं सञ्जयं तेषां षट् ॥ १ ॥

आकूपारादे द्वाविंशस्य सामगणस्य षडक्षरा प्रतिहारा इति ॥ १ ॥

१७६९. अस्तोभावुत्तमयोः ॥ २ ॥

उत्तमयो पर्यैतसञ्जययो स्तोभरहितौ प्रतिहाराविन्यर्थं ॥

१७७०. प्रथमतृतीययोः उभयतः स्तोभौ ॥ ३ ॥

प्रथमतृतीययो आकूपारदैवातिथयोः उभयतः स्तोभसहितौ प्रतिहाराविति ॥ ३ ॥

तत्रैव विशेषमाह—

१७७१. प्रागोकारात्प्रथमे ॥ ४ ॥

आकूपारप्रतिहारादुत्तरस्य स्तोभस्योकारात् प्राक् यावानशस्तावानेव प्रयोज्यो न कृत्स्नस्तोभ इत्यर्थं ॥ ४ ॥

१७७२. हिंकारात् तृतीये ॥ ५ ॥

प्रागित्यनुवर्तते, तृतीये दैवातिथे हिंकारात्प्राग्भूतस्तोभांशो ग्राह्य । न तत परमिति ॥ ५ ॥

१७७३. अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्य ॥ ६ ॥

शाक्वरवर्णस्य प्रथमद्वितीययोः स्तोत्रीययोः प्रतिहारो नास्तीत्यर्थः ॥ ६ ॥

१७७४. इहकारान्त ऐडमवाहेस्तोभः ॥ ७ ॥

ऐडमवाहे प्रतिहारस्य उपरिष्टाद्यः स्तोभः तस्येहकारान्त एव ग्राह्यः । न ततः परमिति ॥ ७ ॥

१७७५. सर्वो वा ॥ ८ ॥

यद्वा सर्व एव स्तोभः प्रयोज्य इति ॥ ८ ॥

१७७६. प्रागोवायास्त्रिषूत्तरेषु ॥ ९ ॥

ऐडमवाहादुत्तरेषु गौश्रृङ्गहारायणकौल्मलबर्हिषेषु ओवायाः प्राक्स्तोभो ग्राह्यो, न ततः परमिति । ओवेत्योंकारवाचोः लुप्तान्त्यवर्णयो ओवाकारान्तत्वात् स्त्रीलिङ्गनिर्देश इति॥

१७७७. पौरुमद्गे च ॥ १० ॥

पौरुमद्गे च प्रागोवायाः स्तोभोग्राह्यः न ततः परं । गणान्तःपात्यपि पौरुमद्गं स्यादप्रतिहारमेव । प्रसङ्गात् सूत्रलाघवोपजीवनायोपात्तमिति मन्तव्यमिति १० ॥

१७७८. ओकाराज्जनित्रे । ११ ॥

प्रागित्येव, ओकारात्प्राग्भूतः स्तोभो जनित्रे ग्राह्यः । न ततः परमिति ॥ ११ ॥

१७७९. सहौवया पौरुमद्गे ॥ १२ ॥

पौरुमद्गमुपसङ्क्रम्याह, ओवायाः प्रागिति पूर्वमुक्तं । इदानीं ओवयासहेत्युच्यते, तेन विकल्प इति ॥ १२ ॥

१७८०. गौशृङ्ग द्वारायण कौल्मलबर्हिषनैतह्व्यानां वा पदान्तः ॥ १३ ॥

उत्तमे पादे गौशृङ्गादीना षडक्षर इति पूर्वमुक्त, इदानीं पदान्त इत्युच्यते ॥ १३ ॥

तत्र विशेषमाह—

१७८१. द्वाभ्यां पूर्वयोः चतुर्भिरुत्तरयो ॥ १४ ॥

गौशृङ्गादीना चतुर्णां पूर्वयोर्द्व्यक्षर पदान्त प्रतिहार, चतुरक्षर उत्तरयोरिति ॥ १४ ॥

१७८२ पुरस्तात्स्तोभ. कौल्मलबर्हिषस्य ॥ १५ ॥

स्पष्टमिति ॥ १५ ॥

इति द्वितीय खण्ड

अथ तृतीयः खण्डः

१७८३. सप्तवारवन्तीये पूर्वस्मिन्नेषां त्रीणि पदान्ते ॥ १ ॥

पूर्वस्मिन् वारवन्तीये सप्ताक्षराणि प्रतिहार । तेषु त्रीण्यक्षराणि पदान्ते स्यु । इतराणि चत्वार्युत्तमपादोपक्रम इत्यर्थसिद्धमेवेति ॥ १ ॥

१७८४ कार्णश्रवसंरैत पञ्च सौश्रवसमुत्तर श्रुद्धयशुद्धशपुनः शार्करे तेषामष्टौ ॥ २ ॥

कार्णश्रवसादि सामषट्कस्य अष्टावक्षराणि प्रतिहार इति॥ तत्रविशेषमाह—

७८५. पञ्चसौश्रवसयो अर्धानि पदान्ते ॥ ३ ॥

अष्टानामक्षराणामर्धानि—चत्वार्यक्षराणि पदान्ते स्यु, इतराणि चत्वार्यन्त्यपादोपक्रमे इति सिद्धमेवेतदिति ॥ ३ ॥

१७८६ शुध्यस्य च ककुप्सु ॥ ४ ॥

यदा शुध्य साम ककुप्सु गीयते तदाप्यर्धानि पदान्ते स्युरिति ॥ ४ ॥

१७८७. तस्य गायत्रीषु चत्वारि ॥ ५ ॥

शुद्धचस्य गायत्रीषु गीयमानस्य चत्वारि उत्तमे पादे प्रतिहार इति ॥ ५ ॥

१७८८ षोडश बृहतीषु ॥ ६ ॥

बृहतीषु गीयमानस्य शुद्धचस्य षोडशाक्षराणि प्रतिहार। कृत्स्न तृतीय पाद उत्तमे च पादे चतुरक्षरमिति। एव षोड शाक्षराणि प्रतिहार ॥ ६ ॥

१७८९ नदवओदतीनामितिदश ॥ ७ ॥

नदवओदतीनामित्यस्यामृचि गीयमानस्य शुद्धचस्य दशाक्षर प्रतिहार। तृतीय पाद उत्तमे च त्रीण्यक्षराणि, इत्येव दशाक्षरत्वम ॥ ७ ॥

१७९० मध्यमस्य पदस्याभ्यासः ॥ ८ ॥

१७९१. न्याय्यो वा ॥ ९ ॥

द्वयमपि स्पष्टमिति ॥ ८ ॥ ९ ॥

१७९२. वायोरभिक्रन्दः स्वारकावमौक्षयमौशनश्यावाश्वेत्रैष्टुभेज्यौष्ट जागतसोमसाम कार्तयश स्वारषयोनिधन ऋषभ शाक्वरो यण्वायत्ये तेषामुपोत्तम पदम् ॥ १० ॥

वायोरभिक्रन्दादे द्वादशकस्य सामगणस्थ उपोत्तम पद प्रतिहार इति ॥ १० ॥

१७८०. गोशृङ्ग हारायण कौल्मलबर्हिषपैतद्व्यानां वा पदान्तः ॥

उत्तमे पादे गोशृङ्गादीना षडक्षर इति पूर्वमुक्तं, इदानी पदान्त इत्युच्यते ॥ १३ ॥

तत्र विशेषमाह—

१७८१. द्वाभ्यां पूर्वयोः चतुर्भिरुत्तरयो ॥ १४ ॥

गोशृङ्गादीना चतुर्णां पूर्वयोर्द्व्यक्षरः पदान्त प्रतिहारः, चतुरक्षर उत्तरयोरिति ॥ १४ ॥

१७८२ पुरस्तात्स्तोमः कौल्मलबर्हिषस्य ॥ १५ ॥

स्पष्टमिति ॥ १५ ॥

इति द्वितीय खण्ड

अथ तृतीयः खण्डः

१७८३. सप्तवारवन्तीये पूर्वस्मिस्तेषां त्रीणि पदान्ते ॥ १ ॥

पूर्वस्मिन् वारवन्तीये सप्ताक्षराणि प्रतिहारः । तेषु त्रीण्यक्षराणि पदान्ते स्यु । इतराणि चत्वार्युत्तमपादोपक्रम इत्यर्थसिद्धमेवेति ॥ १ ॥

१७८४ कार्णश्रवसंश्रवं पञ्च तौरश्रवमधुश्चरं श्रुद्धयमुद्वंशपुत्रः शार्करं तैषामष्टौ ॥ २ ॥

कार्णश्रवसादि सामपट्कस्य अष्टावक्षराणि प्रतिहार इति॥

तत्र विशेषमाह—

७८५. पञ्चतौरश्रवसयोः अर्धानि पदान्ते ॥ ३ ॥

अष्टानामक्षराणामर्धानि – चत्वार्यक्षराणि पदान्ते स्यु, इतराणि चत्वार्यन्त्यपादोपक्रमे इति सिद्धमेवेतदिति ॥ ३ ॥

१७८६. शुध्यस्य च ककुप्सु ॥ ४ ॥

यदा शुध्यं साम ककुप्सु गीयते तदाप्यर्धानि पदान्ते स्युरिति ॥ ४ ॥

१७८७. तस्य गायत्रीषु चत्वारि ॥ ५ ॥

शुद्धयस्य गायत्रीषु गीयमानस्य चत्वारि उत्तमे पादे प्रतिहार इति ॥ ५ ॥

१७८८. षोडश बृहतीषु ॥ ६ ॥

बृहतीषु गीयमानस्य शुद्धयस्य षोडशाक्षराणि प्रतिहारः। कृत्स्नः तृतीयः पादः उत्तमे च पादे चतुरक्षरमिति। एवं षोडशाक्षराणि प्रतिहारः ॥ ६ ॥

१७८९. नदंवओदतीनामितिदश ॥ ७ ॥

नदंवओदतीनामित्यस्यामृचि गीयमानस्य शुद्धयस्य दशाक्षर प्रतिहार। तृतीय. पादः उत्तमे च त्रीण्यक्षराणि, इत्येवं दशाक्षरत्वम् ॥ ७ ॥

१७९०. मध्यमस्य पदस्याभ्यासः ॥ ८ ॥

१७९१. न्याय्यो वा ॥ ९ ॥

द्वयमपि स्पष्टमिति ॥ ८ ॥ ९ ॥

१७९२. वायोरभिक्रन्दः स्वारंकावमौक्ष्यमौशनश्यावाश्वेत्रैष्टुभे-श्नौष्टं जागतंसोमसाम कार्तयशं स्वारंपयोनिधनं ऋषभः शाक्वरो वर्णापत्ये तेषामुपोत्तमं पदम् ॥ १० ॥

वायोरभिक्रन्दादेः द्वादशकस्य सामगणस्य उपोत्तमं पदं प्रतिहार इति ॥ १० ॥

१७९३. पुरस्तात्स्तोभा उत्तमानां त्रयाणाम् ॥ ११ ॥

उत्तमानां त्रयाणां ऋषभयण्वापत्यानां पुरस्तात्स्तोभ-सहितः प्रतिहार इति ॥ ११ ॥

१७९४. अप्रतिहारं प्रथमास्तोत्रीया यण्वापत्ययोः ॥ १२ ॥

प्रथमायां स्तोत्रीयायां प्रतिहारो नैवास्तीति ॥ १२ ॥

१७९५. पञ्चानां वाऽऽदित उत्तमे पादे चत्वारि ॥ १३ ॥

अनन्तरोक्तसामगणस्यादितः पञ्चानां वायोरभिक्रन्वा-दीनां, उत्तमे पादे चत्वार्यक्षराणि प्रतिहारः । उपोत्तमं पदं वेति विकल्प इति ॥ १३ ॥

१७९६ वैखानसं पौरुहन्मनमुद्वंशीयमाकारनिधनंत्वाष्ट्रीसाम वैषा-मुत्तमं पदं प्रागभ्यासात् ॥ १४ ॥

वैखानसादि सामचतुष्टयस्य उत्तमं पदमभ्यासात् प्राक् प्रतिहार इति ॥ १४ ॥

१७९७. अभ्यासे वा चत्वार्युत्तरयोः ॥ १५ ॥

उत्तरयोरुद्वंशीयत्वाष्ट्रीसाम्नोः अभ्यासे वा चतुरक्षरः पूर्वोवेति विकल्प इति ॥ १५ ॥

इति तृतीयः खण्डः

अथ चतुर्थः खण्डः

१७९८. श्यावत्यमाम मैधातिथं वारवन्तीयमुत्तरं आमीअवे सिमा-नांनिषेधस्त्रिणिधने त्वाष्ट्रीसामायास्ये दार्ढच्युतमाथर्वणं रैवत्य ऐडतमग्नेस्त्रिणिधनमुत्सेधनिषेधावैडंसाकमश्वं दैर्घ-श्रवसं दाशस्पत्यं ग्रामेगेयस्थेनस्तानि द्विप्रतिहाराणि ॥ १ ॥

शाक्त्यसामप्रभृतीनि एकोनविंशति· सामानि द्विप्रतिहाराणि स्युरिति ॥ १ ॥

तत्र विशेषमाह—

१७९९. मध्यमयोः पादयोः शाक्त्यसामर्मैधातिथयोः पदान्तो· द्व्यक्षाम् ॥ २ ॥

मध्यमयोः पादयो. अन्ते द्व्यक्षरं प्रतिहार द्वयं स्यादिति ॥

१८००. चतुर्भिर्वा ॥ ३ ॥

यद्वा चतुरक्षरं चतुरक्षरं स्यात् इति ॥ ३ ॥

१८०१. इहाहे वारवन्तीये ॥ ४ ॥

इहाहेति द्विवचनान्तमेतत्, वारवन्तीये इहाहाइहरयेवं द्वौस्तोभौ प्रतिहारावित्यर्थ । तयो. एको मध्यमे पादे इतर उत्तमेपाद, इति ॥ ४ ॥

१८०२. सप्तभिर्वैकप्रतिहारं प्रागिहाहायाः ॥ ५ ॥

अथवा उत्तमेपादे प्रागिहाहे इति स्तोभात् सप्तभिरक्षरैरेकप्रतिहारमेव वारवन्तीयं स्यादिति ॥ ५ ॥

१८०३. उकारादिर्वैकेन पदान्ते ॥ ६ ॥

यद्वा एकेनाक्षरेण पदान्तिमप्रतिहारो वारवन्तीये स्यात्, सत. पूर्वस्तोभस्य एकर्धवश्रवणमुकारादिरिति ॥ ६ ॥

१८०४. न्याय्योवा ॥ ७ ॥

स्पष्टमिति, तदेवं वारवन्तीये चत्वारः-पक्षा इति ॥ ७ ॥

१८०५. पूर्वयोश्च ॥ ८ ॥

वारवन्तीयात्पूर्वयोः शात्यसाममेधातिथयोश्चान्त्याग्यो वा प्रतिहारः । पूर्वोक्तो वेतिविकल्प इति ॥ ८ ॥

१८०६. वारवन्तीयस्य द्विपदासु सप्तानां स्थाने चत्वारि ॥९॥

यदा परिप्रयन्त्वेति द्विपदास्वृक्षु वारवन्तीयं भवति, तदा सप्ताक्षर प्रतिहारपक्षे तत्स्थाने चतुरक्षरः कार्य इति ॥ ९ ॥

१८०७ द्वेचतुर्णाम् ॥ १० ॥

तत्रैव न्याय्यप्रतिहारपक्षे चतुर्णां स्थाने द्व्यक्षरः प्रतिहारः कार्य इति ॥ १० ॥

१८०८. द्वेएकमित्येकपदायाम् ॥ ११ ॥

सप्तानां स्थाने चतुर्णामिति चानुवर्तते । यदा एकपदायां वारवन्तीयं भवति, तदा सप्ताक्षरस्थाने द्व्यक्षरः प्रतिहारः । चतुरक्षरस्थाने एकाक्षरइति ॥ ११ ॥

१८०९. उत्तरयोरुत्तरेषाम् ॥ १२ ॥

वारवन्तीयादुत्तरेषां षोडशानां साम्नां उत्तरयोः पादयोः प्रतिहारद्वयमिति ॥ १२ ॥

सप्ताक्षरपरिमाणमाह—

१८१०. द्वे द्वे तु पञ्चानामाभीशवप्रभृतीनाम् ॥ १३ ॥

आभीशवप्रभृतीनां दार्ढच्युतपर्यन्तानां पदादिः प्रतिहारस्थानमिति परिभाषितत्वात्पादयोरुपक्रमे द्वे द्वे अक्षरे इति मन्तव्यम् ॥ १३ ॥

१८११. चत्वारिंश सिमानां निषेधस्य त्वाष्ट्रीसाम्नश्च ॥ १४ ॥

सिमानां निषेधस्य त्वाष्ट्रीसाम्नश्च चतुरक्षरो वा द्व्यक्षरोवेति विकल्प इति ॥ १४ ॥

१८१२. पुरस्तात्स्तोभावाऽऽथर्वणस्य ॥ १५ ॥

आथर्वणस्य प्रतिहारद्वयमपि पुरस्तात्स्तोभसहितं स्या-
दिति ॥ १५ ॥

१८१३. तत्प्रभृतीनां चत्वारि ॥ १६ ॥

आथर्वणप्रभृतिशिष्टाना साम्नामन्त्यवर्जं चत्वारि चत्वा-
र्यक्षराणि उत्तमयो पादयो पादयोरुपक्रमे प्रतिहार इति ॥ १६ ॥

१८१४. अष्टौ वा दाशस्पत्ये ॥ १७ ॥

दाशस्पत्ये अष्टौ चत्वारि वेति विकल्प इति ॥ १७ ॥

१८१५ पूर्वे वोत्तरेणैक प्रतिहारे ॥ १८ ॥

दाशस्पत्यात्पूर्वे साम्नि साकमश्व वैश्वश्रवसञ्चोत्तरेण
एकप्रतिहारे स्याता, द्विप्रतिहारे वेति विकल्प इति ॥ १८ ॥

१८१६ तृतीय पञ्चमाभ्या श्येने ॥ १९ ॥

श्येनसाम्नि तृतीयपञ्चमाभ्या कृत्स्नाभ्या पादाभ्या
प्रतिहार इति ॥ १९ ॥

१८१७. चतुर्थषष्ठयोर्वा पदयोर्द्वे पदयोर्द्वे ॥ २० ॥

चतुर्थ षष्ठयो पदयोः द्वे द्वे अक्षरे वा श्येनस्य प्रतिहार
इति ॥ २० ॥

इति चतुर्थ खण्ड

इति काश्यपगोत्रेण धन्विना प्रीतये हरे ।
एकोनविंशे पटले व्याख्या युक्तिमता कृता ॥

एकोनविंश पटल समाप्त.

## अथ विंशः पटलः

### प्रथमखण्डः

१८१८. पृथक्स्तोत्रीयासु प्रतिहाराः सन्तनिनः ॥ १ ॥

उत्तरयोः स्तोत्रीययोः सन्तनिनः प्रस्तावो नास्ति । पूर्वमुक्त 'नोत्तरयो[1] आचार्या' इति । तद्वदेव प्रतिहारस्यापि लोपशङ्कायामिदमुच्यते, पृथगेव तिसृष्वपि स्तोत्रीयासु प्रतिहाराः स्युः । न केवल प्रथमायामेवेति ॥ १ ॥

१८१९. त्रयस्त्रय ऊधस्सु महानाम्नीनाम् ॥ २ ॥

महानाम्नीनामित्येकस्य साम्नोऽभिधान आपो, दारा इति बहुवचनम् । लक्षणया ऋक्ष्वपि प्रवर्तते । महानाम्नीनामृचां प्रत्येक ऊध. सज्ञक एकैक. पादोऽस्ति । तान् दर्शयिष्यति, तेषु प्रत्येक त्रयस्त्रय प्रतिहारा. स्युः । ऊध सज्ञकः पादः त्रिरभ्यस्यते । प्रत्यभ्यासमुपक्रमे प्रतिहाराः । तद्यथा इन्द्रद्युम्नायन इय इत्यस्मिन् ऊधस्युपक्रमे इन्द्रेति पदं त्रिरभ्यस्तं, एवमुत्तरयोरप्यूधसोः द्रष्टव्यमिति ॥ २ ॥

१८२०. तान् प्रतितोदा इत्याचक्षते ॥ ३ ॥

तानूधसि स्थितान् प्रतिहारान् प्रतितोदा इति शाखान्तरे व्यवहरन्तीति ॥ ३ ॥

१८२१. तथा स्वराश्च नित्यवत्सातीषङ्गयोः ॥ ४ ॥

---

1. द्रा सू-१६-१-१४ ।

यथास्वरा ऊधसि प्रतिहाराः तथास्वराः शब्दाः नित्यवत्सातीषङ्ग्योश्च प्रतिहारा इत्यर्थः। यथाऽयारुचाहृरिण्येत्यस्यामृचि धाराऽपृष्ठस्य रोचत इति पादे धारेति पदं त्रिरभ्यस्तं, तथाऽतीषंगे उच्चाते जातमन्धस इति। त्रिष्वपि पादेषु उपक्रमे द्व्यक्षरंद्व्यक्षरं इन्द्रेत्यनेन सदृशस्वरमिति ॥ ४ ॥

१८२२. द्वे द्वे तु सर्वेषां ॥ ५ ॥

सर्वेषामनन्तरोक्तानां सन्तनिप्रभृतीनां चतुर्णां साम्नां द्व्यक्षर एव प्रतिहार इति। परिमाणविधानमेतदिति ॥ ५ ॥

१८२३. षड्वा सन्तनिवर्जम् ॥ ६ ॥

यद्वा सन्तनिवर्जं त्रयाणां साम्नां उत्तरेषु षडक्षराः प्रतिहाराः। समुच्चयार्थो वा शब्द इत्येके व्याचक्षते। "ऊर्ध्वं पुरुषात् षडक्षरश्चैक" इति कात्यायनवचनानुरोधादिति ॥ ६ ॥

१८२४. शाक्वरोत्तमेषु महानाम्नीनाम् ॥ ७ ॥

महानाम्नीषु शाक्वराणां पादाना उत्तमे पादे षडक्षरः प्रतिहारः। न पुनरशाक्वरे अन्त्ये पादे। महानाम्न्यस्तावत् सप्तपदाः शाक्वर्यः। तासां पादाः शक्वरीवहिर्भूते कैश्चित्पादैः व्यतिषक्ताः। तेषां विभागमनन्तरमेववक्ष्यतीति ॥ ७ ॥

१८२५. षष्ठमभ्यासेषु ॥ ८ ॥

महानाम्नीनां प्रत्येकमभ्यासो नामोत्तम. पादः शक्वरी वहिर्भूतः। तेषु षष्ठ षष्ठमक्षरं प्रतिहार इति ॥ ८ ॥

१८२६. आन्धास्वरं मध्यमं वचनं स्तौमिकं पुरीषेषु ॥ ९ ॥

*निदानकार-चातुरशाक्वर पञ्चाक्षर स एव कृताकृत इति । कृताकृत कैश्चिदधीत कैश्चिद्ब्रह्मचर्चेनाधीत इत्यर्थं ॥ १४ ॥

१८३२ पुरीषपदानि शाक्वराण्यभ्यास्या ॥ १५ ॥

ऊधसोऽनन्तरं एवाहिशक्र इति पुरीषसञ्ज्ञक कश्चित्पाद शाक्वरीबहिर्भूत, तदनन्तर त्रय पादाः शक्वर्याः शरीराणि, तदनन्तरमायाहीत्यभ्यास्या नामैकपदा स्तोभवच्छक्वरीशेषभूतेत्यर्थं ॥ १५ ॥

१८३३. इति पदानि ॥ १६ ॥

एवमेव तानि त्रयोदशपदानि प्रत्येक महानाम्नीनामित्यर्थं.

१८३४. उत्तमा तु द्व्यभ्यासा ॥ १७ ॥

उत्तमा महानाम्नीना, अभ्यासद्वयवतीत्यर्थं । तदेव सप्तपदशाक्वरी पादान्तरैः अशाक्वरैर्व्यतिषक्ता । न पुनः नैरन्तर्येण शाक्वरपदाध्ययन । तथा च *ब्राह्मण-असम्प्लिष्टा गायति इति । शाक्वराशक्वर विवेकस्य प्रयोजनमृगन्तरेषु महानाम्नीनामतिदेशे स्तोभवदशाक्वराणा यथास्थान प्रवृत्तिसिद्धि । तथा च वक्ष्यति-यथा स्थानमशाक्वराणीति ॥ १७ ॥

१८३५ द्विपदासु प्रस्तावाः शाक्वर प्रथमेष्वभ्यास पुरीषपदेषु च

तत्र द्विपदासु पृथगेव प्रस्ताव कार्यं । तथा शाक्वराणा प्रथमेषु पादेषु अभ्यासेषु पुरीषपदेषु च पृथक् पृथक् प्रस्तावः कार्यं इति ॥ १८ ॥

---

*मिश्र सूत्र प्रपा ३-ख-१३ । *ता ब्रा अ-१३ ख-४ सू-६ ।

१८३६. भासेनोक्तः पदान्तौ यज्ञायज्ञीये देवस्थाने वैरूपेण ॥ १९ ॥

भास वैरूपयोः गायत्रीसाम्नोः पदान्तौ, द्वाभ्यां भासे चतुर्भि. उत्तरस्येति पूर्वमुक्तं । तदेव यज्ञायज्ञीयदेवस्थानयोः प्रतिहार इति ॥ १९ ॥

१८३७. अरण्येगेयश्येनःपार्थुरश्ममच्छिद्ररयिष्ठ तेषामुत्तरेषु पदेषु

श्येनादीनां चतुर्णां साम्नां पूर्वमृक्[1]पदादुत्तरेषु सर्वेषु पदेषु पदेषु प्रतिपाद प्रतिहाराः स्युरिति ॥ २० ॥

अक्षरपरिमाणमाह—

१८३८. द्वे द्वे पूर्वयोः ॥ २१ ॥

पूर्वयोः श्येनपार्थुरश्मयोः, द्व्यक्षराः । यथा उभेयदिन्द्र॰ रोदसीत्यस्यामृचि षट्पदायांप्रथमात् पदात् । उत्तरेषु पञ्चसु पदेषु द्व्यक्षरा. पञ्चप्रतिहारा इति ॥ २१ ॥

१८३९. चत्वारि चत्वार्युत्तरयोः ॥ २२ ॥

उत्तरयो. अच्छिद्ररयिष्ठयोः चतुरक्षराः प्रतिपादं प्रति॰ हाराः स्युः ॥ २२ ॥

१८४०. उभयतः स्तोभाः पार्थुरश्मस्य २३

पार्थुरश्मस्य ये प्रतिहाराः तउभयतस्तोभसहिताःस्युरिति । अथवैरूपमधिकृत्य पञ्चनिधनं वैरूपं पृष्ठ भवतीति ब्राह्मणं, तत्र॰ स्थानामेकं निधनमन्त्य प्रसिद्धमेव । इतराणि चत्वारि न ज्ञायन्ते । अत आह—

---

1. ॰ प्रथमात् पदात् ।

१८४१. देवतापदं देवतापदमिति वैरूपे निधनानि ॥ २४ ॥

अयमर्थः-स्वाध्यायपाठे वैरूपस्य योनेरुपरिष्टात् देवतापद-द्वयं आम्नातं दिशं विश हस् इत्येक, अश्वाशिशुमतीत्यपर । तयोः अधस्तात् अपकर्षः कार्यः । कथं? उत्तरार्थस्य प्रथमपादात्पूर्वं प्रथमदेवतायाः द्वितीयपादात्पूर्वं द्वितीयदेवतायाः तदिदमुक्तम् । देवतापद देवतापदमित्येव व्यत्यस्तानि चत्वारि निधनानीति । देवतापदमिति न समासः, पदशब्देन च ऋचः पाद उच्यते । अत्र *निदानकारः-वैरूपे पददैवतं व्यत्यस्यतीत्युक्त्वा तत्र प्रमाण मुक्तवान् । तथैव शाखान्तरे छान्दसाध्ययनमस्तीति । अस्माक-मप्यूहः तथैवाधीयते ॥ २४ ॥

एवं गानं व्यवस्थाप्य प्रतिहारमाह—

१८४२. प्राक् शिशुमत्या स्तोभैः प्रतिहारः ॥ २५ ॥

अश्वाशिशुमतीत्यस्याः पुरस्तात् ये स्तोभाः तैः प्रतिहारः । निधनानां सर्वसाधारणत्वादिति ॥ २५ ॥

१८४३. एकादशमैडे दैवोदासे ॥ २६ ॥

१८४४. सप्तमाष्टमाभ्यां तैककुभस्य ॥ २७ ॥

१८४५. नवमदशमाभ्यां वैश्वमनसस्य ॥ २८ ॥

सूत्रत्रयमपि स्पष्टमिति ॥ २६, २७, २८ ॥

---

*विरूप मचिकीर्षत्-अवरमेवेदमहः इत्यादि निदा-सू-प्र-२-ख-११ ।

१८४६ तथा वृष्णः ॥ २९ ॥

वृष्ण वृषाख्यस्य साम्नोऽपि नवमदशमाभ्यां प्रतिहार ॥

तत्र विशेषमाह—

१८४७ निरुक्ताभ्यां तु तस्याभ्यासार्थः ॥ ३० ॥

'इम वृषणकृणुतैकमिन्मा'मि येत्पदायासृचि वृषाख्य सामगीयते । तत्र नवमदशमाभ्यामित्यक्षराभ्यां निरुक्ताभ्याम् अभ्यासार्थ प्रतिहार । तत्रैकशब्दस्य पञ्चभ्यासास्तेषां प्रथमास्त्र-योवागन्ता, तैरेव प्रतिहारो नोत्तरैस्त्रिभिरित्यर्थं इति ॥ ३० ॥

एव तावच्चतुष्टयानि सामानीति प्रकम्य विषमभक्तीनां भक्तयो दर्शिता । इदानीं पदविभाग्यानि दर्शयितुमारभते—

१८४८ सदृशगीतिषु सर्वेषु पदेषु पृथक्पदानि विभजेरन् प्रत्य न्तादनादेशे शेषमुद्गाता तानि विभाग्यानि ॥ ३१ ॥

येषु सामसु सर्वेपादा सदृशगीतय, तेषु पृथग्व पद पादक्रमेणाभिभजेत् । प्रत्यन्तात् कात्स्न्येनेत्यर्थ अशेषमिति यावत् अथवा प्रत्यन्तादिति सर्वत्रत्यर्थं । तृतीयपादादूर्ध्वं य शेष तमुद्गातैव ब्रूयात् । यथा ऋषभ शाक्वर स्वादोरित्याविपूर्वत इत्यत्र चतुर्थपञ्चमे पादे अयमेव न्याय, आसप्तपदाभ्यो द्रष्टव्य तानि विभाग्यानि नामेति ॥ ३१ ॥

तान्येवोदाहरति—

१८४९. त्रैष्टुब्जागता-यनादिष्टानि ॥ ३२ ॥

यानि पूर्वमनादिष्टानि त्रिष्टुब्जगतीषु गीतानि तानि विभाग्यानीति ॥ ३२ ॥

१८५०. बह्वक्षरस्तोभादीनि च रहस्येषु ॥ ३३ ॥

यानि च रहस्येषु बह्वक्षरस्तोभे आरभ्यन्ते तानि चोदाहरणमिति ॥ ३३ ॥

तान्येवदर्शयति—

१८५१ यथा वसिष्ठस्य वैराजं वषट्कारनिधनं आष्टादंष्ट्रे महावैश्वामित्र स्वर्णिधन दैवोदासमैडं वैदन्वतं प्लवः परीतायोनीनि क्रौञ्चत्वाष्ट्रीसामानि स्वारवाद्यनिधनमश्यासवदारुणारम् ॥ ३४ ॥

परीतोपिश्वतामुतमिति योनि. येषा तानि परीतायोनीनीति बहुव्रीहिरिति । एतानि पदविभाग्यानि द्विविधानि सस्तोभानि स्तोभरहितानि चेति ॥ ३४ ॥

तत्र सस्तोभविभाग्याना विभागप्रकारमाह—

१८५२. आद्यन्तस्तुब्धेषु पदाय पदायस्तोमेत्, यो यः पदं ब्रूयात् तथानुपदं स्तुब्धेषु ॥ ३५ ।

यानि सामान्याद्यन्त स्तोभसहितानि तेषु प्रतिपाद स्तोभानुषङ्ग न्यायेनाहरत् । यो यस्त पाद सदृशगीति ब्रूयात्, तथा प्रतिपाद स्तोभयुक्तेष्वपीति ॥ ३५ ॥

इति प्रथम. खण्ड.

अथ द्वितीयः खण्डः

१. तत्र सकृतितो द्वितीयपदोपक्रमे ऋग्यन्ते च स्तोभाम्नानं तत्कथं, अत आह—

१८५३ ऊर्ध्वं तु प्रथमात् पादात् संकृतिनः ॥ १ ॥

सङ्कृतिसाम्न प्रथमात् पादादूर्ध्वमेव प्रतिपाद स्तोभानु संहारो, न प्रथमे पादे। कुत स्वाध्यायकाले प्रथमवर्ज स्तोभानाम्नानादिति ॥ १ ॥

१८५४. प्राक् चतुर्थात्पादात्स्तोभैः प्रतिहारः ॥ २ ॥

सङ्कृतिन प्राक् चतुर्थात्पादात् स्तोभैरेव प्रतिहार पादाना निधनत्वादित्यभिप्राय । अत्र जैमिनिः-सङ्कृतिन प्रथमात्पादात् ऊर्ध्वं स्तोभविभाग्यवदिति ॥ २ ॥

अथ स्तोभविभाग्याना लक्षणमाह—

१८५५ निधनानि पदान्युपायसदृशस्तोभान्ताः येषातानिस्तोभविभाग्यानि ॥ ३ ॥

उपायो नाम [1]वाक्चेत्स्ताभान्तो इति वक्ष्यते । येषा साम्ना प्र तपाद अनुपपतस्तोभानामन्ता निधनोपाय सदृशाभवन्ति तेषा साम्नास्तोभानन्तरा: पादा निधनानि भवेयु । निधनधर्मका स्यु । सर्वप्रयोज्या इत्यर्थ । स्तोभा एव केवलमवशिष्यन्ते । तानेव विभजेयु । तानि स्तोभविभाग्यानि सङ्कृतिनोपि प्रथमादूर्ध्वं पदानि निधनानि । स्तोभान्तस्योपायसमानत्वात्, तथापि न विभाग्य प्रथमस्यानिधनत्वादिति ॥ ३ ॥ विभागप्रकारमाह—

१८५६ तत्र तृतीयार्थेन पदाय प्रतिहर्तास्तोभेन् ॥ ४ ॥

प्रथमायपदाय प्रस्तोता स्तोभेत् । द्वितीयायोद्गाता । तृतीयाय प्रतिहर्तेत्यर्थ । ननु न्यायसिद्धमेवैतत्, सत्य विस्प-

[1] ला॰सू॰ २० ३-३१ ।

ष्टार्थं वचनमिति । अत्र सर्वेषु स्तोभविभागेषु प्रस्तोतुः स्तोभानन्तरं सर्वेनिधनं ब्रूयुः। तदनन्तरमुद्गातुरोंकारेण स्तोभारम्भः। कुत एतत्? उद्गीथाङ्गत्वादोंकारस्य, अन्ये तु प्रस्तावशान्त्यर्थं ओंकारः स्तोभानन्तरमेव निधनात् [1]पृथग्वक्तव्यमित्याहुरिति ४

१८५७. उपायवन्तः स्तोभा एक यूपस्य ॥ ५ ॥

एकयूपस्योपक्रमे निरुपायाःस्तोभा अधीयन्ते । त एव पुनरन्ते सोपायाः तत्रोपायसहिता एव प्रतिपादमनुवक्तव्याः । तद्रहितास्तु ब्रह्मयज्ञार्थाः । उपाया इति वाचोभिधानमिति ॥

१८५८. देवतासु च ऋषभस्य शाक्वरस्य ॥ ६ ॥

शाक्वरस्य ऋषभस्य देवतासु उपायवन्त एवस्तोभा आहर्तव्याः । उपायरहितास्तु पादेष्वाहर्तव्या इति ॥ ६ ॥

१८५९. तासां नाना स्तोभेयुः ॥ ७ ॥

तासां देवतानामपि पादेभ्यः पृथगेव स्तोभेयु । प्रतिपादे प्रतिदैवतञ्चस्तोभेयुः । न केवलं प्रतिपादमेवेत्यर्थः ॥ ७ ॥

१८६०. सदेवते पदे प्रस्तावप्रतिहारौ विभाग्यश्चेत् ॥ ८ ॥

यदिऋषभः शाक्वरो विभाग्य इति मतं, तदानीं देवता सहितः प्रथमः पादः प्रस्तावस्तथैव तृतीय. पादः प्रतिहारः । विभाग्य पक्षे देवताया अन्तर्णिधनत्वमित्युक्तं भवति । अन्यथा विभाग्यो-वेत्यवक्ष्यत् । अविभाग्यपक्षे तु पूर्वमेव प्रतिहार उक्त इति ॥ ८ ॥

1. क-पूर्वं वक्तव्यं ।

१८६१. गायत्रीसामसु विभाग्येषूत्तम व्यावर्गे श्लिष्ट्वा प्रतिहरेदिति धानञ्जय्यः ॥ ९ ॥

गायत्री सामसु विभाग्येषु प्रतिपाद भागद्वय भवति। तत्रोत्तमे पादे द्वितीय भाग श्लिष्ट्वा पूर्वेण भागेन प्रतिहरेदित्यर्थः। व्यावर्ग विभाग इति पर्याय.। यस्तेमदोवरेण्य इति स्वाशिरामके उदाहरणम् ॥ ९ ॥

१८६२ सर्वेणैव पदेनेति शाण्डिल्यायनः ॥ १० ॥

स्पष्टमिति ॥ १० ॥

१८६३ त्रिवृत्वतान् स्तोमान् शुक्रियेषु चतुर्थ्युरन्यत्रनिधनेभ्यः ११

शुक्रियेषु महादिवाकीर्त्यादिषु निधनेभ्योऽन्यत्र प्रतिपाद आश्रियमाणान् त्रिवृत्वान् स्तोभान् चतु ब्रूयु'। निधनेष्वा-हृतान्त्रिरेवब्रूयुरिति ॥ ११ ॥

१८६४. महादिवाकीर्त्यस्य प्राम्नात्रिकेदैवतेनिपरिहरेत् ॥ १२ ॥

महादिवाकीर्त्यस्य साम्न प्रस्तावगतमायुर्ज्योतिरिति देवताद्वय विपर्यस्येत्। हाउकारानन्तर ज्योतिर्ज्योतिरित्यारम्भकार्य। तत पश्चादायुर्ज्योतिरिति वक्तव्यमित्यर्थ ॥ १२ ॥

ननु च अध्ययनसिद्धिक्रमकोपे कि प्रयोजनमत आह—

१८६५. एव ज्योतिष्पायण ज्योतिरुदयनं भविष्यतीति ॥ १३ ॥

एव कृते महादिवाकीर्त्यसाम ज्योतिरुपक्रम ज्योतिरवसान भविष्यतीति साम्यलाभ। पूर्वमेव ज्योतिरवसान महादिवाकीर्त्यमिति। अत्र शाखान्तरे विपर्यासविधिरस्तीति मन्तव्यमिति ॥

१८६६. तस्यात्मास्तोभविभाग्यः ॥ १४ ॥

दशानुगान महादिवाकीर्त्यं । तत्रादित षडनुगानानि क्रमेण शिरोग्रीवा स्कन्धकीकसपक्षनामधेयानि स्तोभतुल्यानि ऋगक्षररहितानि । सप्तममनुगानमात्मेत्युच्यते । तदार्चिकं, विभ्राड्बृहदित्यस्यामीयते । तत ऊर्ध्वं पुनरपि त्रीण्यनुगानानि ऊरुपुच्छसञ्ज्ञकानि ऋगक्षरवर्जितान्येव । तदेतत्साम सुपर्णमित्यार्षेय [1]ब्राह्मण । एव स्थिते इद सूत्र तस्य महादिवाकीर्त्यस्य आत्मासप्तममनुगान स्तोभविभाग्यमिति ॥ १४ ॥

१८६८. प्रथमायैवानुगानाय प्रस्तोता प्रस्तुयादात्मने च ॥ १५ ॥

तत्र प्रथमाय शिरसे सप्तमाय आत्मने च प्रस्ताव नेत-रेष्वनुगानेष्विति ॥ १५ ॥

१८६८. इतराण्यनुगानानि उद्गातैव ब्रूयात् । १६ ॥

नेतरेषु प्रतिहारइत्यर्थ ॥ १६ ॥

१९६९. तेषा निधनेष्वेनं अनूपेयाताम् १७ ॥

तेषामष्टानां निधनेषु एनमुद्गातारमनूपयाता प्रस्तोता प्रतिहर्ता चेति । एवमेक पक्ष ॥ १७ ॥

अथ पक्षान्तरमाह—

१८७०. उत्तमानि वा त्रीण्यनुगानानि प्रत्याहृत्येतरैस्सहात्मपदेभ्यः स्तोभधर्मेणानुसंहरेयुः ॥ १८

आत्मन सप्तमादूर्ध्वानि त्रीण्यनुगानानि तत पूर्वं प्रत्याहृत्यावकृष्येत्यर्थ । इतरै षड्भिरनुगानै सह नवान्यनुगानानि ।

1. आर्षेय-प्र-३-ख-२४ ।

आत्मपदेभ्यो विप्राट् बृहत्पिवत्स्वृषपदेभ्य स्तोभन्यायेन प्रतिपाद-मावर्तयेयु । तदानीमात्मने स्तोभविभागत्वेन योय स्तोभ ब्रूयात्स स आवर्तयेत् । तदुक्त स्तोभधर्मेणेति ॥ १८ ॥

पक्षान्तरमाह—

१८७१ यानि प्रागात्मन आदौ तानि सकृद्यान्यूर्ध्वमन्ततः तानि सकृदात्मनैव स्तोम पूरयेदित्यपरम् । १९ ॥

आत्मन पूर्वाण्यनुगानानि तान्यादौ स्तोत्रोपक्रमे सकृदेव प्रयोज्यानि, यान्यूर्ध्वमनुगानानि तान्यपि स्तोत्रसमाप्तौ सकृदेव प्रयोज्यानि । केवलमात्मनैवानुगानेन पुन पुन अभ्यस्तेनैकविंश-स्तोम पूरयेदिति ॥ १९ ॥

पक्षान्तरमाह—

१८७२ पर्यायाद्यन्तेषु वा ॥ २० ।

नकेवलमकृदव प्रयोज्यानि । नाप्येकविंशतिकृत्व, किन्तु प्रतिपर्यायमुपक्रमावसानयो प्रयोज्यानीति ॥ २० ॥

पक्षान्तरमाह—

१८७३ विष्टावाना वा ॥ २१ ॥

सामस्तमप्याद्यन्तेष्विति पदमनुवर्तते । विष्टावानामित्या-काङ्क्षाबलात् । तेनायमर्थ , विष्टावानामाद्यन्तेषु नवानुगानानि प्रयोज्यानि, न ततो न्यून नाप्यधिकमिति । तदेव पञ्चपक्षा ॥

१८७४. मासनिधने दशमस्य पदस्योपायश्रुतेनैव ब्रूयात् ॥ २२ ॥

विषुवति, मूर्धानं दिवो अरतिं पृथिव्या इति भासमग्नि-ष्टोमसाम विहितं। तत् सस्तोभ पदविभाग्य, चतुर्थः पाद उपद्रव.। तदनन्तर इहीहो भद्रमित्युपक्रम्य भद्रादीनि दशदेव-तापदान्यधीतानि। तानि सर्वाणि निधनानि देवताश्चारण्ये गेये-ष्विति[1]वचनात्। भासिति दशमं पद निधनमेव। तस्योपाय एकारप्रभृति वागग्नमुद्गातेव ब्रूयात्। तत. पूर्वाणि नव देवता-पदानि उपायरहितानि सर्वे ब्रूयुरित्युक्त भवति। भासनिधन इति कोऽर्थ। भासनिधन वैरूपे(प्ये) इहीहो भद्रमित्यादिके पदसंघात इत्यर्थ॥ २२॥

१८७५. सर्वाणि वा राजने त्रिरुक्तानि पञ्चकृत्वो ब्रूयुः॥ २३॥

महाव्रते राजने साम्नि यानि त्रिरुक्तानि तानि सर्वाणि पञ्चकृत्वो ब्रूयु.। बहुवचनात्स्तोत्रसामविषयमेतत्। पञ्चभक्ति-विवेकप्रकरणाच्च नेह परिसामसु भक्तिविभागोऽस्ति। केवलं प्रस्तोतृवाच्यस्यादिति॥ २३॥

१८७६. तस्यानुपदं स्तोभाः॥ २४॥

तस्य राजनस्य प्रतिपाद स्तोभावृत्ति. कार्या। अविभाग्य-त्वपक्षे एतद्वचनप्राप्त्यभावात्, विभाग्यपक्षे तु पदाय पदाय-स्तोभेदित्येव सिद्धमिति॥ २४॥

१८७७ पदेन प्रस्तावः॥ १५॥

स्तोभयुक्तेनैव सामर्थ्यादिति॥ १५॥

१८७८. तृतीयेन पदेन पुरस्तात्स्तोभेन प्रतिहारः॥ १६॥

स्पष्टमिति॥ १६॥

1. द्रा-सू-२०-३-३१।

१८७९. त्रिधार्ग्यं वा ॥ २७ ॥

इदमपि स्पष्टम् ॥ २७ ।

१८८०. तत्र देवताभ्यो यद्यदनन्तरं पूर्वं पदं तेन सहैना ब्रूयुः ॥

विभाग्यपक्षे पदेन पदेन सहदेवता अपि ब्रूयुः । नान्तर्णिधनानि देवता इत्यर्थ ॥ २८ ॥

१८८१. व्यस्तोभेत्पदवैतमित्येके ॥ २९ ॥

पदानि देवतानि च पददैवतमिति द्वन्द्वैकवद्भाव । पदाना दैवतानाञ्च पृथक्पृथक स्तोभावृत्ति कार्येत्येके मन्यन्ते । केमन्यन्ते । स्वमत पूर्वमुक्त । तस्यानुपद स्तोभ इति ॥ २९ ॥

१८८२. निधनानि पदानि पदस्तोमेषु तथेडा । ३० ॥

पदस्तोभा नाम चत्वारि सामानि धर्तादिव पवत इति योनी गीयन्ते । तेषामाद्यस्य अष्टाविडा सन्ति । द्वितीयस्य पडिडास्तृतीयस्य चतस्रइडाश्चतुर्थस्य द्वे इडे तेषामाद्यमधिकृत्य ब्राह्मण–द्वादशनिधनो भवतीति । तच्चतुर्णामपि साधारणमिति मत्वा सर्वेष्वपि द्वादशनिधनानि दर्शयति ॥ ३० ॥

१८८३. इडाश्चपदाश्च पदस्तोमेषु चतुर्ष्वपि निधनानि स्युः ॥ ३१ ॥

आद्ये तावत् पदस्तोभे पादचतुष्टय इडाष्टकञ्चास्तीति द्वादश निधनत्व, इतरेष्वपिवदयाभ इति ॥ ३१ ॥

१८८४. तेभ्योनाना स्तोभेयुः ॥ ३२ ॥

तेभ्योद्वादशेभ्योपि निधनेभ्य पृथक् पृथक् स्तोभेयुरिति ॥ कथमित्याह—

१८८५. त्रिभ्यः प्रथमेभ्यः प्रस्तोता त्रिभ्यएव सप्तमप्रभृतिभ्य प्रतिहर्ता ॥ ३३ ॥

आदितस्त्रिभ्यो निधनेभ्य. प्रस्तोता प्रस्तोभेद् । सप्तम-प्रभृतिभ्यः प्रतिहर्ता । इतरेभ्यष्षड्भ्य ऊद्गातेत्यर्थसिद्धं । स्तोभ-विभागश्चेत् अन्यस्य सर्वस्य निधनत्वादिति ॥ ३३ ॥

१८८६. अर्धपदन्निधनमिडाव्यपेतेषु ॥ ३४ ॥

यस्य पादस्य मध्ये इडेति निधनं तदिडाव्यपेतं । तेषु पादेषु इडायाः पूर्वोऽर्धं एकन्निधन उत्तरोऽर्धं एक निधनमिति । तत्र तृतीये पदस्तोभे पादचतुष्टयमिडाव्यपेतम् द्वितीये पादद्वय-मिति ॥ ३४ ॥

१८८७. सर्वमव्यपेतेषु ॥ ३५ ॥

इडाया व्यवधानाभावे सर्वोपि पादः एकनिधनमिति ३५

१८८८. चतुर्थस्य प्रथमः पादस्त्र्यक्षराणि चत्वारि निधनानि ३६

चतुर्थस्य पदस्तोभस्य प्रथमं पादं चतुर्धा विभज्य त्र्यक्ष-राणि चत्वारिनिधनानि कार्याणीति ॥ ३६ ॥

१८८९. तथा तृतीयः ॥ ३७ ॥

तथा तृतीयोपि पादः, चतुर्धाविभज्य चत्वारिनिधनानि कार्याणि, शिष्ट पादद्वयं इडाद्वयञ्च चत्वारि निधनानि इति । एवं द्वादशनिधनत्वमिति ॥ ३७ ॥

तत्रैव प्रकारान्तरमाह—

१८९०. द्वितीयोत्तमौवा द्वैधं चतुरक्षरश इतरौ ॥ ३८ ॥

द्वितीयोत्तमौ पादौ द्वैधं द्वैधं विभजेत् । तानि चत्वारि

द्वक्षरौ पादौ चतुरक्षरश्चो विभज्य षण्णिधनानि, तानि द्वाद्वयेन राह द्वादश निधनानीति ॥ ३८ ॥

१८९१. अविभाग्यांश्चेदष्टमेन प्रथमस्य ॥ ३९ ॥

अविभाग्या पदस्तोमा इति पक्षे, अष्टमेन स्तोभेन प्रथम स्याष्टनिधनार्थं आवृत्तेन प्रतिहार इति ॥ ३९ ॥

१८९२. नवमेन परेषाम् ॥ ४० ॥

परेषां द्वितीयप्रभृति पदस्तोमानां नवमेन स्तोभेन प्रतिहार इति ॥ ४० ॥

१८९३. दशमेन वाऽन्त्यस्य ४१ ॥

अथवा चतुर्थस्य पदस्तोमस्य दशमेन प्रतिहार इति ४१

१८९४. सर्वेषां प्रथमेन प्रस्तावः ॥ ४२ ॥

अविभाग्यपक्षे चतुर्णामपि पदस्तोमानां प्रथमेन स्तोभेन प्रस्ताव इति ॥ ४२ ॥

इति द्वितीयः खण्ड

अथ तृतीयः खण्ड

१८९५. इलान्दस्योत्तमेऽनुगाने षट् ॥ १ ॥

पश्चानुगान इलान्द नाम साम, तेषामाद्यमनुगान केवल स्तोभिकमृक् शून्यम्, इतराणि चत्वार्यग्निरस्मि जन्मनेत्यादि चतूभृचे क्रमेण गीतानि। तेषां उत्तमेऽनुगाने उत्तमे पादोपक्रमे षडक्षर प्रतिहार इति ॥ १ ॥

१८९६. विभाग्यानीतराणि ॥ २ ॥

अन्त्यवर्जं इतराणि चत्वारि विभाग्यानीति ॥ २ ॥

१८९७. प्रथमं वाऽविभाग्यम् ॥ ३ ॥

अविभाग्यं वा प्रथममनुगानमिति ॥ ३ ॥

१८९८. तत्रोत्तमस्य स्तोमस्य मध्यमेन वचनेन ॥ ४ ॥

तत्राविभाग्यपक्षे उत्तमस्य स्तोमस्य मध्यमेन वचनेन प्रतिहार इति ॥ ४ ॥

१८९९. एकादश दैर्घतमसस्य ॥ ५ ॥

स्पष्टमिति ॥ ५ ॥

१९००. अष्टमैस्तोमैः त्रिरुक्तैः भद्रश्रेयसोः ॥ ६ ॥

इमानुकंभुवनासीषधेमेति द्विपदायां भद्रं, पवस्वसोम-मन्दयन्निति श्रेयस्साम, तत्र द्वयोः पादयोः निधनस्य च स्तोभ-त्रयमाहर्तव्यं। ते चावृत्या नवभवन्ति। तत्राष्टमेन त्रिरुक्तेन प्रतिहारः। अष्टमैरिति बहुवचनं अभ्यासापेक्षमिति ॥ ६ ॥

१९०१. पञ्चमैश्च यदि द्विप्रतिहारे ॥ ७ ॥

यदि द्विप्रतिहारे भद्रश्रेयसी कर्तुमिष्टे तदा पञ्चमैश्च स्तोभैः त्रिरुक्तैः प्रतिहार इति ॥ ७ ॥

१९०२. पञ्चाक्षरशः स्तोभविभाग्ये धर्मविधर्मणी ॥ ८ ॥

द्विपदयोः ऋचोः धर्मविधर्मणी सामनी भवतः, तयोः द्विपदामृचं पञ्चाक्षरशः चतुर्धाकृत्वा तानि चत्वारि पदानि *निधनानि कुर्युः। प्रतिनिधनञ्च स्तोभाभ्यासः।* ततस्तोभ विभाग्ये स्यातामिति। धर्मसाम्नि केवलमावन्त तुर्धेऽपि स्तो-भविभाग्ये इति वचनसामर्थ्यात् प्रतिपादं स्तोभावृत्तिरिति ॥ ८ ॥

१९०३. द्विपदाकारं वा ॥ ९ ॥

यद्वा द्विपदामेव कृत्वा स्तोभविभागं कुर्यात् । उभयथाप्युपदेशात् । तथा च निदानकारः—द्विपदा एता एके प्रतिजानत इति । पञ्चाक्षरपादैः चतुष्पदा अक्षरपङ्क्तय इत्यन्य इति ॥९॥

१९०४. तयोर्दशमः स्तोभः प्रतिहारः ॥ १० ॥

द्विपदाकारपक्षे दशमे स्तोभे प्रतिहारः । औहोवेति त्रीण्यक्षराणि स्तोभाः, ते च द्विपदाकारपक्षे प्रतिनिधनं चतुष्षु-रभ्यस्ता द्वादश । तत्र दशमेऽभ्यस्ते प्रतिहारः ॥ १० ॥

१९०५ षष्ठेश्च यदि द्वि प्रतिहारः ॥ ११ ॥

-तयो द्विप्रतिहारमिच्छेत्, तदापष्ठेऽपि स्तोभेः प्रतिहार इति ॥ ११ ॥

१९०६. पदान्ते त्रीणि सौहविषे ॥ १२ ॥

पदान्ते त्रीणि सौहविष इति, प्रतिप्रथन्वेत्येषाऽक्षरपङ्क्ति चतुष्पदा तस्याः स्थानुर्मिलायेस्यत्र त्रीण्यक्षराणि प्रतिहारः । सौहविष इति हाइकारः स्यारोगृह्णन इति ॥ १२ ॥

१९०७ पदादौ वा ॥ १३ ॥

यद्वा उत्तमपादोपक्रमे त्र्यक्षरः प्रतिहार इति ॥ १३ ॥

१९०८. मध्यमं वचनं स्वर्णनिधने सौहविषे ॥ १४ ॥

स्वर्णनिधने सौहविषे पूर्णे भगायेत्यस्य त्रिरुक्तस्य मध्यमं वचनं प्रतिहार इति ॥ १४ ॥

१९०९ विभाष्य वा ॥ १५ ॥

यद्वा पञ्चाक्षरशो विभाज्य स्वर्णिधनमिति ॥ १५ ॥

१९१०. मध्यममेव वचनं पुरस्तात्स्तोभं वैराजस्य ॥ १६ ॥

पिबासोममिन्द्रमन्दतुत्वेति वैराजस्योत्तमः पादः त्रिरभ्यस्यते । तत्रमध्यमं वचनं पुरस्तात्तोभयुक्तं प्रतिहार इति ॥

१९११. तस्य पदान्ताश्चतुर्भ्यस्येयुः । १७ ॥

तस्य वैराजस्य त्रिरुक्तान् पादान् चतुरभ्यस्येयुः, यथाम्नायं वेति विकल्पः ॥ १७ ॥

१९१२. तथा चातुर्थिकस्य वात्सप्रस्य ॥ १८ ॥

तथा पृष्ठस्य चतुर्थेऽहनि क्रियमाणस्य वात्सप्रस्यापि त्रिरुक्तान् पदान्तान् चतुरभ्यस्येयुः त्रिर्वेति विकल्प इति ॥ १८ ॥
किमुभयत्रापि विकल्पे याथाकाम्यं? नेत्याह—

१९१३. समाधिस्तु ॥ १९ ॥

साम्येन प्रयोगः समाधिः । वैराज वात्सप्रयोः साम्यं कुर्यात् । न पुनरेकस्य चतुरभ्यास स्यादन्यस्य त्रिरभ्यास इति वैषम्यं कुर्यात् । तथा च [1]निदानकारः-तेन वात्सप्रं समादद्ध्यात् यदि वैराज त्र्यनुतोद वात्सप्रमपि । यदि चतुरनुतोदं, वात्सप्रमपि चतुरनुतोदमिति । तथा च वात्सप्रमधिकृत्य एवमेव ब्राह्मणं भवति एतस्मिन् वैराज प्रतिष्ठितमिति । गानसादृश्यात् प्रतिष्ठितमिति वाद इति ॥ १९ ॥

१९१४. ऋगादिस्तुपरिष्टाल्लामकायनः ॥ २० ॥

वैराजसमाप्तौ पिबेत्यक्षरद्वयं आम्नातं, तत्रसन्देह । किमेतत् पिबासोममिन्द्रमन्दतुत्वेति ऋगाद्यक्षरद्वयं, किं वा तत्सदृशस्तोभाक्षरमिति । तत्र ऋगादिरिति लामकायनः, यथा

(1) [1]निदा-सू-प्र-३-ख-१२ ।

लोक गाथा गीत्वा पुनरपि तदादेरावेष्टन तद्वत्, पिबासोम-
मिन्द्रमन्दतुत्वेत्यृच गीत्वा पुनरावेष्टनमिद पिबेत्यक्षरद्वय इति ।।

१९१५. स्तोभ शाण्डिल्यः ॥ २१ ॥

आवेष्टनमित्यत्र प्रमाणाभावात् ऋगक्षरसदृश स्तोभ इति मन्यते । किं विवेकस्य प्रयोजन, आवेष्टनपक्षे उत्तरयोस्तोत्रीययोस्तदादेरव वेष्टन कार्य । स्तोभपक्षे पिबेत्येतस्यैव उत्तरयोरप्यतिदेश स्तोभान्तरवत् ॥

१९१६ त्रैककुभे च यादादिम् ॥ २२ ॥

उपरिष्टादित्यनुवर्तते । स्तोभ शाण्डिल्य इति त्रैककुभ साम्नि उपरिष्टाद्यकार आम्नात । सोपि य एकइहियते, इति पदादि यकार आवेष्टित इति शाण्डिल्यो मन्यते । स्तोभ इति स्वमत अस्य *निदानकारेण त्रैककुभस्य निधने विप्रतिपद्यन्त इत्यादिना निधनेपि विप्रतिपत्तिरुक्ता । सूत्रकारस्तु निधनात पूर्वस्मिन् यकारे स्तोभो वा पदादिर्वेति मतभेददर्शितवानित्यनुसन्धातव्यमिति ॥ २२ ॥

१९१७ अनिभाग्यानामुत्तमेपदे प्रागुपायात् षट्सु व्यावर्गेवत्सु अष्टसु वा यथा वामदेव्यक्रौशयोः पूर्वेण व्यावर्गेण प्रतिहरेदिति शाण्डिल्यः, उत्तरेणेति धानञ्जय्यः । २३ ॥

अनिभाग्यानामुत्तमे पादे निधनस्योपायात् प्राक् षडक्षरे मध्येऽष्टस्वक्षरवति सति अवसानात्पूर्वांश प्रतिहारइत्येकमत । उत्तरांश इत्यपर मत । व्यावर्गो विभाग इति पर्याय इति । एव तावत् साम्ना स्वयोनिगताक्षर सङ्ख्यया प्रतिहार उक्त ।।२३।।

यत्र योनिविसदृशछन्दःसु अक्षरवृद्धिःलोपश्च भवति, तत्र योनौ प्रतिहारे यागीतिः सैव प्रतिहारो, नाक्षरसंख्यादर इत्याह ।

१९१८. प्रातिहारिकमेव गीतं प्रतिहारो वैछन्दसेषु ॥ २४ ॥

किमुदाहरणं? इमं वृषणं कृणुतैकमित्येकपदायां वृषाख्य सामोत्पन्नं अभिप्रवस्सुराधस इति बृहत्यां गीयते । तस्य योनौ नवमदशमाभ्यां प्रतिहारे, बृहत्यां पुनः सागीतिः दशाक्षरोभवतीति ॥ २४ ॥

१९१९. अप्यपदादौ ॥ २५ ॥

[1]पदादिः प्रतिहारस्यानिमिति पूर्वमुक्तं । अपदादावपि वैछन्दसेषु प्रतिहारः स्यात् । यथा प्रत्नं पीयूष पूर्व्यं यदुक्थ्यमित्यामहीयस्य । एवमन्यान्यपि द्रष्टव्यानीति ॥ २५ ॥

अथोपद्रवभक्तिमनुसन्धत्ते —

१९२०. नोर्ध्वं प्रतिहारादोंकारेणाऽददीतेति गौतमः ॥ २६ ॥

तत्रवकारिणामूहाध्ययने उपद्रवभक्तेरप्योंकारेणादानं दृष्टं तस्य निषेधोयमिति ॥ २६ ॥

१९२१. प्रत्यवेतस्वराणां तु प्रत्युद्गृह्णीयया कालेयवात्सगूर्दानाम् ॥

चतुर्थमन्द्रादिनाच स्वरेण ये प्रारभ्यन्ते ते प्रत्यवेतस्वरा उपद्रवाः । तेषां ओंकारेणादानं कर्तव्यमिति धानञ्जय्यमतं वक्ष्यति । गौतमश्च तेषां प्रत्युद्ग्रहणमेव कार्यं नप्रणवेनादानमिति मन्यते । प्रत्युद्ग्रहनाम क्रुष्टप्रथमाद्युच्चैःस्वरेण प्रारंभ इति ॥ २७ ॥

1. द्रा सू-१७१५ ।

तमेव पाठेन दर्शयति—

१९२२. न काऽ२३४५रिणां । मयोऽ२३४१ वा । करोऽ२३४५वा । ओंकारेण प्रत्यवेतस्वराणामाददीतेति धानञ्जय्यः ॥ २८ ॥

१९२३. यथाम्नायं शाण्डिल्यः ॥ २९ ॥

द्वयमपि स्पष्टम् ॥ २८, २९ ॥

अथ निधनभक्तिमनुक्रमिष्यन् अन्तर्णिधनानि तावदाह—

१९२४. इहकार इडाऽथकारो गीतश्च निधनस्वरं हीपीस्वरश्च द्व्यक्षरं देवताश्चारण्येगेयेषु तान्यन्तः सामनिधनानि ॥ ३० ॥

इहकार इडाऽथकारा स्तोभरूपा अन्तर्णिधनानि स्यु । यश्च सामान्यनिधनेन सदृशस्वरं वत्साममध्येपि गीयते । यच्च निहोतासत्सि बर्हिषीति पदान्तेन हीपीशब्देन सदृशस्वर द्व्यक्षर, यथा मौक्षाजये । यानि च देवतापदानि अरण्येगेयेषु स्वज्योति-रित्यादीनि तान्येतानि चतुर्विधानि साम्नामन्तर्णिधनानि सर्वैः प्रयोज्यानीत्यर्थ ॥ ३० ॥

किमेतान्यविशेषेण निधनानि? नेत्याह—

१९२५. यावचेत् स्तोभान्तोऽनन्तरः पुरस्ताद्वृद्धः कृष्टोवाऽकारः स्वरितं वाऽऽन्निकं वा वृद्ध पूर्वेषां त्रयाणाम् ॥ ३१ ॥

देवतान्य पूर्वेषा त्रयाणा देवताव्यतिरिक्तानामित्यर्थ । यदि पुरस्तादनन्तर स्तोभान्तो वाक्शब्द स्यात्, यदि वावृद्ध-कृष्टोवाकार पुरस्तात् स्यात्, यदि वा स्वरितमक्षर पुरस्तात् स्यात्, यदि वा वृद्धमक्षर पुरस्तात् स्यात्, यदा त्वाष्ट्रीसामनि तदानीमेव तेषा त्रयाणा निधनत्व नान्यथेत्यर्थ. । तदेव लक्षण

चतुष्टय देवता व्यतिरिक्तानां निधनत्वेहेतुः । देवतास्त्वविशेषे णनिधनानीति विवेक ॥ ३१ ॥

तेषामुदाहरणमाह—

१९२६ यथा रेवत्यस्साम्नीसामयौधाजयःक्रार्ढव्युतं आथर्वणमान्धीगवम् ॥ ३२ ॥

अत्रान्धीगव वक्ष्यमाण निधनस्योदाहरण, उक्तानां निधनानां तत्र अभावादिति । एव चतुष्टयानि निधनान्युक्तानि ३२ अथ पञ्चम निधनमाह—

१९२७. तेभ्यो यन्निगदद्गत्यनन्तरमार्चिकं तेन सहोवेयुरनादेशे ३३

तेभ्यइतिउभयेषापरामर्शः । तेभ्योनिधनेभ्य तल्लक्षणेभ्यश्च यागादिभ्यो यदनन्तरमार्चिकमक्षर निगदस्वरेण वर्तते तेनसहोवेयुः । तदपि पूर्वं चतुर्भिः सह निधनत्वेन ग्राह्यमित्यर्थः ।तत्र निधनेभ्याऽनन्तरवर्तिनउदाहरणमच्छिद्रमूर्दादीनि सामानि । यथाऽच्छिद्रे परीतोपिश्वनासुतमित्यत्र उत्तरे त्रय पादाः हीषी स्वरादुत्तरानिगदवर्तिनः । यागादिलक्षणानन्तर वर्तिनोनिधनस्योदाहरण आन्धीगव गौतम रयिष्ठादिक । एतेषा पञ्चानामपि निधनत्वे ब्राह्मणमस्ति । यथा त्रिणिधन भवति दशाक्षर मध्यतो निधनमुपयन्ति । यच्चानुष्टुभस्य मध्ये निधनस्य ब्राह्मण तदुचैतस्येत्यादिक । ननु आन्धीगवादिषु गीत च निधनस्वरमित्यनेनैव निगदवर्तिनोपि निधनत्व सिद्धम् । नैव तावत् सामान्तर्णिधनसादृश्याभावात् वेदसामाध्ययनेच सामान्यनिधनस्वरोप्यस्तीति वक्तव्यमेतदिति । तदेव पञ्चविधमन्तर्णिधनम् ॥

१९२८. इकारादिरिडा सर्वे उपेयु ॥ ३४ ॥

द्विधातावदिडा, इकारणपृथक्भूतासयुक्ताचेति । तत्र सयुक्तामिडा सर्वे ब्रूयु । इकारेण सहैव ब्रूयुरित्यर्थ ॥ ३४ ॥
उदाहरणमाह—

१९२९ तानि प्रतीचीनेडानि ॥ ३५ ॥

तानि सामानि प्रतीचीनेडानि काशीतप्रभृतीनि येष्विकारेण सहवचनमिति । प्राप्तेवचनमुत्तर विवक्षार्थमिति ॥३५॥

१९३०. डाकारं त्वन्यासु गौतमः ॥ ३६ ॥

अन्यासु इडाकारेण पृथक्भूतासु इडासु डाकारमात्रमेव सर्वे निधन ब्रूयु । इकारन्तु केवलमुद्गातैव ब्रूयादिति ॥ ३६ ॥

१९३१. इडेति धानञ्जय्यः ॥ ३७ ॥

इकारेण पृथक्भूतामपि तेनसहैव ब्रूयुरिति धानञ्जय्य मतम् । उदाहरणम्—कालेयादि ॥ ३७ ॥

१९३२ इकारान्तश्चैनोपाय प्रगाथेषु संप्रगायन्ति कुरवः ॥ ३८ ॥

पृथक्भूत इकारान्तो यस्य उपायस्य त इकारान्तनिधनोपाय होऽकार उद्गात्रासह सप्रगायन्ति कुरुशिष्याः । न केवलमिकारमात्र ॥ ३८ ॥

एव करण तेषा कोऽभिप्राय इतिचेत्तमाह—

१९३३. एवमः कृत्स्नेडोपेता भविष्यति ॥ ३९ ॥

एव क्रियमाणे इकारेणसहपूर्णेडास्माक प्रयुक्ता भविष्यतीत्यभिप्राय इति ॥ ३९ ॥

गुरुसमत निराकरोति—

१९३४. प्रत्युद्गीयस्तुखल्वेषान्तादोद्गाता भवति ॥ ४० ॥

उपायस्यापि सहवचनं, उद्गात्रैवगेय सन्तमुपायं प्रस्तोता प्रतिहर्ता च द्वावपि प्रत्युद्गायत इति महान् दोषः ॥ ८० ॥ गौतम पक्षोपिनातीवसाधुरित्याह—

१९३५. कृत्स्नामेके समयाम्नानाभ्याम् ॥ ४१ ॥

उपाय विना केवलमिकारेण पृथगेवस्थितेनैव सह कृत्स्ना वषट्क्या इत्येके मन्यन्ते यथोक्त धानञ्जय्येन । कुत.? आचार्य-समयात् समाम्नायाच्च द्रवन्तोमिडामुपयन्तीति[1] पृथक्भूतामिडा-मधिकृत्य समाम्नायो भवति । यदि, डाकारमात्रमेव विद्यान स्यात् तदा, डामुपयन्तीति, वक्तव्य स्यात्, न पुन. इडामुप-यन्तीति, कालेयादीनामिडानीति च व्यपदेशो न स्यात् । यथा-ऽध्ययन पृथक्स्थितमिकार डकारश्च सर्वेष्वयुरिति सिद्धमिति ॥

१९३६. पुरीषपदशेषान्निधनान्याचार्याः स्वरितान्तानि यथाऽधीतं वा ॥ ८२ ॥

महानाम्नीशेषभूतानि पुरीषपदानि निधनानि सर्व-प्रयो-ज्यानि ब्रुवते । तदा स्वरितान्तानि स्युः । इन्द्रादिपद स्वरि-तान्त कृत्वा तत ऊर्ध्वस्य स्वरस्य लोप इति एकमतं । अथवा यथाधीतमलोपेनैव निधनानि स्युरिति मतान्तर । स्वमते तु पञ्चभक्तीनि । तेषु भक्तयश्च पूर्वमेव दर्शिता इति ॥ ८२ ॥

इति तृतीय खण्डः

---

1. ता ब्रा-अ १२ ख ६ब्रा-१४ ।

ननु च अगूढपक्षोऽनुपपन्न । कथं, सर्वत्र प्रायेण योन्या- र्चिकस्वर बाधित्वा स्वतन्त्रेणैव स्वरेण साम्नोनिष्पत्ति । तेनोत्तरयोरपि तथैव युक्त । सत्य एव, यत्र योन्यामेकदेशमन्द्र- स्वरेणैव साम गीयते तत्र सन्देह । किं तस्मिन् अंशे मन्द्रस्वरो न बाधनीय इत्यभिप्रायेण, तेन स्वरेण साम्नो निष्पत्ति, किं वा तत्रापि स्वतन्त्र एव साम्न स्वर, यदृच्छया तु मन्द्रस्वर एक रूपोजात इति । तत्र बाधपक्षे उत्तरयोरपि तस्मिन्नंशे योनेः विसदृशस्वरेपि तत्स्वरबाधेन गेयमित्यगूढोपपत्ति । योनौ यादृच्छिकमैकरूप्यमिति पक्षे सामोढपक्ष इति विवेक इति । होय पक्षद्वयोपन्यास ऊहाध्ययन पौरुषेयमिति सूचयति

१९४६ ऊनाक्षरेषु पादेष्वक्षरोपघि शाण्डिल्यः ॥ १० ॥

योनिपादादूनाक्षरेषु उत्तरपादेषु गानवासे सन्धिकार्येण- ग्रस्तमक्षर पुनरपदध्यादिति शाण्डिल्य इति ॥ ४० ॥

तदुदाहरणेन दर्शयति—

१९४७ यथाग्नेस्त्रिणिधनस्याऽऽनूपेऽ२३४गो मान् गोमिराऽ३१-
उवाऽ२३ । आऽ२३४क्षाः । सोमो दुऽ२३४ग्धा । मिऽरा-
ऽ३१२ वाऽ२१ । आऽ२३४क्षा । तदक्षरसधात्वनुपाधि
धानक्षम्य. आनूपेऽ२३४गो । मान् गामिराऽ३२१ उवा-
ऽ२३ । क्षाऽ२३४५ः । सोमोदुऽ२३४ग्धाः मिराऽ३२-
उवाऽ२३ । धाऽ२३४५ः । तत्पद सधातु ॥ ११ ॥

प्रसोमदेववीत य इति योनौ तृतीय पादो द्वादशाक्षर । सोम उप्वाणस्सोतृभि इति मध्यमाया अनूपे गोमानिति नवा-

क्षर.। तत्र यावत्संभव योन्यक्षरसादृश्यसपादनेन गीयते निधन यत्र तदक्षरसधातु साम,योनिपादे अनुपधानात् तत्सादृश्येन निधन तत्र तत्पदसधातुसमेति ॥ ११ ॥

१९४८. पाद्क्तस्यानुष्टुप्सु द्वितीयपादं द्वैधं व्यूहेत् चतुरक्षरशो यथा ऋषभस्य शाक्वरस्य ॥ १२ ॥

पङ्क्तियोन्यामुत्पन्नस्य साम्नोऽनुष्टुप्सु गानेकर्तव्ये सति द्वितीयमनुष्टुभ पादो द्वौ चतुरक्षरौ भागौ कृत्वा पङ्क्तिवद्गा-येदिति ॥ १२ ॥

१९४९. तृतीयंबृहतीष्वष्टाक्षरं चतुरक्षश्च यथा संकृतिनः ॥ १४ ॥

तस्यैव पाङ्क्तस्य बृहतीषु गाने कर्तव्ये सति तृतीय पाद द्वेधाविभजेदष्टाक्षरश्चतुरक्षरश्चेति ॥ १३ ॥

१९५०. सिमा बृहत्यनुष्टुप्सु योनौ यथा पद व्यूहेत् ॥ १३ ॥

सिमा शक्वर्यो महानाम्न्य इति पर्यायाः। ता बृहती-ष्वनुष्टुप्सु गीयमाना यथा पद व्यूहेत्, त्रयोदशपादा महानाम्न्य इति पूर्वं उक्त, तद्वदेव सोमउष्वाण सोतृभिः पवस्ववाजसातय इति बृहत्यनुष्टुभौ त्रयोदशधा विभजेदिति ॥ १४ ॥

कुत इत्याह —

१९५१. सद्यग्धर्मः ॥ १५ ॥

यथारूपा योनि तथा रूपमृगन्तर कार्यमित्येषहि ऋचा धर्म इति सिद्धान्तमाह ॥ १५ ॥

१९५२. सप्तधेत्याचार्याः ॥ १६ ॥

सप्तधैव विभजेदिति ॥ १६ ॥

कुनइत्याह—

१९५३. सप्तहि शाक्वराणि ॥ १७ ॥

सप्तपदानि शाक्वराणि शक्वरीशरीरभूतानीत्यर्थः । इतराणि पदानि शक्वरीबहिर्भूतानि स्तोभवत् महानाम्नी शरीर भूतानीति पूर्वमेवोक्तमिति[1] ॥ १७ ॥

तत्र प्रमाणमाह—

१९५४. उपक्षुद्रा इति चाह ॥ १८ ॥

महानाम्नीरधिकृत्य ब्राह्मण[2] उपक्षुद्रा गायन्ति तस्मा॰ उपक्षुद्रा पशव इति । तस्यायामर्थ –यासां समीपेक्षुद्राणि पञ्च॰ छन्दांसि व्यतिपवनानि द्विपदा धातु वरस पुरुष अध्यासेति भवन्ति । ता उपक्षुद्रा शक्वरीर्गायेत् अत एवहि पशवोपि उपक्षुद्रा भवन्ति । तथाहि धेनुसमीपे क्षुद्र भूता वत्सा स्त्रीपुंस रूपास्तिष्ठन्ति । किञ्च 'शक्वर्यपृष्ठ भवन्ति अन्यदन्यच्छन्द' इति ब्राह्मण असन्निष्टागायतीति च पूर्वमेव व्याख्यातम् । तेन सप्तपदा एव शाक्वर्य इति ऋगन्तरमपि सप्तधैव कार्यमिति ॥

तत्कथमित्याह—

१९५५ तासा द्वितीय पद द्वे द्वे कृत्वा चत्वार्यूधः ॥ १९ ॥

तासां बृहत्यनुष्टुभा द्वितीय पाद द्वे द्व अक्षरे कृत्वा उत्त॰ राणि चत्वार्यक्षराणि ऊध्र संज्ञक पाद कार्य । तत्र पूर्वौ द्वौ द्व्यक्षरौ पादद्वयमिति विद्यादिति द्वौ चत्वारीति ॥ १९ ॥

अथ बृहत्या तृतीयेपादे विभागप्रकारमाह—

१९५६. अष्टौ चत्वारीति तृतीयम् ॥ २० ॥

सा तृतीय पाद अष्टौचत्वारीत्येव द्वधा विभजेदिति २०

1 द्रा-सु २०-१ १२ 2. ता-ब्रा-१३-४-५ ।

१९५७. चत्वार्यष्टाविति वा ॥ २१ ॥

यद्वा चतुरक्षरं अष्टाक्षरमित्येवं विभजेदिति ॥ २१ ॥

१९५८. समधाऽनुष्टुप्सु ॥ २२ ॥

अनुष्टुप्सु तृतीयं पादं समधा—समशो विभजेदिति २२

१९५९. यथास्थानमन्नावराणि ॥ २३ ॥

महानाम्नीनां अन्नावराणि यानि पदानि द्विपदा धातुर्वरसादीनि सर्वाणि सोमउध्वाणस्सो तृभिरिति बृहतीषु यथास्थानं स्तोभवन्निवेशयेत् इत्यर्थः । तेन द्विपदां गीत्वा महानाम्नीनां प्रस्तावः कार्यः । धातुर्वरसाद्यपि तत्रैव निवेशयेदिति ॥ २३ ॥

१९६०. योनौ यान्यभ्यासेनान्यच्छन्दःसंपद्यन्तेयथागौरीवितौदलकौत्स नैकक्रुम वैखानसानि तदापन्नेषु तेषु गौतमस्तार्दिगवापनश्यासम् ॥ २४ ॥

योनौ यानि सामानि पदानामभ्यासेन छन्दोन्तरमापद्यन्ति यथागौरीवितादीनि । तेषु साक्षादेवतच्छन्दःसु गीयमानेषु पादाभ्यासोनकार्य.ईप्सितस्यैवमुख्यस्यछन्दसोलाभादिति । गौतमश्च सार्दगवश्च मन्यते ॥ २४ ।

१९६१. मशकोगार्ग्योऽभ्यासं मशको गार्ग्योऽभ्यासम् ॥ २५ ॥

मशकाचार्यस्तु तत्राभ्यासः कर्तव्य इति मन्यते, योन्यां-दर्शनादिति ॥ २५ ॥

साम्नां भक्तिविभागज्ञः शास्त्रदृष्ट्यनुसारतः ।

उपगच्छेत्प्रिय धाम साम्नांविष्णोश्च शाश्वतम् ॥

इति काश्यपगोत्रेण धन्विनाप्रीतये हरेः ।

छन्दोग सूत्रे दीपोयं मध्यमे दशमे कृतः ।

इति चतुर्थः खण्डः ।

विंशः पटलः समाप्तः

## अथ एकविंशः पटलः

### प्रथमः खण्डः

१९६१. ऊधास्थानेष्वन्यानि निधनानि ॥ १ ॥

सिक्षस्तावदूधाः, अर्धाः पूर्णाः अध्यर्धाश्चेति । तासां सर्वासां स्थाने प्रयोगकाले निधनान्तराणि स्युः । कुतः क्वचिदाहृत्य-ब्राह्मणे विधानात्, क्वचिदनुवाददर्शनाच्च । ऊधाध्ययनं तर्हि किमर्थं? अध्ययनार्थमिति ॥ १ ॥

१९६२. स्वरानादेशे तथास्वराणिस्युः ॥ २ ॥

तानि च निधनानि अनादेशे तथा स्वराणिस्युः । ननु च स्थानापत्ते सिद्धमेवैतत् । न सिद्धं सूर्यायत्वा जुष्टं निर्वपामी-त्यादिषु अग्न्यादिपदस्थानापन्नस्य सूर्यादिपदस्य स्वतन्त्रस्वर-दर्शनात् । तेन वक्तव्यमेतदिति ॥ २ ॥

१९६३. इडाअनादेशे ॥ ३ ॥

ऊधास्थानेष्वित्यनुवर्तते । निधनविशेषानादेशे, तत्स्थाने-ष्विडा: स्युः । सामान्यविधिरयमिति ॥ ३ ॥

अथ विशेषं वक्तुमारभते—

१९६४. उक्थिन्यर्धेडा ॥ ४ ॥

उक्थ्यर्धोधास्थानेऽर्धेडास्यादिति । अर्धेडयावै देवा असुरा-नवहरंथेति ब्राह्मणे अनुवाददर्शनादिति ॥ ४ ॥

१९६५. प्रकृतिस्वरा प्रथमस्वरा वा ॥ ५ ॥

साचार्धेडास्थानस्वरास्यात् । प्रथमस्वरावेति विकल्प इति ॥ ५ ॥

१९६६. अध्यर्धारभ्यर्धोपानाम् ॥ ६ ॥

अध्यर्धोपानां स्थाने अध्यर्धेडा स्यादिति । (इट् इडेति) ६

१९६७. औत्पत्तिकः स्वरः स्वः काशीते ॥ ७ ॥

काशीते साम्नि ऊपास्थाने स्वरिति शब्दो भवेत् । स च औत्पत्तिक स्वर स्यात्—आत्मीय स्वर इत्यर्थ ॥ ७ ॥

१९६८. दैवोदास सुज्ञानयोश्च ॥ ८ ॥

दैवोदास सुज्ञानयोरप्यूपास्थाने स्वरितिनिधनं । स्वर्णिधन भवतीति ब्राह्मणानुवाद दर्शनादिति ॥ ८ ॥

१९६९. स्वः पृष्ठे च पूर्वे ॥ ९ ॥

स्व पृष्ठे साम्नि ऊपाद्वयमस्ति, तत्र पूर्वस्मिन्नूपास्थाने स्वरिति निधन भवेदिति ॥ ९ ॥

१९७०. उत्तर इति गौतमधानञ्जय्यौ ॥ १० ॥

स्वः पृष्ठस्योत्तरस्मिन् ऊपास्थाने स्वरिति भवेत् । पूर्वस्मिन्निडेति मतान्तरमिति ॥ १० ॥

१९७१. औपगवयोरथामथा वा ॥ ११ ॥

औपगवयो साम्नो ऊपास्थाने अथेति निधन स्यान्मथेति वेति ॥ ११ ॥

१९७२. क्रमन्तु नाना ॥ १२ ॥

अथवा औपगवयो अथामथेति निधनद्वयं पृथगेव क्रमेण स्यात् । प्रथमेऽथेति स्यात्, द्वितीये मथेत्यर्थ. ॥ १२ ॥

१९७३. अभिचरणीयेषु वा मथान्यत्र ॥ १३ ॥

यद्वा अभिचरणीयेषु क्रतुषु औपगवयोरुभयोरपि मथेति निधन स्यात् । तेभ्योऽन्यत्र क्रतुष्वथेति व्यवस्था स्यादिति ॥

इदानीं जागतस्य सोमसाम्न ऊपास्थाने दशपक्षान् वक्ष्यन् प्रथमं पक्षमाह—

१९७४. जागतस्य सोमसाम्न इन्द्र इव दस्यूँरमृणाऽ२३४५ः । सूर्य इव दस्यूँरमृणाऽऽ२३४५ः । वज्रिन् सुवज्रोऽ२३४५ ॥ १४ ॥

सोमसाम्न ऊपास्थानं इन्द्र इव दस्यूनिति वाक्यं पृथक् पृथङ् निधनस्वरेण स्वरयित्वाऽवस्येदिति । १४ ॥

तत्रैवावसाने विकल्पमाह—

१९७५. द्विर्वावस्येत् ॥ १५ ॥ स्पष्टम् ॥

तदेव पाठेन दर्शयति—

१९७६. इन्द्र इव दस्यूँरमृणःसूर्यइव दस्यूरमृणो वज्रिन् सुवज्रोन ।
इन्द्र इव दस्यूँरमृणाऽ२३४५सूर्य इव दस्यूँरमृणो वज्रिन् सुवज्रोऽ२३४५निति वा ॥ १६ ॥

१९७७. सकृद्वाऽन्ततः इन्द्रइवदस्यूँरमृणःसूर्यइवदस्यूँरमृणो वज्रिन् सुवज्रोऽ२३४५निति ॥ १७ ॥

तदेव प्रथमे पक्षेऽवसान विकल्पा उक्ता ॥ १७ ॥

अथोत्तरैर्नवभि सूत्रैः नव पक्षान् दर्शयति—

१९७८ यथावायोभिस्त्राया निहन्यमानायां ह्राद यात् ॥ १८ ॥

यथाऽयस्कार स्त्रीयामयोमस्त्राभ्युनासपूर्वं विहृत्य ह्रादयेत तादृशस्वर निधन फूत् काररूप ऊपास्थानं कुर्यात् इति

१९७९ यथावाऽश्वौपमूर्च्छेयाताम् ॥ १९ ॥

यथा द्व श्वसौ परस्पर समाहृते स्वनत, तादृशशब्द निधन कुर्यादिति ॥ १९ ॥

१९८०. यथा वा निष्कः कृन्तत्रेणाभिहतो ध्वनेत् ॥ २० ॥

यथावा निष्कः सुवर्णकारेण कृन्तत्रेणाभिहतो ध्वनेत्, तादृशं शब्दं निधनं कुर्यादिति ॥ २० ॥

१९८१. यथा वा सनूपुरपादस्य भूमौ निखातः (अभिघातः) स्यात् ॥ २१ ॥

सनूपुरपादस्य भूमौ निखाते (अभिघाते) कृते यः शब्दः तादृशं वा निधनं स्यादिति ॥ २२ ॥

१९८२. गण्णिति (गौणिति) वा ॥ २२ ॥

गण्णिति वा निधनं कुर्यादिति ॥ २२ ॥

१९८३. यथावाऽप्सु पिप्पलं निपतेत् ॥ २३ ॥

पिप्पलं फलं यथाप्सु (आम्रादि) निपतच्छब्दं करोति तादृश ·ं स्यादिति ॥ २३ ॥

१९८४. प्लुगिति वा ॥ २४ ॥

१९८५. प्लौगिति वा ॥ २५ ॥

१९८६. सनौऽ३मिऽ२३४५ इति [illegible] ॥ २६ ॥

सूत्रत्रयमपि स्पष्टम् ॥ २४ ॥ २५ ॥ २६ ॥

एवं जागते सोमसाम्नि ऊषास्थाने दशपक्षाः दर्शिताः—

१९८७. कार्तयशे च त्रयोऽपि कल्पाः ॥ २७ ॥

*कार्तयशसाम्नि ऊषास्थाने हीति निधनमुपयन्तीति* प्रत्यक्ष-[1]ब्राह्मणम् । तस्य निधनस्य पूर्वैराचिकैः अक्षरैः सह प्रयोगकाले स्वरप्रकारे विकल्पत्रयमस्तीत्यर्थः ॥ २७ ॥

तदेव पाठेन दर्शयति—

1. ता-ब्रा-१४-५-२२ ।

१८८८ दयित्नवेऽरहंऽ३ । दयित्नवेऽरहऽ१ । दयित्नवेह्ंऽ२३४५ ॥

पुरोजिती वो अन्धसस्सुतायमादयित्नवे इत्यर्धर्चसमाप्तौ ऊपास्थाने ह इति निधनं प्रयोज्य, तस्य प्रयोगे स्वरविशेषप्रदर्शनम् । दयित्नवेऽहऽइति सूत्रकारेण क्रियत इति ॥ २८ ॥

१९८९ एवमेवोत्तरस्मिन्निधने ॥ २९ ॥

एवमेव कार्तयशस्य उत्तरस्मिन्नूपास्थाने स्वरत्रयं द्रष्टव्यं । यथा यजिह्वियाऽरहऽइति विकल्पत्रय प्रदर्शनं कर्तव्यमिति २९

## गायत्रलक्षणम्

अथ गायत्रे साम्नि यद्वक्तव्यं तद्वक्तुमारभते—

१९९० गायत्रस्य पादेन प्रस्तावस्सर्वत्र ॥ ३० ॥

गायत्रस्य सर्वत्र त्रिष्टुब्जगतीषु गायत्रीषु च गीयमानस्य पादेन प्रस्ताव कार्य इति ॥ ३० ॥

१९९१. अष्टाक्षरेणेति धानञ्जय्यः ॥ ३१ ॥

त्रिष्टुब्जगतीष्वप्यष्टाक्षरेणैवप्रस्ताव, नपादेनेति धानञ्जय्य इति ॥ ३१ ॥

तत्र प्रमाणमाह—

१९९२. तथा पुराणे ताण्डतम् ॥ ३२ ॥

पुरातन ताण्डिब्राह्मणमस्तीत्यर्थं ॥ ३२ ॥

१९९३. तस्य निदर्शनार्थं गान गायत्रीषु ३३ ॥ ३३ ॥

तस्य गायत्रस्य साम्न. सर्वासु गायत्रीषु निदर्शनार्थं कस्याश्चिदृचि गान करिष्याम इत्यर्थं । रथन्तरादिवदूहाध्ययने गायत्रस्य गानाभावादेवमुक्तम् । किं पुनस्तस्य मूलमितिचेत्

उपनिषदि सावित्र्या गायत्रस्य गान तदतिदेशश्चेतिभ्रम । यथा [1]सावित्रिगेय यत्रागीतमिति । अयमर्थः यत्र यत्र गायत्र न गीयते तत्र सर्वत्र यथा सावित्रि गेय भवेत् । सावित्र्या यथागीयते तथा गेयमित्यर्थ ॥ ३३ ।

१९९४. उपास्मै गायता नरो३मिति धानञ्जय्यः ॥ ३४ ॥

१९९५ उपास्मै गायतानरोऽ३ इति शाण्डिल्यः ॥ ३५ ॥

१९९६. उपास्मै गायतानरो इत्येके ॥ ३६ ॥

स्पष्टानि ॥ ३४, ३५, ३६ ॥

१९९७. शेषमुद्गाता ॥ ६७ ॥

प्रस्तावादूर्ध्वं गायत्रशेष उद्गातैव ब्रूयान्नान्य इत्यर्थ । कुत एतत्? हिरवनदेद्धिकुर्यात्तृतीयमित्यवनदंकर्तुरुद्गातुरेव प्रतिहारविधानात् । तथैवेडा पशुकामायनिधन कुर्यादिति एकवचनादुद्गातुरेव निधनमिति ॥ ३७ ॥

तत्र विशेषमाह—

१९९८ मनसा तु स्वभक्तिमोंकारं तथास्वरं वाचा ॥ ३८ ॥

स्वभक्तिमुद्गीथमुपद्रवच मनसा प्रयुञ्ज्यात् । तथा स्वर स्वभक्तिसदृशस्वर ओकार कृत्वा त वाचा ब्रूयात् । अनिरुक्त गेयमितिश्रुतेरिति ॥ ३८ ॥

१९९९ सर्वे वा निधनं न्यायात् ॥ ३९ ॥

## अथ द्वितीय खण्डः

इमेवंलोकागायत्रं द्व्यावृद्गेयमिति [1]ब्राह्मण, तद्व्याख्याने गायत्रगानं दर्शयति—

1 000

२००१. पावमानायेन्द्रावाऽ२इत्येकाहृम् ।. १ ॥

2 100 2

२००२ अभिदेवाऽइया इत्यपरा ॥ २ ॥

1

२००३. क्षाताइत्यपरा ॥ ३ ॥

तिस्र आवृतोमस्येति द्व्यावृत् । आवृदितिगीति खण्ड. । त्रिभि. गीतिखण्डरुपेत गायत्र गायेदिति ब्राह्मणार्थ. । त्रयोऽपि खण्डा॰ सूत्रत्रयेण दर्शिता । उत्तरयोस्तु गीतिखण्डयो. आधारभूतावार्चिकाशावुपात्तौ तयोर्गीतिमनन्तरमेव दर्शयिष्यतीति ॥ १, २, ३ ॥

द्विरवनर्देदिति ब्राह्मण व्याचष्टे—

२००४. पूर्वावापर्गाववनर्द्यौ इति धानञ्जय्यः ॥ ४ ॥

पूर्वौ आवर्गौ–गीतिखण्डाववनर्दौ–अवनर्दनीयौ अवस्वरेदित्यर्थं । खण्डयोरन्त्यमक्षर उच्चै कृत्वा नीचै. अवस्यापयेदित्यर्थ । तथैव हि सामित्या गीयते । अवनर्द्याविति कृत्यप्रत्यय. । केचित्तु लुप्तयकार पठन्ति । तत्र छान्दसोलोप. प्रमादपाठो वेति

२००५ मध्यमापामावृति द्वौ स्तोभौ कुर्याच्चावनर्द्याविति गौतमः ॥

मध्यमे गीतिखण्डे तदन्त्यस्वरसदृशौ द्वौ स्तोभौ कुर्यात् । तौ च द्विरवनर्दनीयाविति गौतम इति ॥ ५ ॥

सावेव गानेन दर्शयति—

1. ता. ब्रा. ७. १ १ ।

2 1 0 0
२००५. अग्निरेत्रोऽ३याऽ१२१२ इति ॥ ६ ॥

अत्र द्वावाकारावन्त्याक्षरसदृशौ प्रत्येकमचनदिताविति ६

२००६. सर्वत्रौकारावित्येके स्तोभधर्मत्वात् ॥ ७ ॥

सर्वास्वप्यृक्षु सावित्रीयोनिदृष्टावोकारावेव मध्यमे गीतिखण्डे स्तोभौ कुर्यात् । न पुनस्तदन्त्याक्षरसदृशाविरयर्थः । कुतः? स्तोभधर्मत्वात्, योनिदृष्टस्तोभोऽन्यत्र प्रवर्ततइति स्तोभानां धर्मोऽयं । केचित्तु सर्वत्राकारावित्येक इति पठन्ति, सतुप्रमादपाठएव । सावित्र्यामाकारयोरदर्शनात् । न च द्विरवनर्देदिति वचनादाकारयोः स्तोभधर्मत्वं, अवनर्दनमात्रविधानात् । तस्मात् सर्वत्र ओकारावित्येव पाठ. । धियो योनः प्रचो इति मध्यमावृतोऽन्त्ये ओकारयोरेव दर्शनात् । तस्मात्तद्वदेव सर्वत्र मध्यमे गीतिखण्डेतावेव स्तोभौ कार्यावित्यर्थः ॥ ७ ॥
तदेतन्निराकरोति—

२००७. यथर्चमाचार्याः तथर्क्सलिंगदृष्टान्तात् ॥ ८ ॥

मध्यमे गीतिखण्डे यदृगन्त्यमार्चिकमक्षरं तत्सदृशौ स्तोभौ कार्यौ । कुतः तथैव ऋक्सलिंगयोरार्चिकाक्षरसरूपयोरेव स्तोभयोर्योनौ दर्शनात् । तथाहि धियोयोन.प्रचो इतिमध्यमे गीतिखण्डे षष्ठस्वर ओकारोऽन्त्यः तत्सदृशावोकारावेव तत्र स्तोभौ विवक्षितौ । तत्रार्थादोकारत्वं जातम् । अतः सर्वत्रान्त्याक्षर सदृशावेव स्तोभौ कुर्यादिति ॥ ८ ॥

२००८. स्तोभानैकान्त्याच्च ॥ ९ ॥

किञ्च सावित्र्यामोकारयोर्न स्तोभैकान्त्यमस्ति । ऐकान्त्येन स्तोभाविति निश्चेतुं न शक्यावित्यर्थः । द्विरवनर्देदिति ऋगक्षर-

M

स्यैव अवनर्दन विधानोपपत्तेः न स्तोभत्वे किञ्चित् प्रमाणमिति यावत् । तेन स्तोभधर्मत्वादित्यसिद्धो हेतुरिति ॥ ९ ॥

एवं तावद्गायत्रीषु गानप्रकारो दर्शितः । अथ ज्यायसि छन्दसि कथं गानमत आह—

२००९. ज्यायसिछन्दसि प्रथमायामावृत्तिआवपेदुत्तमंपादंशिष्ट्वा ॥

ज्यायसि छन्दसि जगत्यादिषु अन्त्यं पादमवशिष्य प्रस्तावादूर्ध्वमृगक्षराणि सर्वाण्यनुद्रुत्य तदन्ते प्रथमो गीतिखण्डः कर्तव्य इति ॥ १० ॥

२०१०. अष्टाक्षरमिति धानञ्जय्यः ॥ ११ ॥

अष्टाक्षरं पादमवशेषयेत् । न पुनः अन्त्यं पादमिति । तत्रानन्तरं [1]ब्राह्मणं, हिंकुर्यात्तृतीय यत्रिरवनर्दयति तद्गायत्रं रेचयतीति । तस्यायमर्थः, द्विरवनर्दनानन्तरं तृतीयमवनर्दनरूप हिंकारं कुर्यात् । तेनैव तृतीयावनर्दनसिद्धेः तृतीये गीतिखण्डे पुनरवनर्दनं अतिरिक्तमेव । तस्मात्तृतीयोगीतिखण्ड उच्चैरेव गेय इति ॥ ११ ॥

अत्र हिंकुर्यादिति सामान्येनोक्तं तत्प्रवृत्तिविषयं तत्स्वरूपञ्च दर्शयति—

२०११. ऊर्ध्वं रेतस्यायाः द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयात् हिंऽइ आऽरइति ॥ १२ ॥

बहिष्पवमानस्य प्रथमा रेतस्या, तदूर्ध्वमुत्तरास्वेव द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयात् । कुतः? [2]षड्विंशब्राह्मणे रेतस्याया हिंकारनिषेधादिति ॥ १२ ॥

---

1. तां॰ब्रा॰ ७-१-२-१ । 2. ष॰ ब्रा॰ २. १. ४ ।

अतोऽनन्तरं ब्राह्मणं, यो वै[1] गायत्रेणाप्रतिहृतेनोद्गायतीत्यादि-समनसाध्येय इत्यन्तं हिंकारस्य मनसा ध्यानं विधत्ते, तत्राचार्याणां मतभेदं दर्शयति—

२०१२. तं रेतस्यायां प्रतिहर्ता मनसा ध्यायेत् न परास्विति गौतमः ॥

रेतस्यायामेव हिंकारं प्रतिहर्ता मनसा ध्यायेत् न परासु, कुतः, यो वै गायत्रेणाप्रतिहृतेनोद्गायतीति,प्रतिहारभक्तिलोपोमनसाध्यानस्य निमित्तत्वेनावगम्यते । भक्तिलोपश्च रेतस्यायामेव नान्यत्रेति–तत्रैवतद्ध्यानमिति गौतमो मन्यत इति ॥ १३ ॥

२०१३. परास्वेवेति धानञ्जय्य शाण्डिल्यौ ॥ १४ ॥

परास्वेव मनसा ध्यानं, न रेतस्यायां । कुतः? प्रतिहारलोपो न निमित्तं, किन्तु प्रतिहर्तुः प्रतिहारवचने प्राप्ते तं विहायोद्गातुः प्रतिहारवचनं निमित्तं । तथाहि यो वै गायत्रेण प्रतिहर्ता अप्रतिहृतेन स्वयमेव प्रतिहारं कृत्वा गायति, सोऽप्रतिष्ठितःस्यात् इति ब्राह्मणार्थः । ततश्चोद्गातुः प्रतिहारवचनमुत्तरास्वेवेति, तत्रैव ध्यानमिति धानञ्जय्य शाण्डिल्याविति ॥ १४ ॥

रथन्तरवर्णामुत्तमां गायेदिति ब्राह्मणं व्याचष्टे—

२०१४. रथन्तरवर्णायामक्षराण्यभिष्टोभेत् ॥ १५ ॥

उत्तमायां रथन्तरवर्णायामृचिप्रस्तावादूर्ध्वमक्षराणि रथन्तरस्य भक्षरैरभिष्टोभेत् । ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराणीति पूर्वमुक्तं सूत्रकारेण, शाखान्तरे दर्शनादिति ॥ १५ ॥

अभिष्टोभप्रकारमाह—

1. ता-ब्रा-७. ९. ४. १. ।

२०१५ माऽ३माऽ३इति शाण्डिल्यो, म म इति धानञ्जय्यः १६

२०१६. त्र्यक्षरंवाभिष्टोभेत् ॥ १७ ॥

चकारो धानञ्जय्यानुकर्षणार्थः । त्र्यक्षरमेवाभिष्टोभेन्न चत्वारीत्यपि धानञ्जय्यस्य पक्ष इति ॥ १६, १७ ॥

तत्र हेतुमाह—

२०१७. प्रथमं ह्यक्षरं लुप्तम् ॥ १८ ॥

सर्वत्रोद्गीथादाने प्रथमाक्षरलोपन्तु धानञ्जय्य[1] इति पूर्वमुक्त, तेनात्रापि तन्मते प्रथमाक्षरलोपात् त्र्यक्षरमेवाभिष्टोभेदिति ॥ १८ ॥

२०१८. हुंऽ३इति हिंकारः ॥ १९ ॥

रथन्तरवर्णायामाकाररहितो हिंकार स्यात् । तथा च पूर्वमुक्त आविसृष्टहिंकारेति ॥ १९ ॥

२०१९. द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि ॥ २० ॥

अभिषेचनीयस्य ब्रहिष्पवमाने रथन्तरवर्णानुष्टुप् । तस्यां द्वादशाक्षराण्यभिष्टोभेदिति ॥ २० ॥

२०२०. सर्वत्र चत्वारीति शाण्डिल्य ॥ २१ ॥

स्पष्टमेतदिति ॥ २१ ॥

अत पर खण्डशेषेण गायत्रस्य निधन विचार्यते । सर्वत्र तावच्चत्वार एव सामान्ता, स्वरो, निधन, इडा, वागिति । ऋचामन्त्यमक्षर स्वरयित्वा समापित हाइकारश्च द्वयमपि स्वर इति रूढ्याव्यपदिश्यते । स्वरवागिडाभ्योऽन्ये सामान्ताः निधनमुच्यन्ते । तेषाञ्चतुर्णां सामान्ताना इडावाचोर्गायत्रे शक्यैव

1 ब्रा सू-१८-२-२६ ।

नास्ति । अनध्ययनादनभिधानाच्च । स्वरनिधनयोरेव विचारः साविद्मामाकारनिधनस्याध्ययनात् । सर्वाणि स्वराण्याज्यानि तज्जामि, नानादेवत्यैःस्तुवन्त्यजामितायाइति [1]ब्राह्मणेऽनुवादाच्च संशयः, तत्रैकं मतमाह ॥ २१ ॥

२०२१. यथर्चंश्वान्तं ब्रूयात् क्षताइ वायु इति ॥ २२ ॥

चकारः शाण्डिल्यानुकर्षणार्थः । यथर्चमृचामन्त्योयस्स्वरं तमेव गायत्रस्यान्तं कुर्यात् । नयोनिर्दृष्टमाकारं निधनमिति शाण्डिल्य इति ॥ २२ ॥

कुत इत्याह—

२०२२. स्वाराण्याज्यानीति, स्तुत्वानिधनवतेति च नानात्वचोदनात् ॥

सर्वाणि स्वराण्याज्यानि भवन्तीति ब्राह्मणे स्वारत्वानुवादात् स्वारं गायत्र, तथा माध्यन्दिने पवमाने गायत्रेण स्तुत्वा निधनवता स्तुवीतेऽति गायत्रनिधनवतोर्भेदव्यपदेशात् न गायत्रं निधनवत् । किन्तु स्वारमेव । निधनाध्ययनन्तु प्रह्णयशार्थमिति ॥ २३ ॥

ननु च स्वाराण्याज्यानि इत्यनुवादाद्धाइकारस्वरमपि स्यात्, न यथर्चं पदानुस्वारमेवेति नियमस्तत्राह—

२०२३. पदानुस्वारमेके स्तोभाश्रुतेः ॥ २४ ॥

पदानुस्वारमेवेत्येके, स्तोभस्य ऋगक्षरवहिर्भूतस्य हाइकारस्य अश्रवणात् । स्वाराण्याज्यानीत्येतावदेव श्रूयते । तेन यथर्चं पदानुस्वारमेव गायत्रमिति ॥ २४ ॥

२०२४. बहिः स्वारं वा प्राणसामान्यादुद्गीतं हि ॥ २५ ॥

---

1. ता-ब्रा-७-२-६ ।

अथवा बहिःस्वारं गायत्रं-हाइकारः स्वरमित्यर्थः । कुतः, बार्हतं हि गायत्रं बृहत्सामपक्षनिविष्टमित्यर्थः । कुतःबार्हतत्वं ? प्राणसामान्यात् प्राणो गायत्रमिति श्रुतिर्भवति । तथा प्राणो वै बृहत् अपानो रथन्तरमिति श्रुतिः । तेन बृहद्गायत्रयोः प्राणत्वसंस्तवात् बृहत्पक्षीयं गायत्रं बृहत्सदृशमित्यर्थः । ततः किं? बहिर्निधनं बृहत्तद्वद्गायत्रमपि बहिः स्वारं युक्तमिति तथा च [1]निदानकारः यानि बहिर्निधनानि तानि बार्हतानीति ॥

अथ सिद्धान्तमतमाह—

२०२५. आकारस्त्वाचार्याः स्मृतेः ॥ २६ ॥

योनिदृष्टमाकारमेव निधनमाचार्याः । तथैव पूर्वेषां स्मृतेरिति ॥ २६ ॥

किञ्च स्वारादपि गायत्रस्य भेदेन व्यपदेशोऽस्तीत्याह—

२०२६. गायत्रं निधनवदनिधनमैडं गायत्रं पुरस्ताद्भवति स्वारमन्तत इति च नानात्वदर्शनात् ॥ २७ ॥

गायत्रंनिधनवदनिधनमैडमिति[2]ब्राह्मणे अनिधनमिति माध्यन्दिने पवमानेऽत्यस्यौशनस्य स्वारस्य गायत्राद्भेदेन व्यपदेशो भवति । तथा गायत्रं पुरस्ताद् भवति स्वारमन्तत इति च [3]ब्राह्मणे गायत्रस्वारयो र्भेदव्यपदेशः । तेन न स्वारं गायत्रमिति निश्चय इति ॥ २७ ॥

कथं तर्हि स्वाराण्याज्यानीति ब्राह्मणनिर्वाहः । तत्राह—

२०२७. स्वाराणीति स्वरितत्वाद्वा स्वरत्वाद्वा तस्य स्वरप्रधानत्वाद्वा गायत्रस्य ॥ २८ ॥

1. नि-सू-प्र-२-प्र-३ । 2. ता-ब्रा ७-३-१ । 3. ता ब्रा-७-३-२१ ।

आकारस्य स्वरितत्वात्स्वाराणीति ब्राह्मण, अथवा स्वरत्वात् स्वरो ह्याकारः। अथवा गायत्रस्य स्वरप्रधानत्वात् व्यञ्जनानि विहाय स्वरेण गानात्। ओकारस्वरेणानिरुक्त-गानात् स्वरप्राधान्यम् ॥ २८ ॥

अथ यदुक्तं बृहत्सादृश्यात् बहिःस्वारं गायत्रमिति, तथा गायत्रस्य निधनवतश्चभेदेन व्यपदेशात् स्वारं गायत्रमिति, तत्परिहरति—

२०२८. स मे च भक्तिनानात्वे ॥ २९ ॥

यावत्, प्राणो गायत्रमिति भक्तिः, गौणो वादः, स गायत्र-स्याकारनिधनत्वपक्षेऽपि समानः, सुतरामुपपन्नत एवेत्यर्थः। बहिर्निधनत्वात् तथा स्वारत्वपक्षेऽपि गायत्रस्वारयोर्नानात्व-दर्शनं समान - अनुपपन्नमेवेत्यर्थः। तेन पक्षद्वयेऽपि नानात्व दर्शनानुपपत्तेः न स्वारं गायत्रं, नापि निधनवत्। किन्तु कोटच-न्तरमेवेति सिद्धमिति। अत एव निधनवद्भिः आमहीयवादिभिः सन्निपाते जामिदोषोऽपि न भवति ॥ २९ ॥

२०२९. तं दीर्घम् ॥ ३० ॥

तमाकारनिधनं दीर्घमेव ब्रूयात्। न योनिवदवस्वरेदि-त्यर्थः। अवस्वरणेसति तस्याप्रवर्धनरूपत्वादिति। अपि तद्गायत्रं रेचयतीति [1]ब्राह्मणोक्तातिरेक प्रसङ्गः इति ॥ ३० ॥

२०३०. अवस्वरेदिति धानञ्जय्यः ॥ ३१ ॥

योन्यामवस्वरणदर्शनादिति मन्यत इति ॥ ३१ ॥

अवस्वारमेव पाठेन दर्शयति—

1. ता-ब्रा-७-१-३।

२०३१ ध्वातोऽ३आऽ३४५ इति गौतमः। ध्वाऽ३तोऽ१ वाऽ३· ४५ इत्येके ॥ ३२ ॥

ऋगन्तनिधनयोर्मध्ये वकार उपजन कर्तव्य इत्येके। न कर्तव्य इति गौतममतमिति ॥ ३२ ॥

इति एकविंशपटले द्वितीय खण्ड

अथ तृतीय. खण्ड.

२०३२ काम्यानां निधनानां किञ्चिच्चिकीर्षन्नुत्तमस्य द्व्यक्षरस्य स्थाने कुर्यादिति शाण्डिल्य ।१।

इडा पशुकामाय निधन कुर्यादिति [1]ब्राह्मण गायत्रस्य काम्यानि निधनानि विहितानि। तेषामेक कर्तुमिच्छन्नुत्तमस्य द्व्यक्षरस्य स्थान कुर्यादिति शाण्डिल्य । कुतः? तन्मते गायत्रस्य च ानुस्वारत्वादृगन्तद्व्यक्षरनिधनस्वरमिति तत्स्थाने कार्यं निधनमिति ॥ १ ॥

पक्षान्तरमाह—

२०३३ अग्निदेवाऽइयक्षताऽ१२१ इति वा सर्वां ऋचसमाप्य ॥ २

सर्वामृच समाप्य ऋगन्ते अवनर्दन कृत्वा, तत उत्तर काम्य स्यादिति (कुर्यादिति) ॥ २ ।

पक्षान्तरमाह—

२०३४. अविकारेण सर्वं गीत्वेति धानञ्जय्य. ॥ ३ ॥

अविकारेण सव निधनमपि गीत्वा तत उत्तर काम्य निधनमिति धानञ्जय्य इति ॥ ३ ॥

1 ता ब्रा-७ । ११ ।

स्वमतमिदानीमाह–

२०३५. तान्याकारस्थानेषु स्युर्निधनत्वेन हि चोद्यन्ते ॥ ४ ॥

तानि काम्यानि निधनानि आकारनिधनस्य योनि दृष्टस्य स्थाने स्युः, पशुकामाय निधनं कुर्यादिति निधनत्वेन चोदितत्वादिति ॥ ४ ॥

अथ तेषां स्वरनिर्णयं करोति—

२०३६. कृतलक्षणचोदनाच्च औत्पत्तिकस्वराणि ॥ ५ ॥

लक्षणं चिह्नं सामान्तरेषु कृतचिह्नानामवगतस्वरूपाणां इडादीनामिह काम्यत्वेन चोदनात्तत्र तत्र उत्पत्तावगतस्वराण्येवात्रापि स्युः, न पुनरन्यानि स्वराणीत्यर्थः ॥ ५ ॥

पक्षान्तरमाह—

२०३७. एकाक्षरं द्व्यक्षरं द्व्यक्षरं ह्रीपीस्वरमिति सान्याय्यात् ६

यौधाजयस्य साम्नो योन्यां अग्न आयूंषि पवस इत्यस्यां ऋचि इळा कारस्य यः स्वरः तत्स्वरसदृशमेकाक्षरस्वरं काम्यं निधनं स्यात्। द्व्यक्षरं काम्यं निधनं ह्रीपीस्वरसदृशं स्यात्। तथैव प्रायेण दर्शनादिति ॥ ६ ॥

अथ सिद्धान्तमाह—

२०३८. कृतस्वरन्तु निधनं तस्य चोद्यते वर्णविकारः ॥ ७ ॥

साविर्त्रायोन्यां कृतस्वरं अवगतस्वरमेवनिधनं आकारस्य केवलमिडा पशुकामाय निधनमिति वर्णविकारश्चोद्यते न स्वरविकारः। तेन स्वानि स्वराण्येव स्युरिति ॥ ७ ॥

तत्र दृष्टान्तमाह—

61

२०३९. यथा रथन्तरस्य गायत्र्यः ॥ ८ ॥

यथा वामदेव्यस्यर्क्षु रथन्तरगायतीति रथन्तरस्य योनि-दर्णविकारएव चोद्यते । न गीतिविकार, तद्वदिति ॥ ८ ॥

२०४०. तानि सर्वत्रस्युः अनारभ्योत्पत्तिकत्वाद्गायत्रस्य ॥ ९ ॥

स्तोत्रविशेषमनारभ्य उत्पत्तिर्येषामिति बहुव्रीहिः । तानि काम्यानि निधनानि, तत्तः कामनाया काममानानां सर्वत्र, स्यु - नकेवलवहिष्पवमाने, कुत? स्तोत्रविशेषमनारभ्य गायत्रस्य निधनोत्पत्तेरिति ॥ ९ ॥

मतान्तरमाह—

२०४१. बहिष्पवमान इत्येके ॥ १० ॥ स्पष्टम् ॥ १० ॥

तत्र हेतुमाह-

२०४२ तद्विकारा नातिक्रामन्ति यथा रैवत्या रथन्तरवर्णे धुराश्च सामान्ता इति ॥ ११ ॥

तत्, बहिष्पवमाने सर्वेऽपि गायत्रविकारा नातिक्रामन्ति-तत्रैव निविशन्ते । यथा रैवत्या रथन्तरवर्णे धुरा निधनानि च तद्वदेव काम्यान्यपि तत्रैव निविशन्त इति ॥ ११ ॥

तदिद निराकरोति-

२०४३. बहिष्पवमानसंयोगस्तु तेषां न कामसंयोगः ॥ १२ ॥

तेषां रैवत्यादीनां वहिष्पवमानेनैव सम्बन्धो, न फलेन । काम्यनिधनानां तु फलेन संयोगात् फलार्थिना सर्वत्र प्रयोज्यानि न बहिष्पवमानएवेति सिद्धमिति । एवं गायत्रस्य गीति र्दर्शिता ॥ १२ ॥

अथ षड्विंशब्राह्मणे[1] यस्य धुरोमीयन्त इत्यादिना धूर्गानविहित का पुन धुरोनाम, अत आह -

२०४४ गीतिविकारो गायत्रस्य धुर ॥ १३ ॥

गायत्रस्य गीतेरेव केचन विकारा धुर इत्युच्यन्ते ॥ १३ ॥

तासां प्रवृत्तिस्थान दर्शयति --

२०४५ स्तोत्रीयानुरूपयोर्ज्योतिष्टोमस्यैवाऽऽज्येषु च नान्यत्र १४

सर्वत्र प्रकृतिभूतस्य अग्निष्टोमस्य बहिष्पवमाने प्रथम-द्वितीययोस्तृचयोः आज्यस्तोत्रेषु च धुर कुर्यात् । नान्यत्र विकृतिषु, नापि स्तोत्रान्तरेषु इत्यर्थं ॥ १४ ॥

तानेव विकारान् दर्शयति---

२०४६ रेतस्यायास्त्रिरु[2]द्गृह्णातीति ब्राह्मणं भवति । पाऽ२या।ऽ२

मा ना येन्द्रा नाऽ२इ इति ॥ १५ ॥

रेतस्या नाम प्रथमाधूरुच्यत इति - तदन्वयादृगपि तथैवोच्यत इति ॥ १५ ॥

२०४७. गायत्र्युत्तरा ॥ १६ ॥

उत्तरा द्वितीया धूर्गायत्रीति विद्यादिति ॥ १६ ॥

२०४८ [3]तस्याद्ये अक्षरे सशयनीभ्यतिषजतीति ब्राह्मणं भवति ॥

२०४९. मध्यमस्य च पदस्योत्तम उत्तमस्य च प्रथमम् ॥ १८ ॥

सह शयाते इति सशयनी इति ॥ १७, १८ ॥

व्यतिषङ्गमेव मानेन दर्शयति---

1. षड्विं ब्रा-२-२-३ । 2 षड्विं-ब्रा-२-१ २ । 3 षड्विं-ब्रा २ १ ५।

२०५०. आथर्वणो अग्नियादेऽ२ । पुर्वन्देयापदाऽ१२१२ इति ॥
२०५१. त्रिष्टुबुत्तरा ॥ २० ॥

तृतीया द्यू त्रिष्टुबिति ज्ञेयेति ॥ १९, २० ॥

२०५२. [1]तां बलवद्विरोरसेव गायतीति ब्राह्मणं भवति । आऽ२ज्ञाऽ२नाऽ२ यज्ञमर्वा ताइ । अंऽराजाऽ१नोऽ२ । थाथाऽ१-२१२ इति ॥ २१ ॥
२०५३. [2]तस्या द्वे उत्तमायेऽक्षरे द्योतयतीति ब्राह्मणं भवति २२

तदेव ब्राह्मण मतभेदेन व्याचष्टे ॥ २१, २२ ॥

२०५४. ये ऊर्ध्वे हिंकाराचे निर्ब्रूयादिति गौतमः ॥ २३ ॥
२०५५. पाथा इति धानञ्जय्यः ॥ २४ ॥

हिंकारादूर्ध्वं अक्षरद्वय निरुक्त गायेदित्येक मत । हिंकारात्पूर्वं अक्षरद्वय निरुक्त गेयमिति मतान्तरमिति ॥ २४ ॥

२०५६. जगत्युत्तरा [3]तस्याश्चत्वारि चत्वारि अक्षराणि नि क्रीडन्निव गायत्याद्वादशभ्योऽक्षरेभ्य इति ब्राह्मण भवति । पारिष्टोभाऽ२न्ताणा कृपाऽ२ । सोमाःशुक्राऽ२ः । गाथाऽ१२१२ इति ॥ १५ ॥
२०५७. तस्याश्च[4]त्वार्युत्तमायेऽक्षराणि द्योतयतीति ब्राह्मणं भवति २६

तदेव ब्राह्मण पूर्ववन्मतभेदेन व्याचष्टे—

२०५८. द्वे पुरस्ताद्धिंकारस्योपरिष्टादिति गौतम ॥ २७ ॥
२०५९. सोमाः शुक्राः इति धानञ्जय्यः ॥ २८ ॥

सूत्रद्वय स्पष्टमिति ॥ २७, २८ ॥

इति तृतीय खण्ड

---

1 पंविंश-ब्रा-२-१-१२ । 2 पंविंश-ब्रा-२-१-१३ ।
3 पंविंश ब्रा-२-१-१७ । 4 पंविंश ब्रा-२-१-१९ ।

अथ चतुर्थः खण्डः

२०६०. अनुष्टुबुत्तरा ॥ १ ॥

पञ्चमी धूः अनुष्टुबिति विज्ञेयेति ॥ १ ॥

२०६१. [1]तां निरुद्धेवि गायतीति ब्राह्मणं भवति, आयाजं वाज्य-क्रमीऽ१२१२त्। सीदन्तो वाऽ१२१२। तुषाऽ१२१२ इति॥

तां चतुर्धा व्यावृत्य गायेदिति वचनात् चतु. खण्डा पञ्चमी कार्या। हिंकारादूर्ध्वमेक खण्ड, त्रय पूर्वे खण्डाः। तिष्वपि खण्डेष्वन्त्यमक्षरं निनर्देदिति ब्राह्मणार्थ.। तथैव गानं दर्शितमिति ॥ २ ॥

२०६२. [2]निरुक्तश्चानिरुक्तश्च गायतीति ब्राह्मण भवतीति ॥ ३ ॥

२०६३. समस्तानामक्षरं धुरां मन्यन्त इति गौतमः त्रिष्टुब्जगत्यो र्क्षराणिनिराहेति ॥ ४ ॥

निरुक्तश्चानिरुक्तश्च गायति, इति ब्राह्मण समस्तानां धुरां साधारणं। न केवल पञ्चम्या इति गौतम। कुत.? त्रिष्टु-ब्जगत्यो. पूर्वं, निरुक्तविधानात् न विशेषत पञ्चम्यां विधानं युक्तं। तेन यां कांश्चिदपिधुरं निरुक्तामनिरुक्तां च गायेदिति ब्राह्मणार्थः। ततश्च रेतस्यादिष्वप्येकदेशो निरुक्त गेय इति गौतमस्य पक्ष इति ॥ ३, ४ ॥

मतान्तरमाह—

२०६४. एतस्या एवेति धानञ्जय्यशाण्डिल्यौ ॥ ५ ॥

एतस्याः पञ्चम्या एव धुर एतद्ब्राह्मणं, तां प्रस्तुत्य

1. पंचविंश-ब्रा-२-१-२३। 2. पंचविंश-ब्रा-२-१-२४।

विधानात् । ननु विशेषेण तत्र विधानमनुपपन्नं, त्रिष्टुब्जगत्योरपि निरुक्तत्वादित्युक्तम् । सत्यं अयं तु वचनार्थं । पञ्चम्याश्च-त्वारो गीतिखण्डाः । तान् क्रमेण निरुक्तमनिरुक्तमित्येवं व्यत्यासं गायेदिति ॥ ५ ॥

२०६५ तस्या द्वितीयं पादं द्विः निर्ब्रूयात्तृतीये चाक्षरे पञ्चमषष्ठे ॥

द्वितीयं पादं निरुक्तं गायेत् । तृतीये पादे प्रथमं चतुरक्षरं अनिरुक्तं पुनः पञ्चमषष्ठे अक्षरे निरुक्ते, हिंकारादूर्ध्वं पुनरप्य निरुक्तं इत्येवं व्यत्यासं इति ॥ ६ ॥

२०६६ पङ्क्तिरुक्ता [1]अस्या द्वे द्वे अक्षरे उदासं तायस्यापद्भ्योऽ-ध्वोरेभ्य इति ब्राह्मणं भवति सङ्गाभाऽ१ नोऽ२ । दाऽ३१-भाऽ१ऽकाषाऽ३६, इति धानञ्जय्यः ॥ ७ ॥

२०६७ क वाऽ३ इति शाण्डिल्य ॥ ८ ॥

सूत्रद्वयमपि स्पष्टम् ॥ ७, ८ ॥

इदानीं धुरो निधनानि विधत्ते—

२०६८. [2]सदिति रेतस्याया धुरो निधनं समिति गायत्र्याः, स्वरिति त्रिष्टुभः, इडेति जगत्याः, वागित्यनुष्टुभः ॥९॥

तेषां निधनानां काम्यैर्गायत्रनिधनैः समानं स्वरनिर्णय इत्याह ॥ ९ ॥

२०६९. तेषां उक्तोन्यायः काम्यैः सामान्ते ॥ १० ॥

तत्रैव सर्वत्रापि निधनानि स्युः, नेत्याह—

२०७० न तूर्ष्णीं बहिष्पवमानात्स्युः ॥ ११ ॥

1 परिश ब्रा-२-१ २९ । 2 परिश ब्रा २-२-१४ to १८ ।

बहिष्पवमाने एव तेषां निवेशो, न पुनः आज्यस्तोत्रेष्वित्यर्थः ॥ ११ ॥

अथाऽऽज्येषु धूर्विधायकब्राह्मणं [1]यस्य वै धुरो विगीताः तस्य संगीता इत्यादि । तस्यायमर्थः- यस्य धुरा विगानं कृतं तस्य ताः संगीता अविकार्या इति ॥ तत्स्वयमेव व्याचष्टे ॥ यस्य वै बहिष्पवमान इत्यादि तस्यायमर्थः । यस्य बहिः सदसो बहिष्पवमाने पृथक् पृथङ् निधनैः धुरो गीतास्तास्सदसोऽन्तराऽऽज्येष्वेकेनैव निधनेन प्राकृतेन समानं गायति । तस्य विगानं सङ्गानञ्चोभयमपि कृतं भवति । उभयमप्यवश्यकार्यमेव । कुतः? धुरात्वक्षुः [2]श्रोत्रादिरूपत्वेन संस्तवाच्चक्षुरादीनाञ्च बहिर्मुखे पृथक् पृथगवस्थितानामन्तर्मुखे नाड्यामेकस्यां संहृत्य मूलतोऽवस्थानात्तेनोभयमवश्यकार्यम् । तत्र आज्येषु चतस्र एव धुरः संगेयाः रेतस्यापङ्‌तिवर्जम् । कुत एतत्? [3]सुरभिरेव गन्धो गायत्र्याश्रतं दर्शनीयं त्रिष्टुबित्यादौ पूर्वस्मिन् ब्राह्मणे चतसृणामेव विशेषसन्निधेस्तासामेव यस्य वा एता विगीते(ये)ति सर्वनाम्ना परामर्शात् । ताश्च होतुराज्ये संगायेद्यथाऽऽज्यं संगायतीति प्रकारद्वयं विहितम् । तयोर्विकल्पः । कुतः? तावा एता देवलोकाय युज्यन्ते यत्पराच्यः प्रतीच्यो मनुष्यलोकायेति । बहिष्पवमाने धुरां पराचीत्वमानुलोम्यमाज्येषु च प्रतीचीत्वे प्रातिलोम्यं चतसृणां दर्शयति । तत्र प्रातिलोम्ये शाखान्तराद्विशेषं दर्शयन् प्रयोगप्रकारमाह सूत्रकारः—

२०७१. जगतीगायत्र्यौ त्रिष्टुबनुष्टुभाविति पृथगाज्यमासु गायेत् ॥

1. षड्वि-ब्रा-२-३-११ । 2. षड्वि-ब्रा-२-३-१४ । 3. षड्वि-ब्रा-२-३-९ ।

जगत्यादीना चतस्रो धुर चतुर्ष्वाज्येषु क्रमेण तत्तत्प्रथमासु सकृत्सकृद्गायेदिति ॥ १२ ॥

२०७२. तत्पुराणं यथाऽऽज्यस्थानम् ॥ १३ ॥

पुराण चिरन्तनब्राह्मणोक्त शाखान्तरीयमित्यर्थ ॥ १३॥

२०७३ गायत्रीत्रिष्टुभोः व्यतिक्रम धानञ्जय्यः ॥ १४ ॥

गायत्रीत्रिष्टुभो धुरो स्थानव्यतिहार कुर्यादिति धानञ्जय्य । द्वितीयाज्यस्य प्रथमाया त्रिष्टुप्, तृतीयाज्यस्य प्रथमायां गायत्रीति मानदिति ॥ १४ ॥

२०७४ गायत्रीं मैत्रावरुणस्याऽऽज्य प्रथमायां होतुरितरा आदितः ॥ तासामेव चतसृणा धुरा मध्ये गायत्रीमैत्रावरुणस्याऽऽज्यप्रथमाया सकृत् ब्रूयात् । इतरास्तिस्रः होतुराज्यप्रथमाया स्तोत्रोपक्रमे सकृद्गायेदिति ॥ १५ ॥

२०७५. तत्पुराणं होतुराज्यस्थानम् ॥ १६ ॥ व्याख्यातमेतदिति ॥ तत्रैव मतान्तरमाह—

२०७६. त्रिष्टुभमुत्तरां गायत्रीं गीत्वा तस्या एव द्वितीयायामनुष्टुभ गायेदिति धानञ्जय्यो गायेदिति धानञ्जय्यः ॥

होतुराज्यप्रथमायां जगती त्रिष्टुभी गीत्वा त्रिष्टुभमुत्तरां गायत्री गीत्वा तस्या एवोत्तरामनुष्टुभ द्वितीयां ऋचि गायेदिति ॥ १७ ॥

एकविंशः पटले चतुर्थः खण्ड

इति छन्दोगसूत्रस्य तृतीये दशके सुधी ।
प्रथम पटल व्याख्यात् धन्वी श्रुत्यनुसारत ॥

॥ एकविंश पटल समाप्त ॥



श्रीशिवाभ्यां नमः

## ॥ कल्पकारिका [क्रतुप्रायश्चित्तकारिका] ॥

गणपं शङ्करं नत्वा कल्पकारमतः परम् ।
प्रायश्चितानि वक्ष्येऽहं कर्मवैगुण्य शान्तये ॥ १ ॥
गाङ्गादि परिसाम्नाञ्चेत् प्रस्तोता स्खलितो यदि ।
पुनर्गीत्वा तदाज्येन महाव्याहृतिभिर्हुनेत् ॥ २ ॥
इष्टयङ्गसाम्नां भ्रेषश्चेत् विशेषोऽत्र प्रकल्प्यते ।
विष्णवर्चमुक्त्वा प्रस्तोता जुहुयात् सर्पिषाऽऽहुतिम् ॥ ३ ॥
प्रवर्ग्योद्वासनात्पूर्वं प्रायश्चित्तानि यानि च ।
प्राग्वंशे तानि सर्वाणि कुर्यादाहवनीयके ॥ ४ ॥
प्रवर्ग्योद्वासनादूर्ध्वं प्रायश्चित्तक्रियांबुधः ।
वह्नावुत्तर वेद्यांत्र प्रकुर्यात्स्रुवसर्पिषा ॥ ५ ॥
यजुर्मन्त्रास्तु ये लुप्ताः प्रमादाद्यदि तान्पुनः ।
ऊद्गातारो जपित्वाऽथ जपेयुर्व्याहृतित्रयम् ॥ ६ ॥
आप्यायने निह्नवने यद्यप्यन्तरिते पुरा ।
सुब्रह्मण्यात्पुनः कुर्युः तदूर्ध्वं तज्जपःस्मृतः ॥ ७ ॥
गायत्र्याः पादविन्यासैः मधुपर्को भवेद्यदि ।
उद्गातातु पुनः कुर्यात् व्याहरेत् व्याहृतित्रयम् ॥ ८ ॥
देवता व्यत्ययेलोकद्वारसामसु सर्वतः ।
भ्रेषे च (दोषेषु) कुर्यात्सर्वत्र प्रायश्चित्तंविचक्षणः ॥ ९ ॥
सर्वप्रायश्चित्तमिति समस्तन्ताहुतिःस्मृता ।
आदौत्र प्रणवंकृत्वा भूर्भुवस्वरिति स्फुटम् ॥ १० ॥

अभूद्युपेति समये वेद्याक्रमणमुच्यते ।
अकृत यदि तत्कुर्यात् (र्युः) जपेयुः व्याहृतीः पुन. ॥ ११ ॥
पुरा यदि प्रमादेन हविर्धानप्रवेशनम् ।
प्राग्वसतीवरीभ्रश्चेत् प्रायश्चित्त ततः स्मृतम् ॥ १२ ॥
तस्मिन्नेव नयस्ते तु महाव्याहृति चिन्तनम् ।
कुर्युस्तद्दोपशान्त्यर्थं पश्यन्तो वसतीवरी· ॥ १३ ॥
अकृत्वा स्पर्शन राज्ञ प्रवेशो यदिका भवेत् ।
शकटस्योत्तर प्राप्य स्पर्शयुस्ते समन्तकम् ॥ १४ ॥
सव्यावृतमकृत्वा तु यदि वेद्यु(चेद्रु)पवेशनम् ।
पुनः सव्यावृत कृत्वा त्रयाणामुपवेशनम् ॥ ॥ १५ ॥
न बहिष्पवमानस्य पुरस्तादृग्जपो यदि ।
उद्गातुर्वैष्णवो होमः पूर्वदेशे तु तज्जपः ॥ १६ ॥
एकहस्तेन कुर्याच्चेत् कलशाभ्यूहनं यदि ।
स्पृशेद्धस्तद्वयेनैव 1पित्वा व्याहृतित्रयम् ॥ १८ ॥
सम्मार्जनप्रोहणेद्वे नैवकुर्यात्सदःस्थले ।
कुर्याच्चेत् पाणिपादौच प्रक्षाल्य व्याहृतीर्हुनेत् ॥ १८ ॥
सम्मार्जनप्रोहण्यो. व्यत्ययो भवतो यदि ।
तदा कुर्यात् क्रमेणैव व्याहृतित्रयमीरयेत् ॥ १९ ॥
पवित्रप्रासन त्यक्त्वा कलश मार्जयेद्यदि ।
गायत्रीमन्त्रमुच्चार्य मृदा प्रासनमाचरेत् ॥ २० ॥
यज्ञसमार्जन द्रोणकलशस्य प्रमादत ।
पुनस्सम्मार्जन कुर्यात् ऋचमुक्त्वातु वैष्णवीम् ॥ २१ ॥

राजन्यभिषुते यानि कर्माणि व्यत्य(यानि)येन वै ।
उच्चार्य तु समस्तान्त श्रेये कुर्याद्घृताहुतिम् ॥ २२ ॥
प्रवरास्तुनिवर्तेरन् व्रयाणाञ्च मिथस्तदा ।
तत्प्रत्यवायशान्त्यर्थं प्रायश्चित्तं यथाक्रमम् ॥ २३ ॥
प्रस्तोता चिन्तयेदग्निमग्निद्रुतमितीरयन् ।
यथादोंकारमुद्गाता ध्यायेच्चापि बृहस्पतिम् ॥ २४ ॥
प्रतिहर्ता जपित्वा च व्याहृतित्रयमात्मनि ।
वायुं ध्यायेदिति प्रोक्तं प्रायश्चित्तं क्रमेण च ॥ २५ ॥
यत्र यत्र न कुर्वन्ति वाचो नियममध्वरे ।
तत्र तत्र जपेयुस्ते ऋङ्मन्त्रं विष्णुदैवतम् ॥ २६ ॥
अन्वारम्भणविच्छेदः प्रस्तोतुर्यदिसर्पणे ।
ब्रह्मणे च वरं दत्वा पुनर्यज्ञं समाचरेत् ॥ २७ ॥
उद्गातुर्यदि विच्छेदः प्रायश्चित्तं तदा स्मृतम् ।
अदक्षिणेन तं यज्ञ पुनःकुर्यात्समाहितः॥ २८ ॥
प्रतिहर्तुरवच्छेदे दत्वा सर्वस्व दक्षिणाम् ।
यागं कुर्यात् पुनश्चैव उत्तरे सवनद्वये । २९ ॥
ऋत्व्यत्ययेन प्रस्तोता, बहिस्तोत्रे करोति चेत् ।
आभिगीभिरिमं मन्त्रं प्रस्तोतोक्त्वा हुनेद्घृतम् ॥ ३० ॥
उद्गातुरप्येवमेतत् स्खलनेषु विधीयते ।
चात्वालदर्शनादीनां लोपेव्याहृति कीर्तनम् ॥ ३१ ॥
प्रमादादपि लोपःस्याद्यदि प्रवृत्तहोमयोः ।
स्रुवेण घृतमादाय समस्तान्तं समाचरेत् ॥ ३२ ॥

सर्वस्तोत्रेष्वन्तरित पुरस्तादृग्जपो यदि ।
महाव्याहृतिभिश्चर्चं द्वयेन जुहुयाद्घृतम् ॥ ३३ ॥
देवतानामुपस्थाने सवनेष्वपि कुण्ठिते ।
प्रायश्चित्तविशेषोऽस्ति तत्स्वरूपं प्रकाश्यते ॥ ३४ ॥
सर्वैःप्रातरुपस्थानं समस्ताभ्याहुतिक्रिया ।
तद्देवताध्यानमात्रं अन्यत्रसवनद्वये ॥ ३५ ॥
सर्वत्रसञ्चरभ्रेषे तत्तत्सञ्चारभूमिषु ।
सञ्चरेयुर्यज्ञराश्चतेतिमन्त्रमुदीर्य च ॥ ३६ ॥
प्रागवच्छादनान्मुञ्चेत् खातामौदुम्बरीं न च ।
यदि मुञ्चेत्तदा कुर्यात् प्रायश्चित्तं च तत्कथम् ॥ ३७ ॥
घृतानेत्यादि मन्त्रादि प्रत्येकं त्रिस्त्रिरभ्यसेत् ।
व्यस्ताश्च समस्तान्त होमं कुर्याद्विचक्षणः ॥ ३८ ॥
औदुम्बरीं नमस्कृत्य भक्त्या नमितकन्धरः ।
गायत्रीश्च जपेत् पश्चात् प्रायश्चित्तमितीदृशम् ॥ ३९ ॥
(मन्त्रप्रवेशने) मन्त्रोपवेशने लुप्ते मदस्युद्गातृभिस्तदा ।
तं सूक्तं मन्त्रमुच्चार्य जप्त्वा तु व्याहृतित्रयम् ॥ ४० ॥
अन्योन्योपह्वं तत्र न कुर्वन्ति सह स्थले ।
तदा पुनरुपह्वानं सम्यक् कुर्युः परस्परम् ॥ ४१ ॥
सवनादौ यदोद्गाता स्वाहुते चमसे यदि ।
अवाचयित्वाऽग्निर्मेति चमसं भक्षयेद्यदि ॥ ४२ ॥
प्रायश्चित्तं तदा ज्ञेयं एवं तद्भक्षणे बुधैः ।
आभिर्गीर्भिस्तु होमःस्यात् एवमुत्तरयो क्रिया ॥ ४३ ॥

इडाकाले निधायाङ्के चमसं यदि तिष्ठति ।
महाव्याहृतिमन्त्रेण प्रस्तोता जपमाचरेत् ॥ ४४ ॥

असर्वभक्षं चमसं(भक्षाश्चमसान्) निःशेष भक्षयन्ति चेत् ।
आप्यायस्वेति चमसे क्षिपेयुः वसतीवरीः ॥ ४५ ॥

ततो हुत्वा समस्तान्त मन्त्रवद्भक्षणं पुनः ।
कुर्युः सशेषं चमसं इति प्रोक्त मुपण्डितैः ॥ ४६ ॥

चमसे भक्षणात्प्राक् चेत् केशकीटादि दूषणम् ।
ब्रह्मणे यजमानाय दूषण तन्निवेदयेत् ॥ ४७ ॥

प्रायश्चित्ताभ्यनुज्ञान ताभ्यामादाय कुर्विति ।
प्रस्तोतृहस्त आदाय (हस्तादादाय) उद्गाता चमसं ततः ॥

तत्रस्थ सोम सदसो बहिरङ्गुलिमात्रके ।
निम्ने निनीय कुर्वीत महाव्याहृति चिन्तनम् । ४९ ॥

तत्र स्वर्णजल कृत्वा भक्षयेयुरमन्त्रकम् ।
इत्येव गदित सर्वचमसेष्वप्यय विधिः ॥ ५० ॥

यदि मन्त्रव्यत्ययेन भक्षयेच्चमस तत ।
तन्मन्त्रं पुनरुच्चार्य वैष्णवं होममाचरेत् ॥ ५१ ॥

चमसाप्यायने लोपो यद्यादिसवने भवेत् ॥
महाव्याहृतिभिर्होमं आप्यायस्वेति वा ऋचा ॥ ५२ ॥

माध्यन्दिने विशेषःस्यात् होमः सन्तेपयेत्यृचा ।
आप्यायस्वेति तार्तीये द्विरुक्त्वा होम उच्यते ॥ ५३ ॥

स्वरादि हानि. मन्त्राणा यत्र यत्राध्वरे भवेत् ।
हवनं तत्र तत्रैव महाव्याहृतिपूर्वकम् ॥ ५४ ॥

ताम्बूलचर्वणादीनि न कुर्यात् सदस स्थले ।
कुर्याच्चेत् पाणिपादौ च प्रक्षाल्य व्याहृतीर्जपेत् ॥ ७७ ॥
ग्रहावेक्षणमुद्गाता यदि चेत् षोडशीग्रहे ।
न करोति तदा कुर्यात् तृतीय सवनेऽपि वा ॥ ७८ ॥
ऋषिच्छन्दो देवतानां उद्गीतोपासनस्य च ।
व्यत्यये स्तोमयोगस्य विष्णुव्याहृतिहोमकौ ॥ ७९ ॥
पृष्ठहोमे सति श्रेय प्रस्तोता प्रजपत्तदा ।
तन्मन्त्र पण्डितःसर्वं प्रायश्चित्ताहुतिं चरेत् ॥ ८० ॥
उक्तोवा स्वल्पकालेन कथ वृद्धं पुरादृत ।
प्रायश्चित्तगणस्त्वेष शङ्कास्याद्यदि शङ्किते ॥ ८२ ॥
एतच्छङ्का निरासार्थं सम्यक् प्रत्युत्तर मया ।
ग्रन्थान्तरे(तु)पुयत्प्रोक्त पुराविद्भिस्तदुच्यते ॥ ८३ ॥
प्रायश्चित्तमिति श्रेय ऽप्यतापि सर्वकर्मणाम् ।
अवादीद्गौतमो यस्मात् तस्मादुक्त मयापि च ॥ ८३ ॥
सर्वत्र मन्त्रलोपे तु विष्णुर्वाहुतिरिष्यताम् ।
जमादशाट्यायनोपि तस्मात्सर्वत्र सा स्मृता ॥ ८४ ॥
स्तोमस्तोत्रव्यत्ययोऽस्ति यत्रयत्राहुतिक्रिया ।
आभिर्गीभिस्तु मन्त्रेण शाण्डिल्यवचन यत. ॥ ८५ ॥
स्तोमशब्देन चावृत्ति स्तोत्रमित्युच्यते बुधैः ।
पवमानमितिप्रोक्त स्तोत्रशब्देन चान वै ॥८६ ॥
मन्त्राणा यजुषां लोपे महाव्याहृति चिन्तनम् ।
कर्तव्यमिति सर्वत्र धानञ्जप्यो यतोऽब्रवीत् ॥ ८७ ॥

केशादिदूषिते सोमे त त्यक्त्वा हेमवारिणा ।
धानञ्जय्यश्च शाण्डिल्य ऊचतु पूरयेदिति । ८८ ॥
मृत्पात्रेषु प्रभिन्नेषु स्पृष्ट्वा त भिन्नमध्वरे ।
*भिद्यतामिति मन्त्रान्तो भूमिरित्यादिकोजप ॥ ८९ ॥
विशेषस्तु महावीरे यन्मृतेत्यादिक जपेत् ।
+माभेमन्त्र मयेहीत्यन्त मुद्गालु-त्रयो ॥ ९० ॥
यद्यत्र उल्वण गच्छन्निनयेत्सलिल तदा ।
ययोरोजसेत्यमुना मन्त्रेण स्वाहया सह ॥ ९१ ॥
*यजमानो नष्टचेता क्रतौ स्कन्ने(न्न)घृतादिके ।*
भवेत्तद्दोषशान्त्यर्थं वर दद्यात्मन्त्रत्विजाम् ॥ ९२ ॥
वरदानात्ततोहोम समस्तान्तेन सजपेत् ।
प्रायश्चित्त तदेव स्यादिति गौतम सम्मति ॥ ९३ ॥
स्कन्नाद्वाप्यथवाभिन्नात् यदि दोपस्तु सभवेत् ।
धानञ्जय्योऽब्रवीत् प्रायश्चित्त तदिति नान्यथा ॥ ९४ ॥

---

*(अथ मन्त्र प्रदृश्यते भूमिर्भूमिमगान्माता
मातरमप्यगात् भूयास्म पुत्रै पशुभिर्योऽस्मान्
द्वेष्टि स भिद्यतामिति । पड्विंशे)

(अथ मन्त्रः प्रदृश्यते—यन्मृते चिदभिश्रिष पुराजत्रुभ्य
आदृत । सन्धाता सन्धिम्मघवा पुरूवसुर्निष्कर्ता विह्रुत
पुन. । माभेमनिष्याइवेन्द्रत्वदरुणाइववनानिन प्रजहितानि)

+मामेरिष्मा इषेद्रत्वणा इव । वनानि न प्रजहितान्यद्रिवो दूरोषा सोम
महोत्तदाशवोनुहाम्यस्मा पृवहन् सकृत पुनेम्ह्यारसायसानुस्मोमम्पदेमहीति ॥
(एवमेव पुस्तकान्तरेऽपि दृश्यते)

यद्यत् स्वाहाकृतं द्रव्यं पतेच्चेत् भूतले द्रवेत् ।
जपेत्तत्पात्रमालभ्य देवान्दिवमितित्रिभिः ॥ ९५ ॥

इति तत्पात्रमालभ्य प्रजपेद्द्रष्णवीमृचम् ।
एकत्र प्रायश्चित्तमिति कथितं ब्रह्मवित्तमैः ॥ ९६ ॥

अज्ञातं यदि न ज्ञातं यदिकर्मभवेत्तदा
अपिवाऽज्ञातमित्ये(व)व मन्त्रहोमस्तयोःस्मृत. ॥ ९७ ॥

औदुंबरी पतेत् भूमौ यद्यपि प्रोच्छ्रिता तदा ।
प्रायश्चित्तं प्रकर्तव्यं तद्विधिः प्रोच्यते मया ॥ ९८ ॥

अथ तत्पतनं चेत्स्यात् प्राक्बहिस्तोत्रकर्मणः ।
त्रिभिर्युवानमुख्यैस्तां पुनर्मन्त्रै समुच्छ्रयेत् ॥ ९९ ॥

तदूर्ध्वं चेत्पुनस्तुत्वा बाह्यस्तवनमादितः ।
तन्मन्त्रैरुच्छ्रयित्वाता समस्तान्ताहुतिं यजेत् ॥ १०० ॥

पतत्याज्यस्तुतेरूर्ध्वं ता मन्त्रैरुच्छ्रयेत् पुनः ।
एवमौदुंबरी पातप्रायश्चित्तमुदाहृतम् ॥ १०१ ॥

पुनश्चोत्थापयित्वा तं यूपेप्यवनिशायिनि ।
त्रयो जपेयुर्युगपत् कर्म(त्वात्)त्वं तस्यमन्त्रकम् ॥ १०२॥

यदिसोमोऽतिरिक्त. स्यात् प्रातःसवनतस्तदा ।
मरुत्वतीपुगायत्रं अस्ति सोमेति सस्तुयुः ॥ १०३ ॥

तत्पञ्चमं विधायाज्यं त्रिवृत्पञ्चदशे क्रमात् ।
मध्यन्दिने तु कर्तव्ये ब्रह्माच्छावाक सामनी ॥ १०४ ॥

यदि मध्यान्दिने सोमो याति चेदतिरेकताम् ।
स्तुयुर्गौरीवितेनादित्यवतीष्विति ऋण्महान् ॥ १०५ ॥

तत्कृत्वा पञ्चमं पृष्ठं(त्पष्ठं) तृतीये सवने स्तुयुः ।
आर्भवस्य पदे साम्नां स्थाने च त्रिवृताद्वयम् ।। १०६ ॥

सफं परिप्रधन्वेति प्रथमं सामचार्भवे(व) ।
पर्यूष्विति द्वितीयं स्यात् श्यावाश्वार्भवमुच्यते ॥ १०७ ॥

पवस्व सोम महान् समुद्रेति तृतीयकम् ।
आन्धीगवमिति प्रोक्तं इति सामत्रयं बुधैः ॥ १०८ ॥

सोमातिरेकसवनात् तृतीयस्त्रियृता स्तुयुः ।
क्रिमित्तेति बृहत्तत्र शिपिविष्टवतोज्वलम् ॥ १०९ ॥

सोमेधिके सति प्रात. सवने ह्रासयेत्तदा ।
मध्यन्दिने पृष्ठगाने तेन सत्संपतिष्यते ॥ ११० ॥

एवमेवान्ययोः कुर्युः स्तोत्रसाफल्यसंपदम् ।
शेषं प्रकृतिवत्कर्म सवनेषु त्रिपूच्यते ॥ १११ ॥

हरि ओम्

॥ इति प्रायश्चित्तविवरे कल्पकारिकाष्टोत्तशत संपूर्णम् ॥



## ॥ अथ क्रतुसङ्ग्रहकारिकाः ॥

अथाऽग्निष्टोमसंस्थेन ज्योतिष्टोमेन याजयेत् ।
सपूर्वमृत्विजो वृत्वा देवभूमिविनिश्चये ॥ १ ॥
दीक्षणीया निर्वपेत्स पत्नीसंयाजसंस्थिति ।
कृते प्राचीनवंशेऽथ संस्कारा वपनादय ॥ २ ॥
हुत्वा दीक्षाहुती, कार्या दीक्षा कृष्णाजिनादिभि. ।
दीक्षितो नियमैर्युक्तो भवेत् क्षीरव्रतादिभि ॥ ३ ॥
द्वादशाहं दीक्षितोऽथ भिक्षित्वा द्रव्यमानयेत् ।
सोमञ्चर्मण्य वस्थाप्य विन्यसेत्सोमविक्रयी ॥ ४ ॥
शम्ब्वन्ता प्रायणीया स्यात् गृह्णीयात्क्रयणीपदम् ।
क्रीत्वा सोम रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत् ॥ ५ ॥
आतिथ्या निर्वपेत्सोममासन्द्यामुपसादयेत् ।
आतिथ्येष्टिरिडान्तास्या तानूनप्त्रमवद्यति । ६ ॥
दीक्षामवान्तरामेति प्रवर्ग्योपसदो कृति ।
दिनत्रये तत्कृत स्याद्वेदिर्मध्यन्दिने भवेत् ॥ ७ ॥
षट्त्रिंशत्पददीर्घेपा प्राग्वंशात्पूर्वत स्थिता ।
प्रात. प्रवर्ग्यमुद्वास्य पश्चादुत्तरवेदितः ॥ ८ ॥
शकटे द्वे हविर्धाने हविर्धानञ्च मण्टपम् ।
पश्चात्सदः तस्य मध्ये निखातोदुम्बरीमिता ॥ ९ ॥
दक्षिणस्यानसोऽधस्ताद्गर्तानुपरवान्खनेत् ।
विधाय फलकाम्यान्नानग्रे कुर्यान्मृदा खरम् ॥ १० ॥

निर्वपेद्धिष्ण्यगानग्नीषोमीय पशुमाचरेत् ।
प्रयुज्योचितपात्राणि दर्शवत्सर्वमाचरेत् ॥ ११ ॥
आज्य आसादिते वेद्या अन्ते यूप समुच्छ्रयेत् ।
यूपस्योच्छ्रयणादूर्ध्वं समाप्य पशु तत ॥ १२ ॥
वैसर्जनानि हुत्वाऽग्नि सोम ग्रावादि चानयेत् ।
हविर्धाने स्थापयित्वा गृह्णीयाद्वसतीवरी ॥ १३ ॥
प्रयुञ्ज्यात्सोमपात्राणि महारात्रे खरादिषु ।
प्रावस्तुत्स्थापिते सोमे पक्षिणा ध्वनित पुरा ॥ १४ ॥
स्यात्प्रातरनुवाकार्थमुपाकरणमादरात् ।
वसतीवर्यपां प्राप्तौ प्रचार स्याद्धविग्रहे ॥ १५ ॥
उपांश्वदाभ्यौ हुत्वाऽथ महाऽभिषवमाचरेत् ।
उपांशुमन्तर्यामञ्च हुत्वाऽरिक्तन्तु सादयेत् ॥ १६ ॥
अथैन्द्रवायव पात्रे गृहीत्वा सादयेत्खरे ।
यो मैत्रावरुणन्तत्तु श्रीणाति पयसा ग्रहम् ॥ १७ ॥
शुक्र स्मृतो हिरण्येन स्मृतो मन्थी तु सक्तुभि ।
गृहीत्वाऽग्रयण गृह्णात्यतिग्राह्याभिधग्रहान् ॥ १८ ॥
गृहीत्वोक्थ्य ध्रुवोग्राह्य पवमानग्रहास्त्वय ।
पूतभृद्द्रोणकलशोपराञ्चाधवनीयक ॥ १९ ॥
ते वहिष्पवमानाय प्रश्नयन्त्यत्र पञ्च ते ।
गृहीत्वाश्विनमाग्नेयपशो कुर्यादुपाकृतिम् ॥ २० ॥
सवनीयपुरोडाशैश्चरित्वा ह्यैन्द्रवायवम् ।
हुत्वा ग्रह द्वयोर्मैत्रावरुणाश्विनयोर्हुति ॥ २१ ॥

शुक्रमन्थादिकान् कृत्वा चमसानपि जुह्वति ।
सरव्यर्तुग्रहेन्द्राग्निमोमप्रतिगरस्तत ॥ २२ ॥
आज्यस्तोत्रेभ्य ऊर्ध्वं हि प्रात सवन सस्थिति ।
माध्यन्दिने तु सवने पुरोडाशा पशोर्भवेत् ॥ २३ ॥
ग्रहो मरुत्वतीयस्यात्पवमानेन सस्तुति ।
दधिघर्मे हुते दद्याद्दक्षिणास्ते यथायथम् ॥ २४ ॥
मरुत्वतीयांस्तान् हुत्वा माहेन्द्रेण समाप्यते ।
तृतीयसवनारम्भमादित्यग्रहमाचरेत् ॥ २५ ॥
आर्भवेण स्तुधीताथ पश्वङ्ग प्रचरत्ययम् ।
सावित्रवैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा ॥ २६ ॥
पात्नीवतग्रहादूर्ध्वं यज्ञायज्ञीय सस्तव ।
आग्निमारुतशस्त्र स्यादगृह्णीयाद्धारियोजनम् ॥ २७ ॥
समाप्ते सवने पश्चात्कुर्यादवभृयन्तत ।
कुर्यादुदयनीयेष्टिं अनुबन्ध्या यजेत गाम् ॥ २८ ॥
दैनिकाग्निर्वपेद्देवसुवासापि यजूष्यथ ।
उपोष्य वेदिमाग्नेयमिष्ट्वाऽग्निष्टोमसंस्थिति ॥ २९ ॥

इति क्रतुसङ्ग्रहकारिका अग्निष्टोमान्तीया समाप्तिमायन् ॥॥

—●—

## ॥ अथ मन्त्रविनियोगसङ्ग्रहस्ताण्ड्ये ॥

ब्राह्मणप्रथमाध्याये मन्त्राणां विनियोजनम् ।
अत्रादौ वृत उद्गाता महदित्यादिकं जपेत् ॥ १ ॥
देवो गृहाद्विनिर्गत्य दूरङ्गत्वा निहा जपेत् ।
यागभूम्यन्तिकं वद्वा पितरः पितृपस्थितिम् ॥ २ ॥
तृम यूपोच्छ्रितौ मन्त्रौ मृदा वेद्याक्रमे जपेत् ।
रराटीस्पर्शनं विष्णोर्हविर्द्धानमिषे विशेत् ॥ ३ ॥
नवात्र मन्त्रा प्रथमेखण्डे सम्यगुदीरिता ।
युन बाहूत्रयेत्सोमे ऋतस्येत्युपवेशनम् ॥ ४ ॥
ऋतं स्पृशेद्द्रोणकुम्भ वानप्रोहेदमुम्पुर ।
मरु ग्रावः स्पृशेदेषु द्रोणस्याध्यूहन दिवम् ॥ ५ ॥
मृज्याद्धस्ताद्दशप्रोण पवि द्रोणे पट क्षिपेत् ।
प्रसु धाराञ्जपेदत्र[1] नवमन्त्रा उदीरिता ॥ ६ ॥
कुर्यु प्रवृतहोमौ द्वौ वेक्तु सर्वं इति द्वयात् ।
तृणाऽपसरणं योऽद्य योम स्याद्युपवेशनम् ॥ ७ ॥
अग्नेरिति स्तोमयोगे ह्यत्रमन्त्र जपेद्द्वयम् ।
स्वामिनं वाचयेच्छ्येन संवर्चसा प्रेक्ष्य जपेत् ॥ ८ ॥
उपस्थान नमः सूर्यं दशमन्त्रा [2]इहेरिता ।
अध्याऽऽदित्ये ह्युपस्थान सम्राडा–हवनीयके ॥ ९ ॥

1. द्वितीये खण्डे । 2 तृतीये खण्डे ।

तुथोऽस्याऽस्त्रावदेशे स्याच्चात्वाले तु नभोऽसि हि ।
असंमृष्टोऽसि शामित्रं आग्नीध्रीये विभूरसि ॥ १० ॥

होतुर्द्धिष्ण्ये वह्निरसि स्वा मैत्रावरुणीयके ।
तु ब्राह्मणाच्छंसिके स्यादुशिक् स्यात्पोतृधिष्ण्यके ॥ ११ ॥

नेष्टृकेऽङ्गारिरच्छावाकेऽवस्युरसीत्यथ ।
दुहस्युर्मार्जालीय औदुवर्यां स्यादृतधेतिहि ॥ १२ ॥

समुद्रो ब्रह्मणः स्थाने अहिः प्राजहिते भवेत् ।
स्याद्गार्हपत्येऽजोसीति सगरा दक्षिणाग्निके ॥ १३ ॥

कव्यो दक्षिणवेद्यन्ते पातमा सर्वसंहृतो ।
चतुर्थखण्डे मन्त्राणां विंशतिः समुदीरिता ॥ १४ ॥

ऋतमृज्याद्वारबाहू मामेत्यन्तः प्रवेशनम् ।
नम दस्युपधिष्ण्याय श्येनश्चमसवीक्षणम् ॥ १५ ॥

इन्द्रो द्विर्भक्षयेद्दृष्ट्वौ मुख्यच्छिद्राणि सस्पृशेत् ।
सोमरा हृदयस्पर्शः सोमगीर्व्याभिमामृशेत् ॥ १६ ॥

चमसं पूरयेदाप्याऽयमैरथात्त्रिमन्त्रतः ।
दीक्षायै स्तोमभागोऽयं भवेन्मन्त्रचतुष्टयात् ॥ २७ ॥

वायुर्माध्यन्दिने योगो धूपकः स्वामिवाचनम् ।
इन्द्रो भक्षस्तोमयोगः सर्वेषु सवने भवेत् ॥ १८ ॥

स्वरोसि वाचयेदिन्द्रो कुर्याच्चमसभक्षणम् ।
आयुः सौम्यं चरु पश्ये धर्मे तत्र विकल्पयेत् ॥ २१ ॥

येन सौम्यस्य संस्पृष्ट्वाऽङ्गुलिभ्यामक्षिमाज्जनम् ।
पञ्चविंशति मन्त्राः स्युः पञ्चमे खण्ड ईरिताः ॥ ३० ॥

ऐन्द्र मन्त्रे स्तोमभक्षः स्तुतस्य स्तोमविवाचनम् ।
हृष्टसन्धो स्तोमभक्षश्रुतस्य स्तोममोचनम् ॥ २१ ॥

सोमेन निर्गमः सूर्यस्योपस्थानं सुभूरिति ।
अपां द्वाभ्यामाहुती द्वे धानाभक्षो हारियोजने ॥ २२ ॥

देवाऽष्टौ शकले होमा अप्सुधौ चमसं स्पृशेत् ।
मधु पाणीनुपधाय चमसोदसेचनं श्रमत् ॥ २३ ॥

कामाभ्यावर्तयेदेतत् ऊर्णास्तुकुरसि क्षिपेत् ।
प्राणेति मुखसंस्पर्शो वयोति वधिमज्जयेत् ॥ २४ ॥

चतुर्विंशतिमन्त्रास्तु षष्ठे खण्डे प्रकीर्तिताः ।
साश्वं रथं दक्षिणार्थं प्रतिगृह्णन्ति चेत्तदा ॥ २४ ॥

मृज्यादश्वमुखान्यश्वनामयुग्मचतुष्टयम् ।
रथोर्ध्वस्पर्श आदित्याः वायोश्चर्म्मं प्रतिग्रहे ॥ २६ ॥

अस्थि प्रतिग्रहे नक्ष सूर्ये लोहप्रतिग्रहे ।
रथेति दक्षिणे चक्रे स्पर्शो वामेत्यधिष्ठितौ ॥ २७ ॥

बृहदित्युत्तरे चक्रे चक्रावंकेति संस्पृशेत् ।
वंश्वारथं समारोहे गिरेत्यदा स्थिरोजपेत् ॥ २८ ॥

कृशा यच्छेत्सव्यरज्जुं स्पृशेद्वासेति दक्षिणम् ।
मन्त्रास्तु सप्तमे खण्डे षोडशेत्यवगम्यताम् ॥ २९ ॥

पुरस्तात्सर्वमन्त्राणां देवस्यत्वेत्यमुञ्जपेत् ।
षष्ठोर्ध्वादयो मन्त्राः क्रमात्तत्प्रतिग्रहे ॥ ३० ॥

अश्वो गौरथज स्वर्णमजाऽविर्वसनाङ्गिरा ।
उष्ट्रो मृगश्च पुरुषो हस्तिवरा व्रीह्यादयः ॥ ३१ ॥
तिला अश्वतरे मन्त्र क इत्यन्त जपेदथ ।
[1]अष्टादशात्र मन्त्रा स्युरष्टमे खण्ड ईरिता ॥ ३२ ॥
रश्मिरित्याद्[2]यस्तोम भागास्तैरनुमन्त्रणम् ।
कुर्यात् क्रमेण स्तोत्राणां वै त्रयस्त्रिंश ईरिता ॥ ३३ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्यात् विद्यातीर्थमहेश्वरः ॥ ३४ ॥

इति मन्त्रविनियोगसङ्ग्रह ॥ ❀ ॥

---

1 अत्र देवतानामनिर्देशेन तत्तद्पठित मन्त्रा ऊहनीया ।
तेनाष्टादशत्व सपूर्तिक्तप्रकारेण कार्या ॥

2 एते मन्त्रा सप्तस्तोमभागेषु आगता मता नवमदशमखण्डयोः पठ्यन्ते । अत्र खण्डद्वय रश्मिरसीत्येक खण्डः सम्पुरसीत्यर । तयोराम्नाता॰ मन्त्रा स्तोमान् भजन्त इति स्तोमभागा उच्यन्ते ।



॥ श्रीः ॥

# क्रतुमाला

## कल्पभाष्योक्तानि क्रमात् क्रतूनां नामानि

एकाहाः
अग्निष्टोमः
ज्योतिष्टोमः
गोष्टोमः
आयुष्टोमः ॥
त्रयस्त्रिकद्रुकाः
अभिजित्
विश्वजित्
सर्वजित्साम्नक
महाव्रतम् ॥

चत्वारः साद्यस्काः
ज्योतिः
सर्वज्योति
विश्वज्योति
साद्यस्तोमः इति ॥

षट् साद्यस्काः
प्रथमसाद्यस्क
द्वितीयसाद्यस्कः
तृतीयोगिरसामनुक्रीः
विश्वजिच्छिल्प
श्येनः
एकत्रिकः ॥

चत्वारो व्रात्यस्तोमाः
चतुष्षोडशी
षट्षोडशी
द्विषोडशी
शमनीचामेढ्राणां स्तोम इति ॥

षडग्निष्टुतः
त्रिवृज्ज्योतिष्टोमौ
स्वर्कवारवन्तीयौ
त्रिवृदग्निष्टोमः
पशुकामाग्निष्टुत्
ज्योतिष्टोमाग्निष्टुत्
अन्नाद्यकामाग्निष्टुत् इति ॥

चत्वारस्त्रिवृतोऽग्निष्टोमाः—
प्रजापतेरपूर्वः
बृहस्पतिसवः
इषुः
सर्वस्वार इति ॥

सौमिकचातुर्मास्यानि
त्रिवृदग्निष्टोमो वैश्व देवस्य लोके
वरुणप्रघासानां लोके द्विद्विवः
साकमेधानां लोके द्विद्विवः

शुनासीर्यस्य लोके ज्योति-
ष्टोम इति ॥

सप्तदशाष्टपट्

तेषा उपहव्य प्रथम
ऋतपेयो द्वितीय
दूणाशस्तृतीय
वैश्यस्तोम चतुर्थ
तीव्रसुत्पञ्चम
वाजपेय षष्ठ इति ॥

अथ राजसूय.

अभ्यारोहणीय
अभिषेचनीय
दशपेय
केशवपनीय
व्युष्टिद्विरात्र
क्षत्रस्य धृतिरिति
राट
विराट्
औपशद
सार्वतोमुख
पुनस्तोम
पूर्वश्चतुष्टोम
उत्तरश्चतुष्टोम
उद्भित
बलभित्
अपचित
द्वितीयोपचिति
पक्षिस्तोम.
द्वितीय पक्षिस्तोम
ऋषभ
गोसव:
मरुत्स्तोम
इन्द्राग्न्यो कुलाय
इन्द्रस्तोम
इन्द्राग्न्योस्तोम
विघन
द्वितीयो विघन
सन्दश
वज्र

अथाहीना

त्रयोदशातिरात्र
ज्योतिष्टोमातिरात्र
सर्वस्तोमातिरात्र
सर्वपृष्ठाप्तोर्याम,
नवसप्तदशातिरात्र
विषुवदतिरात्र
गोष्टोमातिरात्र
आयुष्टोमातिरात्र
अभिजिदतिरात्र:
विश्वजिदतिरात्रा

त्रिवृदतिरात्रः
पञ्चदशातिरात्र.
सप्तदशातिरात्रः
एकविंशतिरात्र इति ॥

द्विरात्रास्त्रयः

अंगिरसां द्विरात्र.
चैत्रद्विरात्रः
कापिवन द्विरात्र इति ॥

त्रिरात्राष्षट्

गर्गत्रिरात्रः [शवलीहोमः]
अश्वत्रिरात्र
वैदत्रिरात्र
छन्दोमपवमान त्रिरात्रः
अन्तर्वसुत्रिरात्रः
पराकत्रिरात्र इति ॥

चतूरात्राः चत्वारः

अत्रेश्चतुर्वीरचतूरात्रः
जामदग्न्य चतूरात्रः
वसिष्ठस्य संसर्पचतूरात्र
वैश्वामित्र चतूरात्र इति ॥

पञ्चरात्रास्त्रयः

देवानां पञ्चरात्रः
अयमेव अभ्यासंग इत्युच्यते
पञ्च शारदीयपञ्चरात्रः
व्रतमध्यक पञ्चरात्र इति ॥

षडहास्त्रय.
ऋतुषडहः
आयुष्कामषडहः
पृष्ठ्यावलम्ब्यषडहः इति ॥

सप्तसप्तरात्राः

सप्तर्षिसप्तरात्रः
प्राजापत्यसप्तरात्रः
पशुकामसप्तरात्रः
जामदग्न्यसप्तरात्र
ऐन्द्रसप्तरात्रः
जनकसप्तरात्रः
पृष्ठ्यहोमसप्तरात्रः इति ॥
एकोऽष्टरात्रः

नवरात्रौ द्वौ

आयुष्कामनवरात्र.
पशुकामनवरात्रइति ॥

चत्वारो दशरात्राः

त्रिककुद्दशरात्र
कुसुरुविन्ददशरात्रः
छन्दोमदशरात्रः
पूर्वदशरात्र इति
पौण्डरीक एकादशरात्र.

अथ सत्राणि

द्वादशाहो द्विविधः सत्र-
महीनश्चेति । सः प्रत्येक
द्विविधः व्यूढसमूढभेदात् ॥

त्रीणित्रयोदशरात्राणि
सत्रोक्ते द्वे
षड्विंशोक्त तृतीयम्
चत्वारि पञ्चदशरात्राणि
षोडशरात्रमेकं
सप्तदशरात्रमेकं
अष्टादशरात्रमेक इति
एकान्नविंशतिरात्रमेकं
विंशतिरात्रमेकम्
द्वे एकविंशतिरात्रे
द्वाविंशतिरात्रमेकम्
त्रयोविंशतिरात्रमेक
चतुर्विंशतिरात्रे द्वे
तयोः पूर्वं संसदनामक
पञ्चविंशतिरात्रमेक ॥
षड्विंशतिरात्रमेक ॥
सप्तविंशतिरात्रमेक ॥
अष्टाविंशतिरात्रमेक ॥
एकान्नत्रिंशद्रात्रमेक ॥
त्रीणि त्रयस्त्रिंशद्रात्राणि
चतुस्त्रिंशद्रात्रमेक ॥
पञ्चत्रिंशद्रात्रमेकं ॥
षड्त्रिंशद्रात्रमेकं ॥
सप्तत्रिंशद्रात्रमेक
अष्टत्रिंशद्रात्रमेक ॥
एकान्नचत्वारिंशद्रात्रमेक ॥
चत्वारिंशद्रात्रमेक ॥

सप्त एकान्नपञ्चाशद्रात्राणि ॥
विधृतिः
यमातिरात्रः
अञ्जनाभ्यञ्जना
संवत्सरसंमिताः
सवितु ककुभः
प्रतिष्ठा(का)मसत्रं
सप्तमेकान्नपञ्चाशद्रात्राम् ॥
एकषष्टिरात्रमेकं ॥
शतरात्रमेकम् ॥
गवामयन-एकषष्ट्युत्तरा- -
त्रीणि शतानीत्येके
आदित्यानामयनं
अंगिरसामयन
दृतिवातवतोरयनं
कुण्डपायिनामयन
तापश्चितामयन
प्रजापतेर्द्वादशसंवत्सर
शाक्त्यानां षट्त्रिंशत्संवत्सर
साध्यानां शतसंवत्सर
सहस्रसाव्यम्
द्वे सारस्वतामयने
इन्द्राग्न्योरयनम्
द्वार्षद्वतम्
तुरायनं
सर्पसत्रं
त्रिसंवत्सरा(णा)मयनम्
प्रजापतेस्सहस्रसंवत्सर
विश्वसृजामयनम् ॥

॥ आहृत्य १८० यागा विधीयन्ते ॥

## द्राह्यायणसूत्रे अकाराद्यनुक्रमणिका

C

D

I

⩺০⩹

# द्राह्यायणसूत्रशुद्धाशुद्धपत्रम्

| पृष्ठ | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 13 | 19 | यन | धति |
| 29 | 18 | वान् | वन |
| 39 | 11 | गीर | गिर |
| 45 | 14 | तेये | तीये |
| 47 | 5 | सुख्य | सुख्या |
| 54 | 13 | मवा | माना |
| 63 | 10 | काम | काल |
| 96 | 5 | मुये | मुनि |
| 136 | 12 13 | अनु | धनू |
| 140 | 10 | नाभि | भभि |
| 162 | 17 | पपम | पन्न |
| 172 | 20 | मत | महामत |
| 198 | 15 | रश्मि | रश्मि |
| 219 | 11 | मवी | पवतो |
| 296 | 9 | सान | लान |
| 303 | 10 | यन | यतन |
| 309 | 1 | एका | द्वा |
| 311 | 4 | पनु | धनु |
| 348 | 1 | कव | वय |
| 447 | 19 20 21 | 1 | 2 |